# HAṀSAVILĀSA

OF

# ŚRĪ HAMSAMITTHU

---

Edited by
SWAMI TRIVIKRAMA TIRTHA
and
MAHAMAHOPADHYAYA HATHIBHAI SHASTRI
of
JAMNAGAR

---

**1937**
**Oriental Institute**
**BARODA**

# उपोद्घातः ।

अथ हंसविलासाख्यो ग्रन्थः प्रायेण सङ्ग्रहरूपो नातिप्रसिद्धो यतस्तन्त्रग्रन्थान्तरे स्वतन्त्रतन्त्रतया न क्वापि 'तथाचोक्तं हंसविलासे' इत्येव प्रमाणत्वेनोध्धृतोऽवगम्यते। नातिप्राचीनत्वमप्यत्र हेतुतामञ्चति।

अस्मिन् निबन्धे गद्यात्मकोऽशो हंसकृतिरूपः पद्यात्मकोऽशस्तु सकल आगमादि-ग्रन्थेभ्यः समुध्धृत एवेति न तिरोहितम्। यत्र च हंसेन स्वयं निर्माय पद्यानि निहितानि तत्र 'अस्मत्कृत-मिदं पद्यम्' पृ० १९८ पं २८, 'इत्यस्मत्कृतम्' पृ. १९९ पं ३ 'अस्मत्कृतमित्यपि' १९९-७ इत्येव स्पष्टमुट्टङ्कितम्। परंच एवंविधानि पद्यानि पञ्चषस्थानेष्वेवोपलभ्यन्ते न विपुलानि।

तन्त्रेषु मन्त्रजप-यन्त्रार्चन-पाठ-पूजादीनां निरूपणं प्रचुरप्रचारम्। तद्वदत्रापि सन्दृश्यत एव तत्, तथापि मन्त्रमहोदध्यादौ महाविद्योपासनाप्रकारा वर्णितास्तदपेक्षयाऽत्रोपवर्णितानां-मुपासनाप्रकाराणामस्ति वैलक्षण्यं यतोऽत्र सर्वोपचारसमर्पणादिषु भोगप्राधान्यमिति वैशिष्ट्यम्।

एतस्मिन् हंसमिक्षुसम्प्रदाये यन्त्रस्य मूर्तेर्वा प्रतीकत्वार्पणस्थाने केवलं दीक्षितयुग्मानामेव, तत्रापि गुर्वीगुर्वोः प्रतीकताप्राधान्यम्।

हंस-रसिक-शिवेत्यादीनि दीक्षितोपासकाभिधानानि, हंसी-रसिका-शिवाप्रभृतीनि च दीक्षि-तोपासकस्त्रीनामानि निर्दिश्यन्ते। रसशब्दार्थे च आनन्द-सुख-तृप्ति-निवृत्ति-शान्त्यादिसंविदां समावेशो मन्यते, तादृशरससम्पादनाय क्रियाऽनुष्ठानं रासशब्दापरपर्यायमुपासनं भण्यते।

यद्यपि आगमान्तरेषु निरूपितं श्रीनगर-सुधासिन्धु-कल्पवृक्षोद्यानमणिद्वीप-कदम्बोपवन-चिन्तामणिप्रासाद--ब्रह्मविष्णुरुद्रेश्वरात्मकपादचतुष्टयावष्टब्ध--शिवाकारमञ्च--परमशिवपर्यङ्कादि श्रीविद्योपासनौपयिकमत्रापि महता विस्तरेण निरूपितं परन्तु प्राधान्यं तु रासार्चनापरपर्यायस्य रासयागस्यैवोपवर्ण्यते। तथा च समग्रग्रन्थस्य मुख्यत्वेन प्रतिपाद्यपदवो रहस्यरास एवाधिष्ठतीति गम्यते।

तन्त्रान्तरेषु उपासनाराधनासपर्यानुष्ठानादिषु सर्वत्रोपचारसमर्पणस्य यादृक् क्रमो भवति दृष्टिगोचरस्तदपेक्षया एतस्मिन् ग्रन्थे रासार्चनविधावासनाद्युपचारसमर्पणक्रमोऽन्यादृश एवा-वगम्यते।

राजोपचारक्रमेऽपि छत्रचामरादिभिः सार्धं नृत्यगीतयोरपि तन्त्रान्तरेषु परिगणनमुपलभ्यते किन्तु अनेन ग्रन्थप्रणेत्रा सङ्गतिग्रहावश्यकतामनपेक्ष्यैव प्रसक्तानुप्रसक्तविधया छन्दोविचिति रसभावालङ्कारलाट्यादि-रीतिकाव्यगुणदोषादीनां निरूपणे पुष्कलोऽङ्गीकृतः श्रमः। तदपि सकल रासपदार्थान्तर्गतमिति मत्वैव।

एवं रासत्वावच्छिन्नरासस्य प्रवृत्तिनिमित्ततायामन्तर्भाव्य तृतीय-पुरुषार्थप्रतिपादक-वात्स्या-यनीयशास्त्रस्यापि भूयान्विषयश्चर्चितः।

अथ हंसमिक्षुः कस्मिन् काले देशे च समजनि इत्येतद्विचारणायामपेक्षितं किञ्चिद् ग्रन्थप्रणेत्रा स्वयमेवाऽस्मिन्निबन्ध एव तृतीयपृष्ठे न्यरूपि तद्यथा--

श्रीशिवशक्त्योरनुग्रहाद् गुर्जरदेशे १७९४ मिते वैक्रमेऽब्दे फाल्गुने सुदि १९ दिने मध्यान्ह समये कृपारामनाम्नो भूमिदेवात् सूरीनाम्न्या मातुरुदरात् हंसस्य जनिरजनि। तस्मिन्नेवानेहोऽवसरे जीवनाम्न. पितू रामकुमारीनाम्न्या मातुरुदरादवतीर्णा हंसी। हंसस्य मिठुरिति हंस्याश्च भूली इति च नामनी ससंस्कारं प्रवृत्ते।

सामवेदीयविधानेन पञ्चवर्षीयस्य हंसस्योपनयन विहित, गायत्रीमन्त्रोपदेशादनन्तरं तज्जपनिष्ठस्य हंसस्य सावित्रीप्रसादादेवाचिरेण श्रीविद्याप्राप्तिरभूत्। तावति कालात्यये मिठुशुक्लाभिधस्य हंसस्य भूलीनाम्न्या द्वादशवर्षदेशीयया वयस्यया हंस्या साकमभूत्परिणयविधि। तत आरभ्याषोडशवर्ष काकक्रीडया कालो व्यतीतः। सप्तदशे च वर्षेऽकस्मादेव कस्माच्चिन्निमित्तात् हंसस्य वैराग्यमाविरभूत्। धिक्कुर्वन् स्व शरीरादि परित्यज्य स्त्रिय कृतमतिर्देहत्यागायाययौ काशीम्। तत्र चागमादिरहस्य शृण्वतोऽपि तस्य न मनस्तोषमभजत। ततश्च प्रस्थाय वाराणस्याः श्रीविन्ध्यवासिनीमभिप्रपन्न। अत्र केनचिद्दयालुना परमहंसेन स्वामिना आत्मरहस्योपदेशः कृतस्तत्प्रभावात्तस्याविरासीदात्मनि हंसभावना, तया च सञ्जातालम्भावः प्रत्यावृत्य गृहान्प्रसन्नोऽन्तःकरणो हंस्या साक स्थित., प्रत्यैक्षत च स्वस्येव हंस्या अपि विरक्तयाविर्भावम्। एकदा रहसि हंस्या प्रदर्शिते विरक्त्युन्मुखत्वे कृतकृत्यंमन्यो धन्योहमिति मन्यमानः 'आवयोरिदानी तिरस्करिणीमोहपटजन्याभीति. परास्तेति' गृहिणीमभिननन्द। अन्येद्यु प्रातरेव स्नातानुलिप्ता ता सविधमावेश्य तस्यै पारमहंस्यरहस्यविद्यामुपदिदेश। तत आरभ्य परमहंसनाथगुरो. प्रसादेनोभावपि राजयोगानन्दमनुभवन्तौ बहूनि मिथुनानि प्रबोधयन्तौ प्रश्नप्रतिवचनरूपमेतच्छास्त्र प्रकटितवन्तौ।

एव गृहाश्रम एव श्रीरासोत्सवानन्दान् रसयन्तौ परात्मपद प्रतिपेदाते। आतश्च निबन्धोऽय हंसीहंसयो. प्रश्नोत्तरात्मक. प्रभूताना तान्त्रिकविषयाणा प्ररूपणाभिः परिपूर्णः पारिभाषिक पारमहंस्यापादनविधया रहस्यरासस्य पारम्यप्रतिपादनाया पर्यवस्यतीति। एतेनापि हंसेन—अत्र ३१७ पृष्ठे 'अङ्गने!' इति हंसी सम्बोध्य 'अस्मदादिषु तु' इति 'तु' शब्देन पूर्वनिरूपितोपचारपारम्परी व्यावर्त्य 'उल्लासाय प्राणाप्यायनार्थं च सर्करामिश्र क्षीर, शीतलं सुवासित च नीरम्। + + + किमु कटमदोत्पादकैः सुरासवित्सोमाद्यैः' इत्यादिना 'विप्राः क्षोणिभुजो विशस्तदितर क्षीराज्यमध्वासवै'रिति—पञ्चस्तवीकारप्रवर्त्तितव्यवस्थामनुरुन्धानेन स्वरस प्रकटीकृतः।

संस्कर्त्ता।

# श्रीहंसविलासस्य विषयानुक्रमणिका ।

अनुक्रमणिका पूर्णा ॥

॥ ॐ श्रीमदर्द्धनारीश्वरमूर्त्तये नमः ॥




ब्रह्मविलोडितनिर्मलसहस्रपत्राब्जकर्णिकान्तःस्थे ।
हंसमयरत्नपीठे रक्तं शुक्लं गुरोः पदं वन्दे ॥ १ ॥
वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥ २ ॥
पञ्चदशभिश्च दशभिः प्राकारैस्तुङ्गगोपुरैर्जुष्टम् ।
प्रतिशालचतुर्द्वारं श्रीनगरं नौमि सर्वशक्तिगृहम् ॥ ३ ॥
सच्चिदानन्दनिलयं परापरमकारणम् ।
शिवाद्वयप्रकाशाढ्यं श्यामलं धाम धीमहि ॥ ४ ॥

## ॥ श्रुतिः ॥

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।

धियो यो नः प्रचोदयात् ॥ ५ ॥

अस्यास्तु व्याख्या । यः सविता सर्वान्तर्यामितया प्रेरकः परमशिवः देवः नः अस्माकं धियः मोक्षविषया बुद्धीः प्रचोदयात् प्रेरयेत् ॥ तत् तस्य देवस्य स्वयं द्योतमानस्य सवितुः सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः श्रीपरमशिवस्य तत् तादृशं वरेण्यं सर्वैरुपास्यतया ज्ञेयतया च सम्भजनीयं भर्गः । अविद्या तत् कार्ययोर्भर्जनात् भर्गः । स्वयं ज्योतिः परब्रह्मात्मकं तेजः धीमहि वयं ध्यायामेत्यर्थः ॥ ५ ॥

## ॥ गीतायाम् ॥

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥
ललिताविभूषिताङ्गो ललिताकारो नवारुणच्छायः ।
श्रीचक्रनगरसम्राट् श्रीमान् कामेश्वरः सदा पातु ॥ ७ ॥
श्रीश्रीनगरगतानां शक्तीनामेकनायिका जीयात् ।
श्रीललितापरमेशी सम्मितसिंहासनैकसाम्राज्ञी ॥ ८ ॥

त्रैलोक्यमोहन, सर्वाशापरिपूरक, सर्वसंक्षोभण, सर्वसौभाग्यदायक, सर्वार्थसाधक, सर्वरक्षाकर, सर्वरोगहर, सर्वसिद्धिप्रद, सर्वानन्दमयचक्र, समुन्मिषत् प्रकट, गुप्त, गुप्ततर, सम्प्रदाय, कुलकौल, निगर्भ, रहस्यातिरहस्य, परापररहस्य, परिवृतत्रिपुरा, त्रिपुरेश्वरी, त्रिपुरसुन्दरी, त्रिपुरवासिनी, त्रिपुराश्री, त्रिपुरमालिनी, त्रिपुराम्बा त्रिपुरासिद्धा, त्रिपुरभैरवी, चक्रनायिका वन्दितचरणकमला महानित्या, श्रीचक्रेश्वरी, सर्वमन्त्रेश्वरी, सर्वविद्येश्वरी, सर्ववागीश्वरी, सर्वपीठेश्वरी, सर्वतत्वेश्वरी, सर्वजगदुत्पत्तिस्थितिसंहारमातृका, श्रीपुरुषोत्तम, परमशिवार्धाङ्गात्मिका, श्रीराजराजेश्वरी पराशक्तिः सर्वानन्दमयचक्रे परापररहस्या विजयते ॥

अथास्य जगत पारे निरावरणं ज्योतिर्मण्डलं निगमानामप्यगोचरं श्रीनगरमस्ति ॥

तत्र परब्रह्मपूर्णानन्दधामार्द्धनारीश्वरनामकं च कश्चिद्विद्यते ॥

अथैकदा 'एकोऽहं नानारूपो भूत्वा क्रीडेयमि'त्युत्थित सङ्कल्पस्तस्मात् ।

श्रुतयोऽप्येवं वदन्ति ।

तदैक्षत । स ईक्षाञ्चक्रे ।

एकोऽहं बहुस्यामित्यादयः । तदैव तस्या श्रीपराशक्तेरुल्लासरूपं तत सैवावरणविक्षेपज्ञानेच्छाक्रियानिरोधाद्यनेकरूपिणीव विराजिता । इत्थमनन्तशक्तिस्वरूपिण्या श्रीपराशक्त्या क्रीडत श्रीपरमाशिवात् अनेकशक्तिमदव्यक्तनामकं कश्चिदाविर्भूतम् । ततोऽयं प्रपञ्चो वक्ष्यमाणप्रकारेण स्फुरित. । एष तत्वप्रपञ्च क्षर इत्युच्यते ॥ गीतायां च ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत इति ॥

ननु कथमक्षरत' क्षर ? । कारणानुरूपं कार्यमिति सत्यम् । अतर्क्यैश्वर्य श्रीपरमशिव' । अक्षरात्क्षरं चेतनाज्जडमित्यत्र नाप्रतर्क्यमहिम्नि वितर्काणामवकाशः ॥ श्रुति –'नैषा तर्केण मतिरापनेया' इत्यादिः । स्मृतिरपि ।

'अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत् ।
प्रकृतेस्तु परं यच्च तदचिन्त्यस्य लक्षणम् ॥

इति । कर्त्तुमकर्त्तुमन्यथाकर्त्तुमुपकर्त्तुं प्रतिकर्त्तुमित्याद्यनन्तशक्तित्वात् श्रीपरमशिवविलासे का विचिकित्सा ? । इत्थं नानारूपं परब्रह्मार्धनारीश्वराभिख्यं खेलतीति दिङ्मात्रम् । सर्वदैव श्रीनगरे श्रीरासलीलां विरचयतः पूर्णानन्दधाम्न श्रीमदर्धनारीश्वरस्य पार्श्ववर्त्ती प्रियश्च हंसाख्यान्तिक कश्चित्सेवक स्थित । एकदा तु श्रीशरदुत्सवसमयेऽनेकशक्तिमण्डलालङ्कृतः श्रीरासेश्वर श्रीमहाराज्ञी पराशक्तिमपाकृत्यान्याभि श्रीललिताकामेश्वरीनित्यक्लिन्नाकुलसुन्दरी भगमालिनीप्रभृतिभि सह रासविलास कृतवान् । तत सा महाराज्ञी निजधाम प्रति धावन्ती हंसमाकार्य ' रे रे दुष्ट तव स्वामिनः स्वान्तम । किं मयि साहसमि'ति सगद्गदमुदीर्य प्रस्थिता ।

अथ स हस ' भो स्वामिनि ! निमेष स्थीयतां यावत्स्वामिनं निवेद्य पुनरागच्छेयमि' ति सप्रणय प्रार्थ्य स्वामिनः सामीप्यमगमत् । तत्रापि ससम्भ्रमं नत्वा 'भो स्वामिन् ! किमिति श्रीमहाराज्ञी निरस्ते'ति सम्प्रार्थितोऽपि स पुरुषोत्तमस्तमप्यवमत्य तथैव विहृतवान् । किमिद बत लाम्पट्यं यत्परकीयाभि साक स्वीयामवगणय्य विलसनमिति तेन तदाचरणं मनस्याक्षिप्तम् ।

अथ विषण्णमानसं तं हंससेवक निशम्य रे हंस ! चलानीयते सा साम्राज्ञीत्युक्त्वाऽऽत्मन स्कन्धे तामुपवेश्य रासमण्डलमानीता । सोऽपि स्वाभिलषित लब्ध्वा सन्तुष्ट' । अथ समयान्तरे त हंसमाहूय ' रे प्रियशुश्रूषक ! सन्तुष्टोऽहं साम्प्रतं त्वयि । प्रार्थय स्वमनोरथमि'ति विप्रलम्भितः श्रीमहाराजेन स हंस परकीयेति द्वैतभावत्वात् मौग्ध्येन । भोः

स्वामिन् ! भवत्क्षरलीलाविलोकनवाञ्छाऽस्तीति सविनयं प्रार्थयामास । रे रे पुनर्याचयतामित्युदीरिते तदेव याचितम् । तृतीयवारमपि तथैव । तदा तु श्रीपरमशिवेन प्रेमप्राचुर्यात्तस्मैशिक्षापूर्वकं तन्मनोरथो दत्तः । का शिक्षा ।

श्रीपरमहंसः-भोः सखे श्रूयताम् । अस्मदीया सा लीला तु श्रीतिरस्करिणीनाम्न्या महामाययाऽऽच्छादिताऽस्ति । अतस्तत्र तत्प्रभावतो द्वैतभावत्वान्महापत्तिः । श्रुतिश्च- 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादि वक्ति । किञ्च क्षरप्रपञ्चखेलायां श्रीरुद्रविष्णुविधातारोऽस्मत्सखायस्तदाधिपत्येन वर्तन्ते । इतरेऽपि तत्रावतीर्णा अस्मदंशभूताः कोटिशो नानानामरूपा क्षणभङ्गुरशरीरिण श्रुतिस्मृतिपुराणोपपुराणादिनानाप्रपञ्चशास्त्रप्रदर्शितपथिभिर्विचित्रवर्णाश्रमाचरणनिष्ठाः । सुरासुरनरमृगपक्षिपश्वादिलक्षणानि कतिकति कलेवराणि धृत्वा । तत्तत्तनूचितं भोगधनं च भुक्त्वा पुन पाश्चात्यजन्मनि कस्मिंश्चिद्भाग्यवशेन सद्गुरुसमुपदिष्टश्रीरहस्यमार्गमाश्रित्य सच्छास्त्रदर्शितानुष्ठानेन विज्ञातात्मरहस्यतत्त्वा श्रीनगरमिह समासादयन्ति ॥ रे किङ्कर । तदभिलाषवशात्त्वाप्यवतारस्तत्र भविष्यति । किन्त्वस्मत् प्रेम्णा ह्येकेनैवावतारेण त्वं तु श्रीपुरं प्राप्स्यसि । किञ्च भवदुपदिष्टा कतिचनापरेऽपि पाश्चात्यजन्मिनोऽस्मन्निकटमायास्यन्ति । त्वदुपदेशवशेनेतरेऽपि प्राणिनः स्वल्पश्रमा कालान्तरेऽप्यस्मत्पदमासादयिष्यन्ति ॥ अतस्त्वं प्राणिनां प्रबोधनायोज्ज्वलं लभस्व भारतवर्षे सह हंस्या जन्म ॥ अस्मत् प्रसादतस्त्वयिह्यस्मद्रहस्यानुभवोल्लास. स्फुरिष्यतीति । इत्थमादिष्टः स हस सहितो हंस्या सप्रणाम खिन्नमनस्क सुधासमुद्रमुत्तीर्य नत्वा च श्रीतिरस्करिणीमक्षरपद प्राप्त ॥ अथकदाचित्सर्गसमये प्रारब्धवशेन वैरञ्चयविसर्गे श्रीभारतवर्षे गुर्जरजनपदे सम्वत् १७९४ वर्षे फाल्गुनशुक्लपौर्णमास्यां मध्याह्नसमये नरशरीरं लब्धवान् । सा हंस्यप्येकस्मिन्नेवग्रामे नारीलक्षणा प्रादुर्भूता । तत्र तदा शक्तिशिवरश्मिस्वरूपिणौ सुरीकृपारामाख्यौ तस्यजननीजनकौ च रामकुमारीजीबाख्यानिकौ तस्यास्तु मातापितरौ ॥ एवमवतीर्य द्वादशेऽहनिसंस्कारपुरःसरं मातापितृभ्यां समर्पितं मिठ्ठेतिनामभूलीति च ताभ्यां धृतं नाम पातयित्वा तदह्नि पितृभ्यां महानुत्सव कृत । अथ दिवानिश वर्धमान स मिठ्ठ पितृभ्यां पञ्चमे हायने श्रीकुलाचार्यद्वारा सामश्रुतिभिःसह श्रीगायत्र्या सोपवीतमुपदेशितः ॥ गायंतं त्रायत इत्यतस्तया श्रीगायत्र्या त्रात श्रीतिरस्करिणीमोहपटाध्यात् । ततस्तस्या एव प्रसादेन मिठ्ठशुक्लेन स्वल्पाऽभ्यासेन श्रीविद्या समासादिता । अथद्वादशे वत्सरे भूलीतिनाम्न्या श्रीमत्या तया स मिठ्ठो वृत । ततस्तया सार्धं गृहाश्रममाश्रित्याविदितश्रीसामरस्यतत्त्व काकक्रीडया आषोडशवर्षवासरा नीता ॥ सप्तदशे वर्षे तु तस्मिन्नाकस्मिकीविरक्तिरुज्जृम्भिता । ततो वैराग्यवशेन तां त्यक्त्वा धिक् कलेवरमितितदपि त्यक्तुकामः श्रीकैलाससदृशीं स काशीं प्रयात ॥ अथ श्रीकाश्यां कियत्कालमागमोपनिषदाद्युल्लसित च किञ्चित् रहस्यमाश्रुतम् । न ततोऽपि संशयवशात् प्रसन्नहृदयोऽतस्तामप्यपहाय तत्सकाशवर्ति श्रीविन्ध्याद्रिकन्दरान्तर्गतश्रीविन्ध्यवासिनीशक्तिमुपगत । तत्र तु कृततनुत्यागैकतान स मिठ्ठ केनचित् श्रीपरमहंसेन स्वामिनोपदिष्टात्मरहस्यः स्वात्मानं हंसमितिमन्वान स्त्रियं च हंसीमिति प्रमुदितोरस्कः का भीति श्रीतिरस्करिणीमोहपटजन्याऽस्मिन् संसारे श्रीहंसयोरावयोरिति निविडकनैकनिश्चय पुन स्वहंस्या पार्श्वमायातः । तत्रागम्य तूष्णीक स्वीयार्द्धाङ्गरूपिण्या तस्यां भूल्यां विरक्ति प्रत्यैक्षत । कदास्यां सहसा वैराग्यमुत्पत्स्यत इति । अहो-

रात्र लिप्समाने सति मिट्ठे श्रीपरमहंसप्रसादेनैकदैकान्ते विहारवेलायां तया सति श्वासं स्वमनोगतं शुद्धवैराग्य विज्ञापितम् । ततो हृष्ट. स मिट्ठः कृतकृत्योऽहमनयाक्रान्तयेत्यात्मानं कृतार्थं मन्यमान प्रभाते निर्वर्त्तितस्नानसन्ध्यादि सुस्नातां सानुलिप्ता सालङ्कृतां ता स्वाङ्कमुपवेश्य श्रीपारमहंस्यरहस्योपदेशं तस्यै दत्तवान् । अथ श्रीपरमहंसानन्दनाथगुरूपूर्णप्रसादतस्तौ हंसौ श्रीराजयोगं कियत्कालं सैकतानमास्वाद्य कतिचन मिथुनानि च प्रारब्धानुसारेण प्रबोध्य श्रीहंसीद्वारा सप्रश्नप्रत्युत्तर श्रीरहस्यशास्त्रमपि प्रकाश्य मैथुनी सृष्टि वितत्य गृहाश्रम एव यावद्देह श्रीरहस्यमुपास्य अहोरात्र परिपूर्णप्रेम्णाऽऽविष्कृतश्रीरासोत्सवौ श्रीनगरगर्भीदचद्बिन्दुपुर स्फुरच्चिन्तामणिमन्दिरोल्लसत् श्रीरासशालोत्तरदिगुल्लसितात्मपदं . पुनः प्राप्तौ ॥ इति**श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे ग्रन्थावतारहेतु**नाम प्रथमोल्लासः ॥

अथेह खलु श्रीमत्परमशिवसङ्कल्पितानां मुमुक्षूणामानन्दास्वादनोद्यतमानसानां स्त्रीपुंसमिथुनानां योगिगुह्य राजयोगं जिग्राहयिषया मया सकलतन्त्रप्रश्नोत्तर **श्रीहंसविलासो** निरूप्यते ।

क्रूरः कलिर्मतिर्मन्दा स्वल्प मायू रुजोऽधिका ।
चिन्ता शोको वियोगश्च दारिद्र्यं सर्वतो भयम् ॥
एवं प्राया नृलोकेऽस्मिन्महाविघ्ननिरीक्षिता ।
अत स्वल्पशेमुषीसमासाद्या श्रीहंसविलासवाणी प्रियां प्रति प्रकाश्यते ॥

अत्राह प्रिया–भो प्रिय ! विस्तरेण कलेर्लक्षणमुच्यताम् ।
श्रीहस –( स्कन्दपुराणे पुरन्दरं प्रति बृहस्पति )

श्रृणुष्वावहितो भूत्वा वदतो मम साम्प्रतम् ।
रौद्रं कलियुग नाम यत्र कृष्णो जनार्दनः ॥ १ ॥

न श्रृण्वन्ति पितुः पुत्रा न स्नुषा भ्रातरो न च ।
न भृत्या न कलत्राणि यत्र शत्रु परस्परम् ॥ २ ॥

यत्र षोडशमे वर्षे नरा पलितयौवना ।
यत्र द्वादशमे वर्षे गर्भं धारयन्ति चाङ्गनाः ॥ ३ ॥

आयुः परं मनुष्याणां शतसंख्यं सुरेश्वर ।
नागानां च तरूणां च वर्षाणां यत्र नाधिकम् ॥ ४ ॥

द्वात्रिंशद्धयमुख्यानां चतुर्विंशत्खरोष्ट्रयो ।
अजानां षोडश प्रोक्तं शुनां द्वादशसंख्यया ॥ ५ ॥

चतुष्पदानामन्येषां विंशं च पञ्चभिर्युतम् ।
यत्र काकाश्च गृध्राश्च कौशिकाश्चिरजीविनः ॥ ६ ॥

तथा पापपरा लोके दुःखिताश्च विशेषत ।
तद्वत्कण्टकिनो वृक्षा रूक्षा पुष्पफलच्युता ॥ ७ ॥

सेवितास्तेऽपि गृध्राद्यै पत्रच्छायाविवर्जिता ।
यत्र धर्मोह्यधर्मेण पीडित सुरसत्तम ॥ ८ ॥

असत्येन तथा सत्य भूपाश्चौरै सदैव तु ।
गुरवश्च तथा शिष्यै स्त्रीभिश्च पुरुषाधमा ॥ ९ ॥

स्वामिनो भृत्यवर्गैश्च मूर्खैश्चापि बहुश्रुता ।
यत्र सीदन्ति धर्मिष्ठा नरा सत्यपरायणा ॥ १० ॥

दान्ता विवेकिन शान्तास्तथापरहिते रताः ।
आधयो व्याधयश्चैव तत्र पीडा महाद्भुता ॥ ११ ॥

सदैव संस्थिता यत्र साधुपीडनवाञ्छया ।
अल्पायुषस्तथामर्त्या जायन्ते वर्णसङ्करा ॥ १२ ॥

ये केचन प्रजावन्तेस्ते दुःखेन समन्विता ।
न वर्षति घनः काले सम्प्राप्तेऽपि यथोचितम् ॥ १३ ॥

न सस्यं स्यात्सुवृष्टेऽपि कर्षुकस्यापिवाञ्छितम् ।
न च क्षीरप्रदा गावो यद्यपि स्यु सुपोषिताः ॥ १४ ॥

न भवन्ति प्रसूताश्च यत्नेनाऽपि सुरक्षिताः ।
अविकानां तथोष्ट्रीणां यत्र क्षीरप्रशंसकाः ॥ १५ ॥

लोका भवन्ति नि श्रीकास्तथैव च मलिम्लुचा ।
तपस्विनो यत्र शूद्रा शूद्रा धर्मपरायणा ॥ १६ ॥

शूद्रा वेदविचारज्ञा यज्ञकर्मसु चोद्यताः ।
शूद्राः प्रतिगृहीतार शूद्रा दानप्रदास्तदा ॥ १७ ॥

शूद्राश्चापि द्विजैर्वन्द्या शूद्रास्तीर्थपरायणा ।
पञ्चगर्तान् खनन्त्येव मृत्युकाले नराधमा ॥ १८ ॥

वेदविक्रयकर्तारो ब्राह्मणा शौचवर्जिता ।
स्वाध्यायरहिताश्चैव शूद्रास्तन्निरता सदा ॥ १९ ॥

असत्प्रतिग्रहप्राया जिह्वालौल्यसमुत्सुकाः ।
पाखण्डिनो विकर्मस्था परदारोपजीविन ॥ २० ॥

कार्यकारणमाश्रित्य यत्र स्नेह प्रजायते ।
न स्वभावात्सहस्राक्ष कथञ्चिदपि देहिन ॥ २१ ॥

यास्यन्ति म्लेच्छभ.वत्वं सर्वे वर्णा द्विजादय ।
नष्टोत्सवा विधर्माणो योनिसङ्करकारका ॥ २२ ॥

भविष्यन्त्यफलायज्ञास्तथा वेदव्रतानि च ।
नियमा संयमा सर्वे मन्त्रवादास्तथैव च ॥ २३ ॥

तीर्थानि म्लेच्छसम्पर्काद् दूषितानि शतक्रतो ।
स्वप्रभावविहीनानि हीनानि च तथाजलै ॥ २४ ॥

कुत्सिता मन्त्रवादा ये कुत्सिताश्च तपस्विन ।
तत्र ते प्रभविष्यन्ति कुत्सिता ये च मानवा ॥ २५ ॥

सर्वकृत्येषु दु शीला प्रयत्नेनापि रक्षिता ।
भर्त्तार वञ्चयिष्यन्ति कुलीना अपि योषित ॥ २६ ॥

कन्यका प्रकरिष्यन्ति पुरुषै सह सङ्गतिम् ।
कन्यका प्रसविष्यन्ति कन्यकाः सुरतोत्सुका ॥ २७ ॥

निर्दयाश्चापि भूपाला पीडयिष्यन्ति कर्षकान् ।
दण्डयिष्यन्ति निर्दोषान् वित्तलोभान्तरेश्वरा ॥ २८ ॥

वधार्हमपिसम्प्राप्य वित्तलोभान्मलिम्लुचम् ।
सन्त्यक्ष्यन्त्यधमा भूपाः प्राणिद्रोहेऽतिवर्त्तिनम् ॥ २९ ॥

## ॥ श्रीभागवते च ॥

यस्मिँल्लुब्धा दुराचारा निर्दया शुष्कवैरिण. ।
दुर्भगा भूरितर्षाश्च शूद्रदासोत्तरा प्रजा ॥ ३० ॥

यस्मिन् क्षुद्रदृशोमर्त्या क्षुद्रभाग्या महाशनाः ।
कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसती ॥ ३१ ॥

दस्यूत्कृष्टा जनपदा धम पाखण्डदूषिता ।
राजानश्च प्रजाभक्षा शिश्नोदर-परायणा ॥ ३२ ॥

अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिन ।
तपस्विनो ग्रामवासा न्यासिनो ह्यर्थलोलुपा ॥ ३३ ॥

ह्रस्वकाया महाहारा भूर्यपत्या गतह्रिय ।
स्त्रिय. कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥

पणयिष्यन्ति वै क्षुद्रा किराटा' कूटकारिण ।
अनापद्यपि मस्यन्ते वार्त्तां साधुजुगुप्सिताम् ॥ ३५ ॥

पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम् ।
भृत्यं विपन्नं पतयः कौलङ्गाश्चापयस्विनी ॥ ३६ ॥

पितृभ्रातृसुहृज्ज्ञातीन् हित्वा सुरतसौहृदा ।
ननान्दृश्यालसम्वादा दीनाः स्त्रैणा कलौ नराः ॥ ३७ ॥

शूद्राः प्रतिग्रहिष्यन्ति तपोवेषोपजीविनः ।
धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥

नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्षिता ।
निरन्ने भूतले राजन्ननावृष्टिभयातुरा ॥ ३९ ॥

वासोऽन्नपानशयनव्यवायस्नानभूषणै ।
हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजा ॥ ४० ॥

कलौ काकिणिकेऽप्यर्थे विगृह्यत्यक्तसौहृदा ।
त्यक्ष्यन्ति हि प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥ ४१ ॥

न रक्षिष्यन्ति तनुजा स्थविरौ पितरावपि ।
पुत्रान् सर्वार्थकुशलान् क्षुद्राः शिश्नोदरम्भरा ॥ ४२ ॥

किन्तु ।

कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुण ।
कीर्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥ ४३ ॥

कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखै ।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ ४४ ॥

इति ।

प्रिये ! प्राणिष्वहोरात्रं पुन पुनर्युगचतुष्टयं प्रवर्तते नो केवलं कलिरेव ॥

**श्रीमद्भागवते ।**

सत्वं रजस्तम इति दृश्यन्ते पुरुषे गुणा ।
कालसञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥ १ ॥

प्रभवन्ति यदा सत्वे मनोबुद्धीन्द्रियाणि च ।
तदा कृतयुग विद्याद्ध्याने तपसि यद्रुचि ॥ २ ॥

यदा कर्मसु काम्येषु भक्तिर्भवति देहिनाम् ।
तदा त्रेता रजोवृत्तिरिति जानीहि बुद्धिमन् ! ॥ ३ ॥

यदा लोभस्त्वसन्तोषो मानं दम्भोऽथ मत्सर ।
कर्मणां चापि काम्यानां द्वापरं यद्रजस्तम ॥ ४ ॥

यदा मायानृतं तन्द्रा निद्रा हिंसाविषादनम् ।
शोको मोहो भयं दैन्य स कलिस्तामस स्मृत इति ॥ ५ ॥

इति **श्रीहंस मिट्ठु विरचिते श्रीहंसविलासे कलिलक्षणकथनं**
नाम द्वितीयोल्लास ॥ २ ॥

रे कान्ते ! प्रोक्तलक्षणेऽस्मिन्कलौ तु बाहुल्येन श्रीकपिलाचार्यप्रदर्शितलक्षणाः प्राणिनो नरकदु खभाजो दृश्यन्ते । सुखिनस्तु क्वचिद्विद्यन्ते नवेत्यवगन्तव्यम् ।

कान्ता –भो कान्त ! किं लक्षणास्ते श्रीकपिलप्रोक्ता प्राणिन ।

श्रीहंस –श्रूयता–**श्रीभागवते** स्वमातर श्रीदेवहूतिप्रति श्रीकपिल ।

तस्यैतस्यजनो नूनं नायं वेदोरुविक्रमम् ।
काल्यमानोऽपिबलिनो वायोरिव घनावलि ॥ १ ॥

एतत् प्राणिनां पारवश्य सूचितम् ।
य यमर्थमुपादत्ते दु खेन सुखहेतवे ।
तं त धुनोति भगवान् पुमान् शोचति यत्कृते ॥ २ ॥

यदध्रुवस्य देहस्य सानुबन्धस्य दुर्मति ।
ध्रुवाणि मन्यते देहात् ध्रुवं क्षेत्रवसूनि च ॥ ३ ॥

जन्तुर्वैभवएतस्मिन् यां यां योनिमनुव्रजेत् ।
तस्यां तस्यां स लभते निर्वृत्तिं न विरज्यते ॥ ४ ॥

नरकस्थोऽपिदेहं वै न पुमाँस्त्यक्तुमिच्छति ।
नारक्यां निर्वृतौ सत्यां देवमायाविमोहित ॥ ५ ॥

आत्मजायासुतागारपशुद्रविणबन्धुषु ।
निरूढमूलहृदयमात्मानं बहु मन्यत ॥ ६ ॥

स दह्यमानसर्वाङ्ग एषामुद्वहनाधिना ।
करोत्यविरतं मूढो दुरितानि दुरत्यय ॥ ७ ॥

आक्षिप्तात्मेन्द्रिय स्त्रीणामसतीनां च मायया ।
रहो रचितयाऽऽलापै शिशूना कलभाषिणाम् ॥ ८ ॥

गृहेषु कूटधर्मेषु दु खतन्त्रेष्वतन्द्रित ।
कुर्वतस्तत्प्रतीकारं सुखवन्मन्यते गृही ॥ ९ ॥

अर्थैरापादितैर्गुर्व्या हिंसयेतस्ततश्च तान् ।
पुष्णाति येषा पोषेण शेषभुग्यात्यध स्वयम् ॥ १० ॥

वार्त्तायां लुप्यमानायामारब्धायां पुन पुन ।
लोभाऽभिभूतो नि सत्त्व परार्थे कुरुते स्पृहाम् ॥ ११ ॥

कुटुम्बभरणाकल्पो मन्दभाग्यो वृथोद्यम ।
श्रियाविहीन कृपणो ध्यायन् श्वसिति मूढधी ॥ १२ ॥

एव स्वभरणाकल्प तत्कलत्रादयस्तथा ।
नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम् ॥ १३ ॥

तत्राप्यजातनिर्वेदो म्रियमाण स्वयम्भृतै ।
जरयोपात्तवैरूप्यो मरणाऽभिमुखो गृह ॥ १४ ॥

आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन् ।
आमयाव्यप्रदीप्ताग्निरल्पाहारोऽल्पचेष्टित ॥ १५ ॥

वायुनोत्क्रमतोत्तार कफसंरुद्धनाडिक ।
कासश्वासकृतायास कण्ठे घुरघुरायते ॥ १६ ॥

शयान परिशोचद्भि परिवीत स्वबन्धुभि ।
वाच्यमानोऽपि न ब्रूते स हि कालवश गत ॥ १७ ॥

एवं कुटुम्बभरणे व्यापृतात्माऽजितेन्द्रिय ।
म्रियते रुदतांस्वानामुरुवेदनयास्तधी ॥ १८ ॥

यमदूतौ तदा प्राप्तौ भीमौ सरभसेक्षणौ ।
स दृष्ट्वा त्रस्तहृदय शकृन्मूत्र विमुञ्चति ॥ १९ ॥

यातनादेह आवृत्य पाशैर्बध्वा गले बलात् ।
नयतो दीर्घमध्वानं दण्ड्यं राजभटा यथा ॥ २० ॥

तयोर्निर्भिन्नहृदयस्तर्जनैर्जातवेपथु ।
पथि श्वभिर्भक्ष्यमाण आर्त्तोऽघं स्वमनुस्मरन् ॥ २१ ॥

क्षुत्तृट्परीतोऽर्कदवानलानिलै
सन्तप्यमान पथि तप्तवालुके ।
कृच्छ्रेण पृष्ठे कशया च ताडित-
श्चलत्यशक्तोऽपि निराश्रमोदके ॥ २२ ॥

तत्र तत्र पतञ्श्रान्तो मूर्छित पुनरुत्थित ।
पथा पापीयसा नीतस्तमसा यमसादनम् ॥ २३ ॥

योजनानां सहस्राणि नवतिर्नव चाध्वन ।
त्रिभिर्मुहूर्तैर्द्वाभ्यां वा नीत प्राप्नोति यातना ॥ २४ ॥

आदीपनं स्वगात्राणां वेष्टयित्वोल्मुकादिभि ।
आत्ममांसादनं क्वापि स्वकृत्तं परतोऽपि वा ॥ २५ ॥

जीवतश्चान्त्राभ्युद्धार श्वगृध्रैर्यमसादने ।
सर्पवृश्चिकदंशाद्यैर्दशद्भिश्चात्मवैशसम् ॥ २६ ॥

कृन्तनं चावयवशो गजादिभ्यो भिदापनम् ।
पातनं गिरिशृङ्गेभ्यो रोधनं चाम्बुगर्तयोः ॥ २७ ॥

यास्तामिस्रान्धतामिस्रारौरवाद्याश्च यातना ।
भुङ्क्ते नरो वा नारी वा मिथ सङ्गेन निर्मिता ॥ २८ ॥

अत्रैव नरक स्वर्ग इति मात प्रचक्षते ।
या यातना हि नारक्यस्ता इहाप्युपलक्षिताः ॥ २९ ॥

एवं कुटुम्बं बिभ्राण उदरम्भर एव वा ।
विसृज्येहोभयं प्रेत्य भुङ्क्ते तत्फलमीदृशम् ॥ ३० ॥

एक प्रपद्यते ध्वान्तं हित्वेदं स्वकलेवरम् ।
कुशलेतरपाथेयो भूतद्रोहेण यद्भृतम् ॥ ३१ ॥

देवेनासादितं तस्य शमल निरये पुमान् ।
भुङ्क्ते कुटुम्बपोपस्य हृतवित्त इवातुर ॥ ३२ ॥

केवलेन ह्यधर्मेण कुटुम्बभरणोत्सुक ।
याति जीवोऽन्धतामिस्रं चरम तमस पदम् ॥ ३३ ॥

अधस्तान्नरलोकस्य यावतीर्यातनादय. ।
क्रमश समनुक्रम्य पुनरत्राव्रजेच्छुचि ॥ ३४ ॥

अत्र प्रेयसी ! भो पते ! पठ्यतां पुनरेतद्विस्तरतः । केन केन कर्मणा क कं नरकं जन्तवो भुञ्जते कति च ते नरका क च तेषांस्थानम् यत्र यमदूतैरितो नीत्वा नानायातना प्रापय्यते । पतिराह । तदप्याकर्णयतु भवती । **श्रीभागवते परीक्षितं प्रति शुकः**--अन्तराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्तात् भूमेरुपरिष्टाच्च जलात् । यस्यामग्निष्वात्तादय पितृगणा स्वानां गोत्राणां परमेण समाधिना सत्या एवाशिप आशासमाना निवसन्ति । यत्र ह वा भगवान् पितृराजो वैवस्वतः स्वविषयं प्रापितेषु संपरेतेषु यथाकर्मदोषमेवानुल्लङ्घितभगवच्छासनः सगणो दमन्धारयति । तत्रैहके**नरकानेकविंशतिं** गणयन्ति । अथतॉस्ते राजन्नामरूपलक्षणतोऽनुक्रमिष्यामः ॥ तामिस्रोऽ१ न्धतामिस्रो २ रौरवो ३ महारौरव ४ कुम्भीपाक ५ कालसूत्र ६ मसिपत्रवनम् ७ सूकरमुख ८ मन्धकूप ९ कृमिभोजनं १० सन्दंश ११ स्तप्तसूर्मि १२ वज्रकण्टकशाल्मली १३ वैतरणी १४ पूयोद १५ प्राणरोधो १६ विशसनं १७ लालाभक्षः १८ सारमेयादन १९ मवीचि २० रयःपान २१ मिति । किञ्च । क्षारकर्दमो १ रक्षोगण भोजन २ शूलप्रोतो ३ दन्दशूको ऽ ४ वटनिरोधनं ५ पर्यावर्त्तनं ६ सूचीमुख ८ मित्यष्टाविंशति नरका विविधयातना भूमय । तत्र यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते । अनशनानुदपानदण्डताडनसन्तर्जनादिभिर्यातनाभिर्यातयमानो जन्तुर्यत्र कश्मलमासादित एकदैव मूर्च्छावेदनामुपयाति **तामिस्र**प्राये ॥ १ ॥ एवमेवान्धतामिस्रे यस्तु वञ्चयित्वा पुरुषं दारादीनुपयुङ्क्ते यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति यथा वनस्पतिर्वृश्च्यमानमूलस्तस्मा**दन्धतामिस्रं** तमुपदिशन्ति ॥ २ ॥ यस्त्विह वा ए

तदहमिति ममेदमिति भूतद्रोहेण केवलं स्वकुटुम्बमेवाऽनुदिनं प्रपुष्णाति स तदिह विहाय स्वयमेव तदशुभे नरके पतति। येत्विह यथैवामुना विहिसिता जंतव परत्र यमयातनामुपगतास्त एव रुरवो भूत्वा तथा तमेव विहिंसन्ति। तस्माद्रौरव मित्याहु। रुरुरिति सर्पादतिक्रूरसत्वापदेश ॥ ३ ॥ एवमेव महारौरवो यत्र निपतितं पुरुषं क्रव्यादानाम रुरवस्तं क्रव्येण घातयन्ति केवलं देहभरम् ॥ ४ ॥ यस्त्विह वा उग्रः पशून् पक्षिणो वा प्राणत उपरन्धयति। तमपकरुणं पुरुषं पुरुषादैरपि विगर्हितममुत्र यमानुचरा कुम्भीपाके तप्ततैले उपरन्धयन्ति ॥ ५ ॥ यस्त्विह पितृविप्रब्रह्मध्रुक् कालसूत्रसञ्ज्ञके नरकेऽयुतयोजनपरिमण्डले ताम्रमये तप्तखले उपर्यधस्तादग्न्यर्काभ्यामतितप्यमाने ऽभिनिवेशित क्षुत्पिपासाभ्यां च दह्यमानान्तर्बहि शरीर आस्ते शेते चेष्टते ऽवतिष्ठति परिधावति च यावन्ति पशुरोमाणि तावद्वर्ष सहस्राणि ॥ ६ ॥ यस्त्विह वै निजवेदपथादनापद्यपगत पाखण्डं चोपगतः तमसिपत्रवनं प्रवेश्य कषया प्रहरन्ति तत्र हासावितस्ततो धावमान उभयतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्वाङ्गो हा हतोऽस्मीति परमया वेदनया मूर्छित पदे पदे निपतति स्वधर्महा पाखण्डानुगत फलं भुङ्क्ते ॥ ७ ॥ यस्त्विह वै राजा राजपुरुषो वा अदण्डये दण्डं प्रणयति। ब्राह्मणस्य वा शरीर दण्डम्। स पापीयान्नरकेऽमुत्र सूकरमुखे निपतति। तत्रातिवलैर्विनिष्पिष्यमाणावयवो यथैहैवेक्षुखण्ड आर्तस्वरेण स्वनयन् क्वचिन्मूर्छितः कश्मलमुपगतो यथैवेहादृष्टदोषा उपगताः ॥ ८ ॥ यस्त्विह वै भूतानामीश्वरोपकल्पितवृत्तीनामविविक्त परव्यथो व्यथामाचरति। स यत्रान्धकूपे तदभिद्रोहेण निपतति। तत्रहासौ तैर्जन्तुभि पशुसरीसृपमृगपक्षिभिर्मशकयूकामत्कुणमक्षिकादिभि र्ये के चाभिद्रुग्धास्तैः सर्वतो द्रुह्यमाण स्तमभिविहतनिद्रानिर्वृत्तिरलब्धावस्थान परिक्रामति यथा कुशरीरे जीव ॥ ९ ॥ यस्त्विह वाऽसंविभज्याश्नाति यत्किञ्चनोपनतमनिर्मितपञ्चयज्ञो वायससंस्तुतः परत्र क्रिमिभोजने नरकाधमे परिपतति। तत्र शतसहस्रयोजने क्रिमिकुण्डे कृमिभूतः स्वयं क्रिमिभिरेव भक्ष्यमाण क्रिमिभोजनो यावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानं यातयति ॥ १० ॥ यस्त्विह वै स्तेयेन बलाद्वा हिरण्यरत्नादीनि ब्राह्मणस्य वापहरति। अन्यस्य वाऽनापदि पुरुषः। तममुत्रराजन् यमपुरुषा अयस्मयैरग्निपिण्डै सन्दंशैस्त्वचि निष्कुषन्ति ॥ ११ ॥ यस्त्विह वाऽगम्यां स्त्रियमगम्यं वा पुरुष योषिदभिगच्छति, तावमुत्र कशाया ताडयन्त स्तिग्मया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति स्त्रियं च पुरुषरूपया सूर्म्या ॥ १२ ॥ यस्त्विह वै सर्वाभिगमः तममुत्र निरये वर्त्तमानं वज्रकण्टकशाल्मलीमारोप्य निष्कर्षन्ति ॥ १३ ॥ ये त्विह वै राजन्या राजपुरुषा वा ऽपाखण्डान् धर्मसेतून् भिन्दन्ति, ते परेत्य वैतरण्यां निपतन्ति भिन्नमर्यादाः तस्यान्निरयपरिखाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना न वियुज्यमानाश्चासुभिरुह्यमानाः स्वाघेन कर्मपाकमनुस्मरन्त उपतप्यन्ते। विण्मूत्रपूयशोणितकेशनखास्थिमेदमांसवसावाहिन्यामुपतप्यन्ते ॥ १४ ॥ येत्विह वै वृषलीपतयो नष्ट शौचाचारनियमास्त्यक्तलज्जाः पशुचर्यां चरन्ति, ते चापि प्रेत्य पूयविण्मूत्रश्लेष्ममलापूर्णार्णवे निपतन्ति तदेवातिबीभत्सितमश्नन्ति ॥ १५ ॥ ये त्विह वैश्वगर्दभपतयो ब्रा-

ह्नणादयो मृगयाविहारा अतीर्थे च मृगान्निघ्नन्ति, तानपि सम्परेताँल्लक्ष्यभूतान् यमपुरुषा इषुभिर्विध्यन्ति ॥ १६ ॥ ये त्विह वै दम्भयज्ञेषु पशून् विशसन्ति तानमुष्मिँल्लोके पतितान् निरयपतयो पातयित्वा विशसन्ति ॥ १७ ॥ यस्त्विह वै सवर्णां भार्यां द्विजो रेतः पाययति काममोहित । त पापकृतममुत्र रेत. कुल्यायां पातयित्वा रेत सम्पाययन्ति ॥ १८ ॥ ये त्विह वै दस्यवो ऽग्निदा गरदा ग्रामान् सार्थान् वा विलुम्पन्ति राजानो भटा वा, तां श्चाऽपि हि परेत्य यमदूता वज्रदंष्ट्राः श्वानः सप्तशतानि विंशतिश्च सरभसं खादन्ति ॥ १९ ॥ यस्त्विह वा ऽनृत वदति साक्ष्ये द्रव्यादिविनिमये दाने वा कथञ्चित् । स वै प्रेत्य नरके ऽवीचिमत्यध शिरा निरवकाशे योजनशतोच्छ्रायात् गिरिमूर्ध्न सम्पात्यते । यत्र जलमिव स्थलमश्मपृष्ठमवभासते । तदवीचिमत्तिलशो विशीर्यमाणशरीरो न म्रियमाण पुनरारोपितो निपतति ॥ २० ॥ यस्त्विह वै विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कलत्रं वा सुरां व्रतस्थो ऽपि वा पिबति प्रमादत तेषां निरयनीतानामुरसि पदाक्रम्य ऽऽस्ये वह्निना द्रवमाणं कार्ष्णायसं निषिञ्चन्ति ॥ २१ ॥ इत्येकविंशतिमहानरकाः ॥ अथ यस्त्विह वाऽऽत्मसम्भावनेन स्वयमधमो जन्मतपोविद्याचारवर्णाश्रमवतो वरीयसो न बहु मन्येत, स मृतक एव मृत्वा क्षारकर्दमे निरयेऽवाक्शिरा निपातितो दुरन्ता यातना ह्यश्नुते ॥ २२ ॥ येत्विह वै पुरुषा पुरुषमेधेन यजन्ते याश्च स्त्रियो नृपशून् खादन्ति । तांश्च ते पशव इव निहता यमसदने यातयन्तो रक्षोगणा सौनिका इव स्वधितिनाऽवदायाऽसृक् पिबन्ति नृत्यन्ति गायन्ति च हृष्यमाणा यथेह पुरुषादा ॥ २३ ॥ येत्विह वा ऽनागसोऽरण्ये ग्रामे वा वैश्रम्भकैरुपसृतानुपविस्रम्भय्य जिजीविषून् शूलसूत्रादिभिरुपप्रोतान् क्रीडनकतया यातयन्ति, तेऽपि च प्रेत्य यमयातनासु शूलादिषु प्रोतात्मान क्षुत्तृड्भ्यां चाभिहता कङ्कवटादिभिश्चेतस्ततस्तिग्मतुण्डैराहन्यमाना आत्मशमलं स्मरन्ति ॥ २४ ॥ येत्विह वै भूतान्युद्वेजयन्ति नरा उल्बणस्वभावा यथा दन्दशूका । तेऽपि प्रेत्य नरके दन्दशूकाख्ये निपतन्ति यत्र नृप दन्दशूका पञ्चमुखा उपसृत्य ग्रसन्ति यथा बिलेशयान् ॥ २५ ॥ येत्विह वाऽन्धावटकुसूलगुहादिषु भूतानि निरुन्धन्ति । तानमुत्र तेष्वेवोपवेश्य सगरेण वह्निना धूमेन रुन्धन्ति ॥ २६ ॥ यस्त्विह वाऽतिथीनभ्यागतान्वा गृहपतिरसकृदुपगतमन्युर्दिधक्षुरिव पापेन चक्षुषा निरीक्षते, तस्य चापि निरये पापदृष्टेरक्षिणी वज्रतुण्डा गृध्रा काककङ्कवटादय प्रसह्योरुबला उत्पाटयन्ति ॥ २७ ॥ यस्त्विह वा ऽऽढ्याभिमतिरहङ्कृतिस्तिर्यक्प्रेक्षमाणः सर्वतोऽभिशङ्की अर्थव्ययनाशमलग्रह सूचीमुखे नरके पतति यत्र ह वित्तग्रहं पापपुरुषं धर्मराजपुरुषा वायका इव सर्वतोऽङ्गेषु सूत्रै परिवयन्ति ॥ २८ ॥ एवंविधा नरका यमालये सन्ति शतसहस्रश । तेषु सर्वेषु सर्व एवाधर्मवर्तिनो ये केचिदिहोदिता अनुदिताश्चावनिपते ! पर्यायेण विशन्ति । इत्थं नानानरकानत्रामुत्र च यथाकर्मदोषं भुंक्त्वा तन्वि ' पश्चान्मनुष्यदेहमाप्नोति प्राणी ॥ तत्र श्रीकपिल भागवते ।

कर्मणा दैवनेत्रेण जन्तुर्देहोपपत्तये ।
स्त्रिया प्रविष्ट उदर पुंसो रेत कणाश्रय ॥ १ ॥

कललन्त्वेकरात्रेण पञ्चरात्रेण बुद्बुदम् ।
दशाहेन तु कर्कन्धु पेश्यण्डं वा तत परम् ॥ २ ॥

मासेन तु शिरो द्वाभ्यां बाह्वङ्‌घ्र्याद्यङ्गविग्रहः ।
नखलोमास्थिचर्माणि लिङ्गच्छिद्रोद्भवस्त्रिभि ॥ ३ ॥
चतुर्भिर्धातव सप्त पञ्चभि. क्षुत्तृडुद्भव ।
षड्भिर्जरायुणा वीतः कुक्षौ भ्राम्यति दक्षिणे ॥ ४ ॥
मातुर्जग्धान्नपानाद्यैरेधद्धातुरसम्मते ।
शेते विण्मूत्रयोर्गर्त्ते स जन्तुर्जन्तुसम्भवे ॥ ५ ॥
क्रिमिभि क्षतसर्वाङ्गः सौकुमार्यात् प्रतिक्षणम् ।
मूर्च्छामाप्नोत्युरुक्लेशस्तत्रत्यै' क्षुधितैर्मुहु ॥ ६ ॥
कटुतीक्ष्णोष्णलवणरूक्षाम्लादिभिरुल्बणैः ।
मातृभुक्तैरुपस्पृष्ट सर्वाङ्गोत्थितवेदनः ॥ ७ ॥
उल्बेन सम्वृतस्तस्मिन्नन्त्रैश्च बहिरावृत ।
आस्ते कृत्वा शिर कुक्षौ भुग्नपृष्ठशिरोऽधर ॥ ८ ॥
अकल्प स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे ।
तत्र लब्धस्मृतिर्दैवात् कर्म जन्मशतोद्भवम् ॥ ९ ॥
स्मरन् दीर्घमनुच्छ्वासं शर्म किन्नाम विन्दते ।
आरभ्य सप्तमान्मासाल्लब्धबोधोऽपि वेपितः ॥ १० ॥
नैकत्रास्ते सूतिवातै र्विष्ठाभूरिवसोदर ।
नाथमान ऋषिर्भीत सप्तवध्रिः कृताञ्जलि ॥ ११ ॥
स्तुवीत तं विक्लवया वाचा येनोदरेऽर्पितः ।

॥ जीव उवाच ॥

तस्योपसन्नमवितुं जगदिच्छयात्तनानातनोर्भुवि चलच्चरणारविन्दम् ।
सोऽहं व्रजामि शरणं ह्यकुतोभयं मे येनेदृशी गतिरदर्श्यसतोऽनुरूपा ॥ १२ ॥
यस्त्वत्र बद्ध इव कर्मभिरावृतात्मा भूतेन्द्रियाशयमयीमवलम्ब्य मायाम् ।
आस्ते विशुद्धमविकारमखण्डबोधमातप्यमान हृदयेऽवसि तन्नमामि ॥ १३ ॥
य पंचभूतरचिते रहित शरीरे छन्नो यथेन्द्रियगुणार्थचिदात्मकोऽहम् ।
तेनाविकुण्ठमहिमानमृषिन्तमेनं वन्दे परं प्रकृतिपूरुषयो पुमांसम् ॥ १४ ॥
यन्माययोरुगुणकर्मनिबन्धनेऽस्मिन् सांसारिके पथिचरंस्तदभिश्रमेण ।
नष्टस्मृति पुनरयं प्रवृणीत लोकं युक्त्या कया महदनुग्रहमन्तरेण ॥ १५ ॥
ज्ञानं यदेतददधात् कतम स देवस्त्रैकालिकं स्थिरचरेष्वनुवर्त्तितांश ।
तं जीवकर्मपदवीमनुवर्त्तमानास्तापत्रयोपशमनाय वयं भजेम ॥ १६ ॥
देह्यन्यदेहविवरे जठराग्निनासृग्विण्मूत्रकूपपतितो भृशतप्तदेह ।
इच्छन्नितो विवसितु गणयन् स्वमासान् निर्वास्यते कृपणधीर्भगवन् कदा नु ॥ १७ ॥

येनेदृशी गतिमसौ दशमास्य ईश ! सङ्ग्राहित पुरुदयेन भवादृशेन ।
स्वेनैव तुष्यतु कृतेन स दीननाथ को नाम तत्प्रति विनाञ्जलिमस्य कुर्यात् ॥ १८॥
पश्यत्ययं धिषणया ननु सप्तवध्रि शारीरकेदमशरीर्यपर स्वदेहे ।
यत् सृष्टया स तमहं पुरुष पुराणं पश्ये बहिर्हृदि च चैत्यमिव प्रतीतम् ॥ १९ ॥
सोऽहं वसन्नपि विभो बहुदु खवासं गर्भान्न निर्जिगमिषे बहिरन्धकूपे ।
यत्रोपयातमुपसर्पति देवमाया मिथ्यामतिर्यदनु ससृतिचक्रमेतत् ॥ २० ॥
तस्मादहं विगतविक्लव उद्धरिष्य आत्मानमाशु तमस सुहृदात्मनैव ।
भूयो यथा व्यसनमेतदनेकरन्ध्र मा मे भविष्यदुपसादितविष्णुपाद ॥ २१ ॥
एव कृतमतिर्गर्भे दशमास्य स्तुवन्नृषि ।
सद्य क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुत ॥ २२ ॥
तेनावसृष्ट सहसा कृत्वाऽवाक्शिर आतुर ।
विनिष्क्रामति कृच्छ्रेण निरुच्छ्वासो हतस्मृति ॥ २३ ॥
पतितो भुव्यसृङ्मूत्रे विष्ठाभूरिव चेष्टते ।
रोरूयतिगते ज्ञाने विपरीता गति गत ॥ २४ ॥
परच्छन्द न विदुषा पुष्यमाणो जनेन स ।
अनभिप्रेतमापन्न प्रत्याख्यातुमनीश्वर ॥ २५ ॥
शायितोऽशुचिपर्यङ्के जन्तुस्वेदजदूषिते ।
नेश कण्डूयनेऽङ्गानामासनोत्थानचेष्टने ॥ २६ ॥
तुदन्त्यामत्वच दशा मशका मत्कुणादय ।
रुदन्त विगतज्ञानं क्रिमय क्रमिक यथा ॥ २७ ॥
इत्येव शैशव भुक्त्वा दु खं पौगण्डमेव च ।
अलब्धाभीप्सितोऽज्ञानादिद्धमन्युः शुचार्पित ॥ २८ ॥
सह देहेन मानेन वर्द्धमानेन मन्युना ।
करोति विग्रहं कामी कामिष्वन्ताय चात्मनः ॥ २९ ॥
भूतैः पञ्चभिरारब्धे स्वदेहे ह्यबुधोऽसकृत् ।
अहं ममेत्यसद्ग्राहः करोति कुमतिर्मतिम् ॥ ३० ॥
तदर्थं कुरुते कर्म यद्बद्धो याति संसृतिम् ।
योऽनुयाति ददत्क्लेशमविद्याकर्मबन्धन ॥ ३१ ॥
यद्यसद्भि पथि पुन शिश्नोदरकृतोद्यमै ।
आस्थितो रमते जन्तुस्तमो विशति पूर्ववत् ॥ ३२ ॥

**इति श्रीहंसभिक्षुप्रकाशिते श्रीहंसविलासे ।**
**जीवयातनावर्णनं नाम तृतीयोल्लासः ॥ ३ ॥**

श्रीहंसः। भो सीमन्तिनि अस्मिन्संसारे जीवास्त्रिविधाः। विषयी मुमुक्षुः मुक्तश्चेति। तत्र विषयिलक्षणं श्रीकपिलस्वामिप्रदर्शितं तु तवाग्रे प्रोक्तमेव। अन्यदपि। विषयी तु जन्मतोऽवसानान्तं दुःखभागेव। कदाचिद्बाल्ये बालक्रीडया विषयान् भुङ्क्ते। शब्दापशब्दज्ञानरहितो यत्र तत्र पर्यटन् हसन् रोदनखानपानचर्वणस्खलनपतनकूर्दनभ्रमणशयनादीन्यनेकलक्षणविषयवृन्दान्यनुभवति। स्वस्वेन्द्रियद्वाभिः द्वेषक्लेशरोषदोषाक्रोशप्रीतिमानग्लानादीनि वस्तुतो न वेत्ति॥ वर्णाश्रममार्गाचरणं च न जानीते विधिनिषेधशास्त्रसूचितं। सौवर्णराजतादिषु नानाभरणेष्वपि ममत्वं तनुते। शारीरादिसकलसांसारिककृत्येषु विचारतो नो व्याप्रियते। किञ्च रमणीषु रासविलासलालसां न सृजति। केवलं दिङ्मूढवत् प्रथमायामवस्थायां शास्त्रीयसांसारिकसदसद्ज्ञानविवेकविधुरो विषयी जीव. शारीरयात्रां निर्वर्तयति। किमधिकम्। एतादृशी विषयिणः **पूर्वावस्था**। अथ यौवनारूढो विषयी त्वमहं त्वत्तामत्ता त्वदीयमदीया दीनपतिशब्दार्थानभिमन्वानो महान्धतमिस्रा मुग्धमना भक्ष्यभोज्यलेह्यपेयचर्व्यचोष्यादिहृषीकार्थकामुकः संसाराटव्यामटाट्यते। धिक् धिक् यौवनं विषयिणो यूनः पुरुषस्य श्वनरपुरुषयोरन्तरं यत्र न निर्भाति। शुनी श्वेव स्वीयां परकीयां वा निरीक्ष्य स्त्रियनिर्भर्त्सनताडनसन्तर्जनादिना तयाऽवमानितोऽपि ग्राम्यधर्मं समीहते। तथैव नार्यऽपि। किञ्च पितरौ भ्रातरं स्वसारं च तिरस्कृत्य केवलं स्त्रीपुंसावेव व्यवायादिविषयसुखलिप्सयाऽऽलये व्याप्रियेते। मदीयमिदं सदनं मामका अमू बालका धनमेतदस्मदीयं एतेऽस्माकं पशवःकुत कलेवरे मम कार्श्यं किं भेषजं भक्षयेयं येन वीर्यवान् पुष्टः स्यामिति नैकचिन्तातुरतया विषयी ज्ञातिकुलकलत्रपुत्रवित्तभर्तृतन्त्रमन्त्रनिकेतनवसनचतुष्पदशयनीयादनीयकृषिवाणिज्यभिक्षाशस्त्रशास्त्रसाधनादिषु व्यापृतोऽहंममेत्युद्वदन् यत्र तत्र पर्यटन् भवभारमूढयति। शृणोषि श्रवणालसे!। अन्यच्च। पापेन धनमुपार्ज्य पुत्राद्युद्वाहादौ प्रसूपित्रादीनामौर्द्ध्वदैहिकादौ वाऽन्यस्मिन् यस्मिन्कस्मिंश्चिद्दिष्टे दुर्द्दिये तद्धनमन्नाद्यं च सजातीयेभ्यः प्रतिपाद्य। अहमेवाग्रणीर्ज्ञातीनामहंकुलीनो न मत्तः कोऽपि परः प्रशस्यइति दृप्तो दिवानिशं चेष्टते। स्वयं परवानपि मदायत्तमेतदित्यभिमन्यते। एवमन्यागारिकान्धपरपरया विषयी कदाचिद्वाञ्छितविषयमनुरुध्य प्रमनी भवति। आकर्णितमप्यात्मरूपमप्रत्येत्य मायोपदर्शितनामरूपविस्रब्धः शरीरशरण्यो विषयानेव स्पृहयति। किञ्च लौकिककर्मलोलुपो भावुकमलब्ध्वा सङ्कुसुकः कथञ्चिन्न स्वापमभीप्सति। अनवस्करं परमपदं व्युदस्य फेनफल्गुस्फारपदार्थानविश्रान्तं लिप्समानोऽस्मिँल्लोके कलेवरं लुठति। अन्यदपि कदाचिद्दैवात् दुर्गतः स अहह अह निःस्व स्वीयान् पोष्टुमपर्याप्त कथमपीभ्यो भवेयमित्याकुलीभूयाभीक्ष्णं तच्चिन्तयेतस्ततोऽवगुरते। स्नानसन्ध्याव्रतनियमवरिवस्यातपस्याग्न्याधानस्तोत्रपाठतीर्थयात्रादानयज्ञपुराणश्रवणादिषु पृथग्विधेषु कर्मसु तत्परस्यापि दिदंभिषोस्तस्य तदखिलं फल्गुफलमेवेत्यतः सर्वथा क्लेशभागेव विषयी॥ मनस्विनि भणितमेतदभिहितं वचस्त्वया। महामोहोदन्वत्यस्मिन्नितस्ततः कामक्रोधरागद्वेषप्रमुखविषयमकरादिभिर्हठादाकृष्टा विषयिणः परं क्लिश्यन्तोऽपि सुखरत्नलेशलालसां न जहति। जगज्जङ्गलाभिलाषजिह्मजालजूटसन्दृब्ध जन्युर्जोष कथं वर्तेत। कायकाननकामकृशानुदूनकर्मज्ञानगुरून्नभसङ्गमैर्मानसकासारं कथं चिदप्युड्डायितुमशक्यम् कुटुम्बतुरुष्केण मानसोत्तमाङ्गे सन्निवेशितां विषयचिन्ताविष्टिमुषतीं वाक्कशाताडनाशङ्काकातर शरीरी निरन्तर वोढुमक्षमोऽपिकृच्छ्रेण वहत्येव ललने। तरलं तव चेतस्तदधीकृत्य श्रोतव्यम्। ईदृशी विषयिणो

द्वितीयावस्था। शृणोषि सधवे वार्द्धक्ये तु। हाहा अहं जीर्णो जात। अरेरे मम मूर्धजादिसकलकेशनिकुरम्ब पलितम्। वयस्थेन यद्यदाचरित तदिदानी प्रवयसा मया न क्षम्यते विधातुम्। विस्रसया समग्रमस्मच्छरीरं व्याप्तम् नानारूपा रुजाऽहर्निशं शरीरे वेष्टि। भो भो भिषज। भवन्तोऽगदङ्कारा किल मम रुजो न किं चिकित्स्यन्ते। क्षणमानाह। कदाचिद्विरेक। ज्वरश्च। वम्याऽपि वार वारं व्याकुलीक्रियते, अन्नाद्यं च कुपीटगतं न जीर्यति। कश्चैष कासः। पीनसेनाऽपि परं पीडयते। श्वयथुः प्रेक्ष्यताम् अलमतिजल्पनेन। यौवने निरामयोऽहमधुना स्थाविरेऽनेकासह्यगदगणेन ग्लान। कथञ्चिदपि नोल्लाघ। अभ्यमिते मयि किं भव्यमित्यभीक्ष्णम् जरसाऽभिभूतो विषीदति विषयी! पुरा प्रबलप्रतीकोऽहम्। साम्प्रत शिथिलसंहनन सक्तुमपि न शक्त। स्रवति रसज्ञाल सृणिका न सम्यक्दृश्यते दूषिकाश्रुदूषिताक्ष्णा। उन्मूलद्दन्दंष्ट्राग्रेन दुःखायते तुण्डम्। नासाप्यश्रान्त निश्च्योतति किमुच्येत एडेनेव न श्रूयते, श्रवोभ्यामपि श्राव्यं। किं जीवितं यताधुना। समीचीनमप्यस्मदीय वचः कलत्रपुत्रनप्तृमित्रादय उच्चरन्ते। सकलकलाकोविदमप्यनुयुङ्क्ते न मां किञ्चित् कुटुम्बम्। इदानीं तु निपुणपरिवारो मामवज्ञाय प्रपञ्चेन परस्पर परिवर्तयति। भो भो लोका लोचयताम् यादृङ्मयाकृत पराक्रम स्तथा मामका अथो जायन्ते आ किमेतत् दारादयोऽपि दूरद्धर्शिन मामनादृत्येतरान् बालिशानाद्रियन्ते! किञ्च श्मश्रुपरिष्कारादिपरिष्कृतमपि मम वर्ष्म नो सुषमं शोभते अहो दृष्टव्यम् दुःखेन मयोपार्जितं द्रव्याद्यं पुत्रा प्रसह्य गृह्यन्ते, भो पुत्रा मामप्रश्नयन्तोऽपि भवन्त शृण्वन्तु। वित्तं यस्मै कस्मै मा दातव्यम् एतावन्तं कालं मया न कस्मै काकिणिकामात्रमप्यर्पितम्, न च बहुधा भुक्तम्। दुष्कर्मभिरुपार्ज्य निमयविनिमयादिभिर्वर्द्धितं धनमवर एव निक्षिप्य रक्षितम् सम्पादने महदाभिलम्, इतस्ततश्चातिकृच्छ्रेणाऽऽनीत वित्तमनिगूढं नश्येत्! रे रे दारा शृणुत, यद्यप्यस्मद्वचो भवती न संशृणुते तदपि मुमुर्षोर्मम मनसि महती चिन्ता जायते। कुतः यन्मया महता कष्टेन द्रविणं समासाद्य न स्वाहाकृतं न च स्वधाकृत, केचनात्राज्ञा महत्सु पर्वसु सूर्याद्युपरागादिषु श्रोत्रियेभ्योऽन्नसुवर्णाद्यं विश्राणयन्ति केचित्तु प्राहुणकागत्वादीनप्युपचितिपूर्वकं लड्डुकाद्यमादयन्ते, एके तु, केनाऽपिप्रकारेण कुटुम्बं मृडयन्ति। अन्ये च शुद्धमनसा साधून् सम्मन्यन्ते अपरेऽपि शिवविष्णुसुरेशादीन् सकलैश्वर्यसम्पन्नान् सुरान् सपर्ययन्ति, इतरे तु। त्रिस्रोतासूर्यसुतासोमोद्भूतासरस्वत्यादिषु नानानिम्नगासु निमज्जनोन्मज्जनादिनात्मान निर्णिज्य पवित्रीभूय ब्राह्मणादीन् भोजयित्वा विविधरत्नादीनां वितरणेनानन्दयन्ति! केचित्पुनः श्रुतिस्मृतिशास्त्रपुराणादिभिर्दर्शितानि धर्मकर्माणि श्रद्दधाना स्फारधनेन साधयन्ति। एवमन्यानपि प्रचुरद्रव्यादिना पुराणश्रवणाद्यान्पुण्यमार्गान्निशम्य गृहिणो यत्र तत्राऽनुतिष्ठन्तो दृष्टा श्रुताश्च किं वाच्यम् मयात्वेतेषा न किमप्याचरितम् समग्रमृषेत्येवं मत्वा कलेवरकलत्रकनकादिष्वेव सत्यत्वेन स्वान्तं संरक्ष्यैतावन्त कालं जीवित। अरे!! किं कर्तव्यमेतर्हि श्व परश्वो वा हं तु परेष्यामि॥ कुत परासुरियादृक्षो ममविग्रहो। न तादृक् परुत्। एवमस्तु विशीर्णावयवोऽह नूनमेव न जीवेयम् अतो भवत्याऽपत्यादिभिरपि नैरुयत्नतो वित्तगोपन विधातव्यम् नोचेदहं पिशाचो भविष्यामीति लब्धलक्ष्म्यादीनि लक्षीकृत्य वारंवारं वर्षीयसा विषयिणा शून्यविषादमाप्राप्यते। किं बहुना सर्वथा अज्ञानस्य भूमिकामसकमारूढो विषयी बाल्ययौवनवार्द्धक्येष्वपि परं कुछ्यमाणो न क्वचिच्छममाप्नोति यथासप्तमीमन्तर्वसतिमुपगतश्चेतनोऽन्धध्वान्ताधिकृतलोचनो न लोचते रूपम्! तद्वत्सप्तमीं सौषुप्तिं भूमिकामापन्नो विषयी जीवः

अत्राह हंसी । भो स्वामिन् । अज्ञानमिति किम् तस्य सप्तभूमिकाश्च काः एतद्वदतु विपश्चित्

श्रीहंसः, अंगने, ! शीघ्राऽस्ति चेत्तवाग्रे न वयंकिमप्यावृणुम । अज्ञानलक्षणं त्वग्रत कथयिष्यामः । साम्प्रतं तस्य भूमिकासप्तकं श्रूयताम् ।

**बृहद्योगवासिष्ठे श्रीरामचन्द्रं प्रति श्री वासिष्ठः ।**

बीजजाग्र १ त्तथा जाग्र २ न्महाजाग्रत्तथैव च ।
३ जाग्रत्स्वप्न ४ स्तथास्वप्न ५ स्वप्नजाग्र६ त्सुषुप्तकम् ७ ॥

इति सप्तभूमिका अज्ञानस्य, एतासां लक्षणानि ।

**प्रथमं चेतनं यत्स्यादनाख्यं निर्मलं चितः ।**
**भविष्यचितिजीवादि नामशब्दार्थभाजनम् ।**
**बीजरूपस्थितं जाग्रत् बीजजाग्रतदुच्यते ॥ १ ॥**

**व्याख्या**—सुषुप्तेरुत्थाने प्रथमं चितो विश्वरूपायाः सम्बन्धि यच्चेतनं प्रतिबिम्बलक्षण, तद्बीजजाग्रत् उच्यते । चेतनं विशिनष्टि । अनाख्यं जीवाख्यया तदानीमनुल्लेख्यम् । भविष्यतां चितिजीवचेतनादिनामात्मकशब्दानां तदर्थानां चित्त्वप्राणभृत्त्वज्ञानकर्तृत्वादिलक्षणाना च भाजन पात्रम् आलम्बनमित्यर्थ । बीजजाग्रच्छब्द विगृह्णाति । उत्तरावस्थानां बीजरूपेण स्थितं च तज्जाग्रच्च बीजजाग्रत् ॥ १ ॥

तत्राऽपि एषा ज्ञप्तेर्नवावस्थेति मूलम् ।

तदर्थं । एषेति बीजजाग्रत् परामृश्यते । विधेयावस्थानुरोधेन तस्य स्त्रीलिङ्गता । एषा बीजजाग्रत् ज्ञप्ते, जीवस्य नवा नूतनाऽवस्था यथा वृक्षस्यांकुरावस्था **इति प्रथमा भूमिका ॥१॥**

मूलम्

**नवप्रसूतस्य परादयं चाहमिदं मम ।**
**इति यः प्रत्ययः स्वस्थस्तत् जाग्रत्प्रागभावनात् ॥ २ ॥**

**टीका** । परात् परमात्मनो बिम्बात् नवप्रसूतस्य अभिनवजातस्य जीवस्य इति य प्रत्यय तंज्जाग्रदिति सम्बन्धः । इति शब्दपरामृष्टमाह । तत्राकार्यकरणसङ्घातोऽहमस्मि । इदं गृहादिकं ममइत्येवंरूप प्रत्ययो जाग्रन्नाम अवस्थान्तरम्, न बीजजाग्रत् । कुत । अङ्कुरावस्थानन्तरभाविद्विदलावस्थेव । नाऽपि महाजाग्रत् प्राक् अभावनात्, पूर्वानुभवाभावात् । पूर्वानुभवसंस्कारमपेक्ष्य हि प्रत्यभिज्ञारुपमहाजाग्रज्जायते जातिस्मरे पुरुषे । **इति द्वितीयाभूमिका ॥ २ ॥**

मूलम् ।

**अयं सोऽहमिदं तन्मे इति जन्मान्तरोदितः ।**
**पीवरः प्रत्ययः प्रोक्तो महाजाग्रदिति स्फुरन ॥ ३ ॥**

**अर्थः** । अयं सोऽहमिति । सोऽहमिति जन्मान्तरानुभवसंस्कारात् उत्पन्नमिति यावत् । यद्वा । पूर्वजन्मापेक्षया वर्तमानजन्मैव जन्मान्तरम् । तस्मिन् प्राक्संस्कारात् उदित पीवरः पीन दृढ इत्यर्थ । अस्य च महाजाग्रत्त्वं महाकालस्पर्शितत्वात् पीवरत्वाच्चेतिज्ञेयम् । जन्मान्त-

रोदितो वानन्तरोदित इति व्याचक्षाणाः सर्वसाधारणस्ताद्दशप्रत्ययो महाजाग्रदिति मन्यन्ते।
**इति तृतीयभूमिकालक्षणम् ॥ ३ ॥**

मूलम्

**अरूढमथवा रूढं सर्वथा तन्मयात्मकम् ।**
**यज्जाग्रतो मनोराज्यं जाग्रत्स्वप्नः स उच्यते ॥४॥**

**अर्थः।** अरुढम् अनिष्पन्नम् अथवा रुढं दृढं निष्पन्न। तन्मयात्मकं तन्मयस्वरूपं विषयमयस्वरूपमित्यर्थ । अथ शब्देन अप्रमारूपस्मृतिलक्षण सर्वोऽपि प्रत्ययो गृह्यते।

लक्षणान्तर च।

**द्विचंद्र-शुक्तिकारूप्य-मृगतृष्णादिभेदतः ।**
**अभ्यासं जाग्रतः प्राप्य स्वप्नोऽनेकविधो भवेदिति ।**

अत एवाह। पूर्वं कदाचिदपि विषयाननुभवे तद्विपर्ययसायोगात् अभ्यासं प्राप्येत्युक्तम् ॥ ४ ॥ **इति चतुर्थभूमिकालक्षणम् ॥**

मूलम्।

**अल्पकालं मया दृष्टमेतन्नो वेति यत्र हि ।**
**परामर्शः प्रवुद्धस्य स स्वप्न इति कथ्यते ॥ ५ ॥**

प्रबुद्धस्य स्वप्नात् उत्थितस्य इति परामर्शो यत्र यस्मिन् काले भवति तदा स स्वप्न इति कथ्यते। एतन्नो वेति सशय कथं अत आह। **इतिपञ्चमी भूमिका ॥**

मूलम।

**चिरसंदर्शनाभावादप्रफुल्लबृहद्वपुः ।**
**चिरकालानुवृत्तश्च स्वप्नो जाग्रदिवोदितः ॥ ६ ॥**
**स्वप्नजाग्रदिति प्रोक्तो जाग्रत्यपि परिस्फुरन् ॥ ६ ॥**

**अर्थः।** अप्रफुल्लम् अविस्पष्टं बृहद्वपु स्थूलस्वरूपं यस्य स तथोक्त । जाग्रदिव उदित । जागरितमिव विस्पष्टम् उदित । जागरेऽपि परिस्फुरन् स्फुरणारूढतया। स्पष्टप्रकाशमानेत्यर्थ ।
**इति षष्ठी भूमिका ॥ ६ ॥**

**षडवस्थापरित्यागे जडा जीवस्य या स्थितिः ।**
**भविष्यद् दुःखबोधाढ्या सौषुप्ती सोच्यते गतिः ॥**
**जगत्तस्यामवस्थायामन्धे तमसि मज्जते । ॥७॥**

भविष्यदु खबोधाढ्या जाग्रत्स्वप्नयोर्भाविदु खस्य बोधोऽनुभव तदाढ्या । तद्बीजवासनोपेतत्वात्तदाढ्यत्वम्। गति अवस्था। **इति सप्तमी भूमिका । ॥ ७ ॥**

अत्र भूमिका शब्दो जीवेऽवस्थापर । बाल्याद्या अवस्था शरीरपरा । जीवस्य बीजजाग्रदाद्या अवस्थाः सप्त। शरीरस्य वाल्यादयोऽवस्थास्तिस्र । बहुधा तु जाग्रत्स्वप्नसुषुप्तिरिति तिस्र एवावस्था सम्मन्यन्ते जीवस्य, इत्थं यस्यां कस्यामप्यवस्थायां विषयी जीवः संसारचक्रमधिरूह्य चंक्रमीति। नो जातु सुखम्। सुखलेशसंयुक्तं भूरिदु खमेव सुखं मत्वा तत्कृते विधिविहितविविधधर्मकर्मादीन्यनुतिष्ठन्नपि पुरः परं दुःखायत एव । यथा

कश्चिद्दैवेयो मधुरमात्रामिश्रं क्ष्वेडं मधुररुच्याऽदन्नपि नश्यति, किञ्च कश्चित्केनचित् धर्मकर्माणि कृत्वा त्रिविष्टपं प्राप्य तत्र कियत् काल व्योमयानस्वर्वेश्यापीयूषादीन्नानाविधान् भोगान् भुक्त्वा, ततश्चिरकालमधोगतिमाप्नोति । सुखं स्वप्नवत् । दुःखं तु गाढमेव । तद्वत्. केचनेह पूर्वपुण्यवशात् पायसशर्करापूपलड्डुकषड्रसोपदंशादिभिर्बहुविधैर्भव्यैर्भक्ष्यविशेषैः शरीर परिपोष्य, पश्चादायुषोऽवसाने प्रेत्य कालसूत्रासिपत्रादिपूर्वोक्तनानानरकेषु पृथग्विधा यातनाः सूक्ष्मशरीरवन्तः स्मृतिपूर्वकं प्रपद्यन्ते । तद्वदितरेऽपीहैव विषयिणो राजभटैर्निगडशृङ्खला शस्त्रकषामुष्टिपातपदरक्षकाद्यैर्विविधप्रहरणविशेषैस्ताडयमाना यत्र तत्र दृष्टा श्रुताश्च । कान्ते किमधिकम् । सर्वथा विषयिणां जीवानां न क्वचिदपि सुखं दृष्टम् । दुःखोत्कृष्टं सुखं विषयिभिरनेककर्मभिरपि प्राप्तुमशक्यम् । अत्र **सांङ्ख्यसूत्रम्– दुःखाद्दुःखं जलाभिषेकवन्न जाड्यविमोक इति ।**

शीतजलेन जाड्यानिवृत्तिरिव न कर्मणा दुःखनिवृत्तिरित्यर्थ ।

पुनर्बाल्यं च कौमारं कैशोरं यौवनं पुनः ।
तथैव वार्द्धकं भूयो जाग्रत्स्वप्नसुषुप्तकम् ॥ १ ॥
जीवनं मरणं चाऽपि संसारेऽस्मिन्पुन पुनः ।
धिग्धिग् विषयिणो जीवान् यतस्तेऽत्यन्तदुःखिन ॥ २ ॥

**इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे जीवदशावर्णनं नाम चतुर्थोल्लासः । ४ ॥**

अथ श्रीहंसी श्रीहंसास्यसरसिजाद्राजयमयातनाद्या नानापदो विषयिजीवेषु विचिन्त्य समाकर्ण्य सत्रासं रेरे धिक् जीवितं । भवादृशा मद्भर्तार सर्वज्ञा भवन्ति किन्तु मया न किमपि ज्ञातं, न च श्रुतं, न स्नातं, न जप्तं, नापि तप्तं, न दत्त, नो हुत, नार्चित, नाचरितानि महाव्रतानि न कृता तीर्थ देवयात्रा, दैवान्मनुष्यशरीरं समासाद्य दिग्भ्रमवशान्महाजङ्गलं गतया मृग्या कुटिलकण्टकाटव्यामिवाज्ञानात् ससारगतया मया कुटुम्बाटव्यामेतावन्तं कालं वासरा नीताः । हाहाऽहं हता दैवेनैव विलप्य बाष्पाकुललोचनकमलाऽबलाऽधोमुखी वामचरणाङ्गुष्ठेन भुवं निखनन्ती भर्तुश्चरणयोरग्रतः पतिता । ततः पत्यापूर्णराजयोगिनाङ्गनायां विरक्ति विचिन्त्य पृथिव्या उत्थाप्य तां स्वाङ्कवामैकदेशमुपवेश्य स्वीयांशुकेन शरीरं प्रोञ्छय करकिसलयेनाननकमलाद्य परिमार्ज्य सीमन्तिनि मा शोच । मा विषीद । तव दैवं बलीयः । त्वन्मानसेऽप्यशुद्धा वासना दृष्टा । त्वत्समा भाग्यवती दुर्लभा भूमण्डल इत्युदीर्य सामभि साऽऽश्वासिता । मुहूर्तं विरम्य स्मयमाना सा स्वामिनो मुखमालोक्य भो भर्त्तः ! किमद्य मम जातम् । क्षम्यतां जल्पितमिति दीनतामगमत् ।

अथ श्रीहंसः । सुभगे । तद्भण्यते यद्भवत्योदितम् । मम किं जातमित्याकर्णयतु भवती । पूर्वजनुषि जनित यच्छुभमशुभं च तदन्तर्वाणिभिरावेद्यते दैवम् । तद्बलात्त्वयि विरक्तिराविर्भूता श्यामे ! निशामय विरक्तिर्नाम वैराग्यम् । तत्त्रिविध प्रवीणैर्निर्वण्यते, शोकजं श्रुतजं, सहजं चेति । यथा–यदा पितरौ पत्नी पति पुत्रो वाऽन्य कश्चित् सुहृद्वर्ग पञ्चत्वमापन्नस्तदा यत् तत्शोकतोवैराग्यमुत्पद्यते **तच्छोकजम्** वा, राजाग्नितस्कराद्युद्भूतभयात्, विस्फोटकातिसारसन्निपातत्रिदोषाद्यामयापत्तेः अथवा, हेमादिद्रव्यवस्तुहानितोऽपि विरज्यते तच्छोकज-

मिति। श्रूयते च **पुराणेतिहासान्तरे** सपत्नजनन्या निर्भर्त्सिते ध्रुवे। तक्षको दशतु इति शृङ्गिसुतशापवशाद्विष्णुराते। इतरेष्वपि बहुष्वितिहासादिविश्रुतेषु वैराग्यमाकर्ण्यते कृतमुखेभ्यस्तच्छोकजमेवेत्यवगन्तव्यम्।

प्रिया। भोः प्रिय! पुराणेतिहासयोरप्यर्थं कथ्यताम्।

प्रिय। **श्रीकुलार्णवागमातिरहस्ये।**

पुण्यपापादिकथनाद्रागद्वेषादिवारणात्।
नन्दनात्सर्ववर्णानां **पुराण**मिति कथ्यते॥ १॥

इष्टधर्मकलात्मत्वात्तिमिराज्ञाननाशनात्।
हरणात्सर्वदुःखाना**मितिहास** इति स्मृतः॥ २॥

किञ्च वेदान्तादिविशिष्टवैराग्यशास्त्राणां सच्छ्रद्धया श्रवणतः समुत्पतितं यद्वैराग्यं तदभिज्ञैः **श्रुतज**मित्यभिधीयते। यथा-

मनवो मनुपुत्राश्च येऽन्ये राजर्षयोऽमलाः।
वैराग्यं परमापन्नाश्चतुर्थाश्रममाश्रिताः॥ ३॥

अनेकजन्मसूपार्जितं कस्मिंश्चिज्जन्मन्येवमेवात्मना सह जायते तत्**सहज**मित्युच्यते। यथा-श्रीरामस्तीर्थयात्रां निर्वर्त्य गृहमागत्य यौवने स्वयमकस्माद्विरक्तिमाप्तवान्। तद्वर्णनन्तु **बृहद्योगवासिष्ठे।** तथा **शुकः**श्चोद्भवमात्राद्विरक्तोऽभूत्। **पिङ्गला**यामपि स्वतो वैराग्यमजनि। कलौ च **शङ्करकरामलकाद्यो**ऽप्यनेकशः श्रवणादिरहिता अपि परां विरक्तिमगमन्। पुरा **जडभरतो**ऽपि शास्त्रश्रवणमन्तरा पूर्वस्मिन्नेव वयसि ब्रह्मीभूतः।

अत्र कान्ता। भो भर्त्तः! श्रीमद्भिर्ये ये वर्णितास्ते सर्वे विदितवृत्तान्ताः। पिङ्गलाया वृत्तान्तस्तु नावगतः। मय्यनुकम्पा चेत् तस्याः प्रवृत्तिर्विस्तराद्वाच्या।

श्रीहंसः साह्लादम्। अयि वरवर्णिनि! त्वयि मम मनोऽद्य दयते। अतस्तस्या विस्तरेणोदन्तः शृणोतु भवती। विदेहपुरे काचन पिंगलानाम रूपाजीवाऽसीत्। सा स्वधर्मेण साधारणपुम्भिः सार्द्धं निधुवनेन कृत्वा धनमुपार्ज्य जीवति स्म। अथैकदा दिष्टवशात्सा द्रव्यकामयित्री नक्तं सङ्केतनिकेतनमागत्य आढ्यं पुमांसमाशासमानाऽतिष्ठत्। तस्यां निशि न कोऽप्यायातो जारः। ततः सा पुनः पुनर्वेश्म प्रविशन्ती बहिश्च निःसरन्ती व्याकुलीभूय चिन्तयामास। हा हा धिक् धिक् धनं यौवनं च दिवानिशं मया परेषामाशया प्राप्यते। अरे मम दैवं निन्द्यमिति भाग्यं धिक्कृत्य सर्वं त्यक्त्वा श्रीपुरुषोत्तममेवाश्रयेयमिति स्वयमेव निश्चित्य।

धिक् धनं धनिकान् धिक् धिक् जीवितं च जनिं च धिक्।
किं मया जीव्यते व्यर्थं जीवितान्मरणं वरमिति

वारंवारं विषीदन्ती सान्द्रवैराग्यं जगाम। ततस्तया तत्प्रभृति यावज्जीवं तत्कर्म परित्यज्य विरक्तिवशेन श्रीपुरुषोत्तम एव निषेवित इति। केचिदेतच्छोकजमित्याचक्षते

तदयुक्तम्। शौकज शिक्षामन्तरेण नोत्तिष्ठति। धनञ्जयादिषु विषादादिवशादाविर्भूतं वैराग्य शिक्षया दृढीकृतं। स तु स्थिरीभूतमित्याश्रूयते। सा तु न केनापि शिक्षिताऽत सहजमेव विद्वांसो मन्यन्ते।

अथ हंसी। साधु साधु श्रीधव! यद्वेश्याऽपि पिङ्गला शिक्षकमन्तरेण श्रीपुरुषोत्तमशरणमाश्रिता। मादृशी तु महामोहहर्म्ये देहादौ मोमुह्यमाना मुधोर्जयतीति प्रश्नस्य सत्रप पति प्रत्याह। अङ्ग प्रियतम! सुरतोऽसि यन्ममाग्रे पिङ्गलावार्त्ताऽऽवेदिता धन्याऽस्मि यद्भवादृश स्वामी। हे पते! पुनरपि मम मन किञ्चित् विपृच्छिषति। इति सस्मित स्वामिनोऽभिमुखमवेक्ष्य भणति स्म।

श्रीहंस। प्रेयसि पृच्छ। किं पृच्छसि यद्यपि स्त्रीणामग्रे सत्योक्ति सद्भि प्रतिषिद्धा। तदपि सपरीक्षं भवत्या मानसमस्माभिरुपलब्धम्। तत्पिपृच्छिषा चेत् पृच्छतु भवती!

प्रिया। सपरीक्षमित्याश्रुत्य स्वदूषणं स्वयमेव वक्ति। भो परमकारुणिक! कथमहं परीक्षिता। सर्वत्र सज्जनैर्जुगुप्सिता स्त्री श्रूयते च। शास्त्रान्तरे

अनृतं साहस माया मूर्खत्वमतिलोभता।
अशौचं निर्दयत्वं च स्त्रीणां दोषा स्वभावजा. ॥ १ ॥
उशनावेदयच्छास्त्रं यच्च वेद बृहस्पतिः।
स्त्रीबुध्या न विशिष्येत तस्माद्रक्ष्या कथं हि ता ॥ २ ॥
नाति प्रसङ्ग प्रमदासु कार्यो
नेच्छेद्बल स्त्रीषु विवर्द्धमानम्।
अतिप्रसक्तै पुरुषैर्यतस्ता.
क्रीडन्ति काकैरिव लूनपक्षैः ॥ ३ ॥
अन्तर्विषमया ह्येता बहिश्चैव मनोरमा ।
गुञ्जाफलसमाकारा योषित केन निर्मिता ॥ ४ ॥
मधु तिष्ठति वाचि योषितां
हृदि हालाहलमेव केवलम्।
अतएव निपीयतेऽधरो
हृदयं मुष्टिभिरेव ताड्यते ॥ ५ ॥
एता हसंति च रुदन्ति च कार्यहेतो
र्विश्वासयंति च पर न च विश्वसंति।
तस्मान्नरेण कुलशीलसमन्वितेन
भार्या श्मशानघटिका इव वर्जनीयाः ॥ ६ ॥
आवर्त्त सशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम्।
दुर्ग्राह्य यन्महद्भिर्नरवरवृषभै सर्वमायाकरण्डं
स्त्रीयन्त्रं केन लोके विषममृतमय धर्मनाशाय सृष्टम् ॥ ७ ॥

सत्यं शौचं दया मौनं बुद्धिर्ह्रीः श्रीर्यशः क्षमा ।
शमो दमो भगश्चेति यत्सङ्गाद्याति संक्षयम् ॥ ८ ॥
तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु ।
सङ्गं न कुर्याच्छोच्येषु योषित् क्रीडामृगेषु च ॥ ९ ॥
न तथास्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः ।
योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ १० ॥
प्रजापतिः स्वां दुहितरन्दृष्ट्वा तद्रूपधर्षितः ।
रोहिद्भूतां सोऽन्वधावत् ऋक्षरूपी हतत्रपः ॥ ११ ॥
तत्सृष्टसृष्टसृष्टेषु को नन्वखण्डितधीः पुमान् ।
ऋषिं नारायणमृते योषिन्मय्येह मायया ॥ १२ ॥
बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् ।
या करोति पदाक्रांतान् भ्रूविजृम्भेण केवलम् ॥ १३ ॥
सङ्गन्न कुर्यात्प्रमदासु जातु
योगस्य पारं परमारुरुक्षुः ।
मत्सेवया प्रतिलब्धात्मलाभो
वदन्ति यां निरयद्वारमस्य ॥ १४ ॥
योपयाति शनैर्माया योषिद्देवविनिर्मिता ।
तामीक्षेतात्मनो मृत्युं तृणैः कूपमिवावृतम् ॥ १५ ॥
यां मन्यते पतिर्मोहान् मन्मायामृषभायतीम् ।
स्त्रीत्वं स्त्रीसङ्गतः प्राप्तो वित्तापत्यगृहप्रदम् ॥ १६ ॥
तामात्मनो विजानीयात्पत्यपत्यगृहात्मिकाम् ।
दैवोपसादितं मृत्युं मृगयोर्गायनं यथा ॥ १७ ॥
पुरञ्जनो नाम राजा स्त्रीसङ्गात् स्त्रीरूपोऽभूत् ।
श्रीदाशरथिश्च सीतासङ्गतः परं क्लिष्टः ।

श्रीमहारुद्रोऽपि पार्वतीप्रसङ्गात् परामापदमाप्तवान् । कृष्णेनाऽपि कामिनीनां तद्वशात् कतिचन कर्माणि कृतानि । एते हि कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्था अपि स्त्रीवशाद्बद्धा इव लक्षिताः । इतरेषां कापुरुषाणां तु का कथा । भर्तृभिर्निशाम्यते । पुरुषैः स्वयमेवात्मना सार्द्धं स्त्रियो बद्धाः । पुरुषाणां सकलाङ्गत्वेन स्त्रियो बन्धहेतवः ।

अत्र श्रुतिः ।

**अन्नपाशेन मणिना प्राणसूत्रेण पृश्निना ।**
**बध्नामि सत्यग्रन्थिना मनश्च हृदयं च ते ॥**
**यदेतद् हृदयं तव तदस्तु हृदयं मम ।**
**यदिदं हृदयं मम तदस्तु हृदयं तव ।**

व्याख्या। विवाहकर्मणि स्त्रीपुंसौ परस्परं भोजयत। तत्र वधूं प्रति वरो वक्ति। हे वधु, ते तव मन चित्त। च शब्दाद्बुद्धि, च हृदयं, अन्तर्गत, अहं परिणेता। बध्नामि। बध-बन्धने, केन, किञ्च, पृश्निना, किंभूतेन प्राणसूत्रेण। प्राण सूत्रप्रभूतो यस्य तत् प्राणसूत्रं। तेन "अन्नं वै देवा पृश्नीति वदन्ति"। तेन बध्नामीत्यपेक्षते, पुनरपि तदेव विशिष्यते। सत्य-ग्रन्थिना। सत्यं ग्रन्थिरिव भवति यस्य तत् सत्यग्रन्थि अतस्तेनेति। यत् एतत् प्रत्यक्षं उक्त-लक्षणं हृदयं तव सम्बन्धि तन्मम भवतु। ममसम्बन्धि च हृदयं तवास्तु। आवयोरेकहृदयं भवत्वित्यर्थ। स्वामिन् इत्थं स्त्रीपुंसौ परस्पर बद्धौ। एतत् पुरुषे बन्धनं तु स्त्रीप्रसङ्गत। अतो वेदशास्त्रपुराणकवीना वचोवैचित्र्येण विदूषितायां बन्धनभूतायां वामाया का परीक्षा!

रमण। साधु साधु शोधयित्रि! त्वया शास्त्रसारं श्रुतमस्ति खलु। स्त्री तु तादृश्येव श्रूयते च दृश्यते, किन्तु न हि त्वादृशी कचित्कैरपि दृष्या सल्लक्षणसम्पन्नत्वात्। तानि सल्लक्षणानि त्वयि दर्शयाम। पञ्चदशवर्षात् प्रभृति अद्यदिवसपर्यन्त मायाप्रपञ्चेऽस्मिंस्त्व-च्चेतो न चञ्चूर्यते। लेह्यपेयादीनि त्वमतिमात्रं न लेक्षि, पायसापूपलड्डुकाद्य नानाभक्ष्यमपि-त्वत्प्राणो नाशिशिषति। पटकूलादीनि सूक्ष्मतराण्यप्यम्बराणि नातिवेलं परिधित्सति भवती। किञ्च वार्ताविलासादिकमपि न निर्भरं रोचते। बालपाश्याललाटिकाकर्णिका ललन्तिकोर्मि-काकाञ्चीतुलाकोट्यादयोऽनेकलक्षणा अलङ्कारा विद्यमाना अपि नात्यर्थं त्वयि मोदाय दृश्यते। जनयित्रीजनिकरभ्रातृभगिनीपतितनयतन्वादिषु नव स्वान्त त्व स्नेहेनोचरिकर्त्रि। हेमहीरक मुक्तामाणिक्यविद्रुमवैदूर्यरजतताम्रादिनानारत्नधातुजातिनिकरोऽपि तव नाऽतिप्रीतये सम्प-श्यामहे। किञ्च सुकोमले सोपबर्हे मशकमत्कुणाद्यनेकोपद्रववर्जिते पल्यंकेऽपि त्व-न्मनोऽतितरां न निद्रायते। समानशील: सहजसरल सखीजनोऽपि त्वां सुखयितुमस-मर्थ। ऐहिकेष्वनेकविधेषु विषयेषु ललने तव लालसा न लक्ष्यते। सकलसुन्दरीणा शरीरं कम्पयितुं पर्याप्तोऽपि कन्दर्पस्त्वत्पदवीमवेक्ष्य न्यञ्चतीति निचायाम:। 'अन्यदपि। अङ्गने! वस्तुतो विरक्त मनो न कचिदुद्गाढ स्निह्यति। नोद्विजन्ति। नानुकम्पते। न भ्रामते। नाभिनि-विशते। नेर्ष्यति। न सुखायते। न चाशास्ते। नाप्युद्युङ्क्ते। किन्तु। सर्वमनुतिष्ठदप्यौ-दासीन्येनावगणय्य यथाकथञ्चिद्वर्त्तेत। तन्वि! तादृश तव चित्तं चिरेणाऽलोच्यते। अतस्त्वं सल्लक्षणवती **मुमुक्षु**सञ्ज्ञका जाता।

हंसी। एवमस्तु चिह्ननिरीक्षण चातुर्येणयुष्माभि सम्यगसमस्तस्वरूपं परीक्षितम्। किमे-तत् क्षुद्रवैराग्येण दु खदेनेत्युदर्यि खिन्नमनस्का तूष्णीमासीत्।

## इति श्रीहंसभिट्ठुविरचिते श्रीहंसविलासे वैराग्योदयलक्षणं नाम पञ्चमोल्लास: ॥ ५ ॥

अथ हस -भो सखि! मा खिद्यताम्, मुमुक्षोर्वैराग्यं प्राग्दुःखदमपि ज्वरार्त्तस्य कटुचूर्ण-वत् परिणामेऽखण्डसुखदमित्यत खेदो न कार्य।

हसी-भो वल्लभ,' अहमयोग्याऽपि दयालुभिर्भर्तृभिराहिता हि न किमप्यनुयोक्तुमां-शङ्क इत्यत: कथ्यतां मुमुक्षुलक्षणमिति पप्रच्छ।

श्रीहंस:-वल्लभे वेल्लितवचनाप्यस्माभिस्त्वमुरसिकृतेत्यत श्रूयतामस्मद्वच श्रवणो-त्सुके। प्रागुक्तलक्षणो विषयो जीव: कदाचिद्दैवात्सत्सङ्गवशेन सतां वाच श्रद्धाय महादु-खाद्यदा मुमुक्षते। तर्हि तस्य **मुमुक्षु**रिति नाम मोक्षदर्शिभिर्भण्यते।

स्त्री-भो स्वामिन् ! सन्त कीदृश । तेषां सङ्गश्च केन विधिना विधातव्य इत्युच्यताम् ।

हंस । प्रमदे ! यद्यपि मद्भणित भवत्या परिसूयेत् तदपि त्वयि मम प्रेमानावाञ्छति । अतस्त्व निशामय **श्रीशास्त्रस्वारस्यम्** । मायाप्रपञ्चस्य पारेऽनुत्तरं **श्रीनगर**मस्ति। तन्मध्यप्रदेशे **चिन्तामणिमन्दिर**मस्ति । तदन्त **श्रीरासशालाख्यं** श्रीपरमशिवान्त पुरस्य विलाससदनमस्ति । तत्राप्यलक्ष्य सभास्तृतकौसुमतूलिक श्रीतल्पमस्ति ! तस्मिञ्छ्रीमदनिर्वचनीयमर्द्धनारीश्वरस्वरूपमस्त्येवेति तत्तच्छास्त्रतोऽनुसृत्या च निर्णीय तद्ध्यानगानैकतानास्तन्मयाश्च यत्र क्व च ये केचन, त एव सन्त । वस्तुत सन्तस्त्वास्तिकाः तत परे नास्तिकाश्च । अत्र श्रुतिः-**असन्नेवस भवति असद्ब्रह्मेति वेद चेत् ।**

**अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति ।**

सुन्दरि ! सज्जना हि लोके विषयिण इव विहरन्तोऽपि न तैर्वेदितुं शक्या ।

**वासिष्ठे** च ।

लोभमोहरुषां यस्य तनुताऽनुदिनम्भवेत् ।
यथाशास्त्रं विहरति स्वकर्मसु स सज्जनः ॥ १ ॥

**अन्यत्रा**ऽपि ।

सन्तोऽन्तः कोमलास्तज्ज्ञैर्विज्ञेया नालिकेरवत् ।
अन्ये तु बदराकारा बहिरेव मनोरमाः ॥ २ ॥

किञ्च । प्रिये ! सन्तो गुरवो जीवन्मुक्ताश्चैकपर्याया । यत् प्रसङ्गतस्तद्रूपतामासादयन्ति मुमुक्षव ।

हंसी । भो श्रीहस । सतां लक्षणं तु श्रीमता वचनान्मयाऽवसितम् । सद्गुरुः कीदृग्लक्षण इति विशेषेण श्रोतुकामाऽस्मि ।

हंस । श्री आगमरहस्ये ! ( त्रुटितोश इव दृश्यते )

हंसी । भो भो वल्लभ ! आगमार्थ कथ्यतामित्युपक्रमे सा पृच्छति स्म ।

हंसः ।

आचारकथनाद्दिव्यगतिप्राप्तिनिधानतः ।
महावाक्यार्थकथनादागम कथितः प्रिये ! ॥ १ ॥

**गुरुलक्षणान्युच्यन्ते ।**

श्रीगुरु परमेशानि शुद्धवेषो मनोहर ।
सर्वलक्षणसम्पन्न सर्वावयवशोभितः ॥ १ ॥
सर्वागमार्थतत्वज्ञः सर्वमन्त्रविधानवित् ।
लोकसम्मोहनकरो देववत् प्रियदर्शन ॥ २ ॥
सुमुख सुलभ स्वच्छः संशयच्छिदसंशय ।
इङ्गिताकारचेष्टाज्ञ ऊहापोहविदुज्वल ॥ ३ ॥
अन्तर्मुखो बहिर्दृष्टि सर्वज्ञो देशकालवित् ।
आज्ञासिद्धस्त्रिकालज्ञो निग्रहानुग्रहक्षमः ॥ ४ ॥

वेधको बोधक शान्त सर्वजीवदयापरः ।
स्वाधीनेन्द्रियसञ्चारः षड्वर्गविजयेक्षम ॥ ५ ॥
अग्रगण्योऽतिगम्भीरः पात्राऽपात्रविशेषवित् ।
शिवविष्णुसमः साधुर्न च दर्शनदूषक· ॥ ६ ॥
निर्ममो नित्यसन्तुष्ट स्वतन्त्रो नित्यशक्तिमान् ।
स्वभक्तवत्सलो धीर कृपालु स्मितपूर्ववाक् ॥ ७ ॥
भक्तिप्रिय सर्वसमो गम्भीर शिष्यशासित ।
स्वेष्टदेवगुरुप्राज्ञदेवतापूजनोत्सुक ॥ ८ ॥
नित्ये नैमित्तिके काम्ये रत कर्मण्यनिन्दिते ।
रागद्वेषभयक्लेशदम्भाहङ्कारवर्जित ॥ ९ ॥
स्वविध्यनुष्ठानतपोधर्माणामप्रकाशकः ।
वर्णाश्रमज्ञानतपोधर्माणां तु प्रकाशक ॥ १० ॥
यदृच्छालाभसन्तुष्टो गुणदोषविभेदक ।
स्त्रीधनादिष्वनासक्तो दुःसङ्गव्यसनातिगः ॥ ११ ॥
सर्वाहम्भावसंयुक्तो निर्द्वन्द्वो नियतव्रत· ।
अनुलोमोऽहिंसकश्च पक्षपातविचक्षणः ॥ १२ ॥
नि सङ्कल्पविकल्पश्च विनीतात्माऽतिधार्मिकः ।
तुल्यनिन्दास्तुतिर्मौनी निरपेक्षो नियामक ॥ १३ ॥
इत्यादिलक्षणोपेत· श्रीगुरुः कथितः प्रिये ! ।

## ॥ गुर्वर्थश्च ॥

गुकारस्त्वन्धकारोऽपि रुकारस्तन्निरोधक ।
अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते ॥ १ ॥
गुह्यागमार्थतन्मन्त्रसाधनोद्बोधनादपि ।
रुद्रादिदेवरूपत्वाद्गुरुरित्यभिधीयते ॥ २ ॥
आचार्याराध्यश्रीनाथदेशिकस्वामिनोऽपि गुरुपर्यायायाः ।

## तदर्थास्तु

आचिनोति हि शास्त्रार्थमाचारे स्थापयेत्परम् ।
स्वयमप्याचरेद्यस्तु तमाचार्यं प्रचक्षते ॥ १ ॥
आम्नायतत्वविज्ञाना च्चराचरसमानतः ।
यमादियोगयुक्तत्वादाचार्य इति कथ्यते ॥ २ ॥

आत्मभावप्रदानाच्च रागद्वेषादि वर्जनात् ।
ध्यानैकनिष्ठचित्तत्वादाराध्य इति कथ्यते ॥ ३ ॥
श्रीमोक्षदानदक्षत्वान्नादब्रह्मानुबोधनात् ।
स्थगिताज्ञानविभवाच्छ्रीनाथ इति कथ्यते ॥ ४ ॥
देवतारूपधारित्वा च्छिष्यानुग्रहकारणात् ।
करुणामयमूर्त्तित्वाद्देशिकः कथ्यते प्रिये ! ॥ ५ ॥
स्वान्ताश्रितसमुन्मीलत्परतत्वार्थचिन्तनात् ।
मिथ्याज्ञानविहीनत्वात् प्रिये स्वामीति कथ्यते ॥ ६ ॥

## ॥ अन्यान्यपि तल्लक्षणानि ॥

योविलङ्घ्याश्रमान्वर्णानात्मन्येव स्थितः सदा ।
सोऽतिवर्णाश्रमी योगी स गुरुः स च मे प्रियः ॥ १ ॥
दृश्यं विना स्थिरा दृष्टिर्मनश्चालम्बनं विना ।
विनाभ्यासं स्थिरो वायुर्यः स्यात्सगुरुरुत्तमः ॥ २ ॥
यत्तु सम्वित्तिजननं परानन्दसमुद्भवम् ।
तत्तत्वं विदितं येन स गुरुः कुलनायिके ! ॥ ३ ॥
भूतं भावं मन्त्ररौद्रशाक्तशाम्भवमित्यपि ।
वेधं च षड्विधं वेत्ति स हि वेधकरो गुरु ॥ ४ ॥
पदवर्णकलामन्त्रसत्तत्वभुवनाह्वयात् ।
षडध्वानं शोधयेद्यः शोधकः स गुरुः स्मृतः ॥ ५ ॥
षडाधारनवाधारषोडशाधारनिर्णयम् ।
यो जानाति विधानेन स गुरुः कथितः प्रिये ! ॥ ६ ॥
जाग्रत्स्वप्नसुषुप्तिश्च तुर्या च तदतीतकम् ।
यो वेत्ति पञ्चकं देवि ! स गुरुः कथित प्रिये ! ॥ ७ ॥
पिण्डं पीठं[1] तथारूपं रूपातीतं चतुष्टयम् ।
यो वै सम्यग्विजानाति स गुरुः कथितः प्रिये ! ॥ ८ ॥
यो वा परा च पश्यन्ती मध्यमां वैखरीमपि ।
चतुष्टयं विजानाति स गुरु कथित प्रिये ! ॥ ९ ॥
आत्मविद्याशिवःसर्वमितितत्वचतुष्टयम् ।
यो वेत्ति परमेशानि स गुरुः कथितः प्रिये ॥ १० ॥
पशुपाशं पशूनां च रहस्यार्थविधानवित् ।
यो जानाति वरारोहे ! स गुरुः परिकीर्तितः ॥ ११ ॥

---

१, पदमितिपाठ तंत्रेषु बहुधा ।

वर्णोत्तरं स्वयंभ्वाख्यं लिङ्गत्रितयसंस्थितिम् ।
तत्वतो यो विजानाति स गुरु. कथितः प्रिये ! ॥ १२ ॥
आणिवक कार्मिकं चैव मायिक च मलत्रयम् ।
यो विशोधयितुं शक्तः स गुरुः कथितः प्रिये ! ॥ १३ ॥
सरक्तशुक्लमिश्राख्यचरणत्रयवासनाम् ।
यो जानाति महादेवि ! स गुरुः कथितः प्रिये ! ॥ १४ ॥
चक्रसङ्केतकं मन्त्रपूजासङ्केतके तथा ।
त्रिविधं यो विजानाति स गुरुः कथितः प्रिये ! ॥ १५ ॥
महामुद्रां नभोमुद्रां चोड्याण च जलन्धरम् ।
मूलबन्धं च यो वेत्ति स गुरुः कथितः प्रिये ! ॥ १६ ॥
शिवादिक्षितिपर्यन्तं षट्त्रिंशत्तत्वनिर्णयम् ।
यो विजानाति तत्वेन स गुरुः कथितः प्रिये ! ॥ १७ ॥
अन्तर्यागं बहिर्यागं कालज्ञानस्थिति प्रिये ! ।
धारायन्त्रविधान च यो वेत्ति स गुरुः स्मृतः ॥ १८ ॥
पिण्डब्रह्माण्डयोरैक्यस्थिति यो वेत्ति तत्वतः ।
शिरोऽस्थिरोमसङ्ख्यादि स गुरुर्नापरः प्रिये ! ॥ १९ ॥
पद्मादिचतुराशीतिनानासनविचक्षणः ।
यमाद्यष्टाङ्गयोगज्ञः स गुरुः कथितः प्रिये ! ॥ २० ॥
घृणा शङ्का भय लज्जा जुगुप्सा चेति पञ्चमः ।
कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः ॥ २१ ॥
पाशबद्ध **पशुः** प्रोक्तः पाशमुक्तः **सदाशिव** ।
तस्मात् पाशहरो योऽत्र स गुरुः कथितः प्रिये ॥ २२ ॥
बन्धनं योनिमुद्राया मन्त्रचैतन्यदर्शनम् ।
मात्राद्यं तत्स्वरूपं च यो वेत्ति स गुरुर्मतः ॥ २३ ॥
विनिःक्षिप्तं गतायातं संश्लिष्टन्तु विनीतकम् ।
चतुर्विधां मनोऽवस्थां यो वेत्ति स गुरुर्मतः ॥ २४ ॥
मूलादिब्रह्मरन्ध्रान्तं सप्ताऽम्भोजदलेषु च ।
जीवाचारफलं वेत्ति स गुरुर्नापरः प्रिये ! ॥ २५ ॥
शिवादिक्षितिपर्यन्तंपारपर्य क्रमेण यः ।
अबाह्यतत्वसद्भावं यो वेत्ति स गुरुर्मतः ॥ २६ ॥
येन वा दर्शिते तत्वे तत्क्षणात्तन्मयो भवेत् ।
मन्यते मुक्तमात्मानं स गुरुर्नापरः प्रिये ! ॥ २७ ॥

ये द वा सहजानन्दं हरतीन्द्रियज सुखम् ।
सेव्यास्तेगुरवः शिष्यैरन्ये त्याज्याः प्रतारकाः ॥ २८ ॥
ये मनःस्थं स्वशिष्येषु दर्पणेष्विव रूपतः ।
सङ्क्रामयन्ति ते धन्या गुरवोऽन्ये प्रतारकाः ॥ २९ ॥
संसारभयभीतस्य शिष्यस्य गुरुरादरात् ।
व्रतोपवासनियमैर्नियन्ता स गुरुर्मतः ॥ ३० ॥
यः प्रसन्न क्षणार्द्धेन मोक्षलक्ष्मी प्रयच्छति ।
दुर्लभ तं विजानीयात् गुरु ससारतारकम् ॥ ३१ ॥
य क्षणेनात्मसामर्थ्यं स्वशिष्याय ददाति हि ।
क्रियायासादिरहितं स गुरुर्देवि ! दुर्लभ ॥ ३२ ॥
दीपाद्दीपान्तर देवि ! सञ्चरन्ते यथा तथा ।
यो दद्यात् स गुरुर्ज्ञानमायासादिविवर्जितम् ॥ ॥ ३३ ॥
यो हि सद्य सुखकरं सुलभं स्वात्मसौख्यदम् ।
ज्ञानोपदेशं कुरुते स गुरुर्देवि ! दुर्लभ ॥ ३४ ॥
क्षुधितस्य यथा तृप्तिराहारादाशु जायते ।
तथोपदेशमात्रेण शिष्यं यस्तर्पयेद्गुरुः ॥ ३५ ॥
गुरवो बहवः सन्ति वेदशास्त्रार्थपारगा ।
दुर्लभोऽय गुरुर्देवि ! परतत्वार्थपारग ॥ ३६ ॥
गुरवो बहव सन्ति दीपवच्च गृहे गृहे ।
दुर्लभोऽयं गुरु देवि ! सूर्यवद्भुवि दीपकः ॥ ३७ ॥
गुरवो बहवः सन्ति नानातुच्छफलप्रदाः ।
दुर्लभोऽय कुलेशानि ! लोके स्वात्मप्रदो गुरुः ॥ ३८ ॥
गुरवो बहवः सन्ति कुमन्त्रौषधिदेवताः ।
निगमागमशास्त्रज्ञो मन्त्रज्ञो दुर्लभो गुरुः ॥ ३९ ॥
वर्णाश्रमकुलाचारनिरता गुरवः कति ।
सर्वसङ्कल्पहीनो यः स गुरु देवि ! दुर्लभः ॥ ४० ॥
श्रीगुरोर्यस्य सम्पर्कात् परानन्दोऽत्र जायते ।
गुरु तमेव वृणुयान्नापरं मतिमान्नरः ॥ ४१ ॥
यस्यानुभवपर्यन्ता बुद्धिस्तत्वे प्रवर्तते ।
तस्यावलोकमात्रेण मुच्यते भवबन्धनात् ॥ ४२ ॥
शङ्कया भक्षितं सर्वं त्रैलोक्यं सचराचरम् ।
सा शङ्का भक्षिता येन स गुरु देवि ! दुर्लभ ॥

यथा वह्निसमीपस्थं नवनीतं विलीयते ।
तथा दु खं विलीयेत सदाचार्यसमीपत ॥ ४४ ॥
यथा दीप्तोऽनल काष्ठ शुष्कमार्द्र च निर्दहेत् ।
तथा गुरुकटाक्षस्तु शिष्यपापं दहेत्क्षणात् ॥ ४५ ॥
यथा महाऽनिलादर्कतूलं दश दिशो व्रजेत् ।
तथैव गुरुकारुण्यात् पापराशिः प्रगच्छति ॥ ४६ ॥
दीपदर्शनमात्रेण प्रणश्यति यथा तम ।
सद्गुरोर्दर्शनाद्देवि ! तथाऽज्ञानं विनश्यति ॥ ४७ ॥
सर्वलक्षणसंपन्नो वेदशास्त्रविशारदः ।
सर्वोपायविधानज्ञस्तत्व हीनो गुरुर्न हि ॥ ४८ ॥
पूजाहोमाश्रमाचारतपस्तीर्थव्रतादिकम् ।
मन्त्रदीक्षादिविज्ञान तत्व हीनस्य नि फलम् ॥ ४९ ॥
सुसम्वेद्यं पर तत्वं स्वात्मनश्च न निश्चयः ।
आत्मनोऽनुग्रहो नास्ति परस्यानुग्रहः कुतः ॥ ५० ॥
षट्प्रकारं मनोरूपं प्रत्यक्षे स्वात्मनि स्थितम् ।
या न जानाति चान्यस्य कथं मोक्षं ददात्यसौ ॥ ५१ ॥
सर्वलक्षणहीनोऽपि तत्वज्ञानी गुरुः स्मृतः ।
तस्मात्तत्वविदेवेह मुक्तो मोचक एव च ॥ ५२ ॥
य स्तत्वविन्महेशानि ! स पशुं बोधयत्यलम् ।
तत्वहीनात्कुतो बोध कुतोऽप्यात्मपरिग्रह ॥ ५३ ॥
तत्वज्ञैरुपदिष्टा ये तत्वज्ञास्तेन संशयः ।
पशुभिश्चोपदिष्टा ये देवि ! ते पशवः स्मृता ॥ ५४ ॥
विद्धस्तु वेधयेद्देवि नाविद्धो वेधको भवेत् ।
मुक्तस्तुमोचयेद्बद्ध ममुक्तो मोचक कथम् ॥ ५५ ॥
मतिज्ञश्चोद्धरेन्मूर्खं न मूर्खो मूर्खमुद्धरेत् ।
शिलां सन्तारयेन्नौर्हि किं शिलां तारये च्छिला ॥ ५६ ॥
तत्वहीनं गुरुं लब्ध्वा केवलं भवतत्परम् ।
इहामुत्रफलं किञ्चित् स नरो नाप्नुयात् प्रिये ! ॥ ५७ ॥
अनभिज्ञं गुरुं प्राप्यासंशयोच्छेदकारकम् ।
शिष्यो गुर्वन्तरं गत्वा न तद्दोषैर्हि लिप्यते ॥ ५८ ॥
मधुलुब्धो यथा भृङ्ग पुष्पात्पुष्पान्तरं व्रजेत् ।
ज्ञानलुब्धस्तथा शिष्यः गुरोर्गुर्वन्तरं व्रजेत् ॥ ५९ ॥

शैवे गुरु त्रयं प्रोक्तं वैष्णवे गुरुपञ्चकम् ।
वेदशास्त्रेषु शतशो गुरुरेक कुलान्वये ॥ ६० ॥
प्रेरक सूचकश्चैव वाचको दर्शकस्तथा ।
शिक्षको बोधकश्चैव षडेते गुरव स्मृताः ॥ ६१ ॥
पञ्चैते कार्य भूता स्यु कारणं बोधको भवेत् ।
बोधकान्नापर कश्चिद्गुरु श्रेष्ठो हि बोधकः ॥ ६२ ॥
श्रीगुरुं लक्षणोपेतं संशयच्छेदकारकम् ।
लब्ध्वा ज्ञानप्रदं देवि ! न गुर्वन्तरमाश्रयेत् ॥ ६३ ॥

ललने इत्यादि ललितलक्षणविशेषलक्षित श्रीगुरुरवगन्तव्यः । प्रेरकादयः पञ्चतु सन्त । वेधकस्तुसद्गुरुरिति गुरुसतोरीषद्भेद ।

किञ्च ।

मनुष्यचर्मणा बद्ध[1] साक्षात् परतरः शिवः ।
स्वशिष्यानुग्रहार्थाय गुरुरूप्यटति क्षितौ ॥ १ ॥
सद्भक्तरक्षणायैव निराकारोऽपि साकृति ।
शिवः कृपानिधिर्लोके संसारीव हि चेष्टते ॥ २ ॥
ललाटलोचनं चान्द्री कलामपि च दोर्द्वयम् ।
अन्तर्निधाय च शिवो वर्त्तते गुरुरूपभाक् ॥ ३ ॥
अत्रिनेत्र. शिवः साक्षादचतुर्बाहुरच्युत. ।
अचतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये ! ॥ ४ ॥
नर वदृश्यते लोके श्रीगुरुः पापकर्मिणाम् ।
शिववदृश्यते साक्षान्नराणां पुण्यकर्मिणाम् ॥ ५ ॥
श्रीगुरुं परमं तत्व तिष्ठन्त चक्षुरग्रत. ।
मन्दभाग्या न पश्यन्ति ह्यन्धाः सूर्यमिवोदितम् ॥ ६ ॥
गुरुः सदाशिवः साक्षात्सत्यमेव न संशयः ।
शिव एव गुरुर्नो चेत् भुक्तिमुक्तिप्रदः कथम् ॥ ७ ॥
सदाशिवस्य देवस्य श्रीगुरोरपि पार्वति ! ।
उभयोरन्तरं नास्ति यः करोति स पातकी ॥ ८ ॥
शिवो गुरुमधिष्ठाय पशोः पाशानशेषतः ।
छित्वा परं पद दत्ते तस्मात्परशिवो गुरु ॥ ९ ॥
सर्वानुग्रहकर्तृत्वादीश्वरः करुणानिधिः ।
आचार्यरूपमास्थाय दीक्षया मोक्षयेत्पशुम् ॥ १० ॥

---

१. नद्ध इति पाठ क पुस्तके ।

यथा घटश्च कलश कुम्भश्चैकार्थवाचका: ।
तथा देवश्च मन्त्रश्च गुरुश्चैकार्थवाचका ॥ ११ ॥
यथा देवस्तथामन्त्रो यथा मन्त्रस्तथा गुरु: ।
देवमन्त्रगुरूणां हि पूजनात्सदृशं फलम् ॥ १२ ॥
गुरुरूपं समास्थाय भवपाशनिकृन्तये ।
सिद्धान्तसार वेत्ताऽहं बीजहा स्थिरवेधकृत् ॥ १३ ॥

**इति गुरुप्रशंसा ।**

**इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे मुमुक्षुलक्षणे सद्गुरुलक्षणवर्णनं नाम षष्ठोल्लास: ॥ ६ ॥**

**अथ शिष्य लक्षणम् । कुलार्णवागमरहस्ये ।**

यथा पिपीलिका मन्दं मन्दं वृक्षाग्रजं फलम् ।
चिरेणाप्नोति कमपि देशश्चापि तथा प्रिये ! ॥ १ ॥
यथा कपि स्वशाखाया शाखामुल्लङ्घ्य यत्नत: ।
फलमाप्नोति भक्त्या स्या दुपदेशस्तथा प्रिये ! ॥ २ ॥
यथा विहङ्गम: शीघ्र फलमेव निषीदति ।
तथा ज्ञानोपदेशस्तु कथित: कुलनायिके ! ॥ ३ ॥

प्रिये ! किमुक्तम् । **मुमुक्षु स्त्रिविध: । पिपीलिक: कपी विहङ्गमश्चे**ति । तत्राऽपि क्रमेण कनिष्ठो मध्यम: श्रेष्ठश्च । तत **श्रेष्ठ**लक्षणं वर्णयाम ।

परशिष्यं च पाखण्ड षण्ढं पण्डितमानिनम् ।
हीनाधिकविकाराङ्गविकलाऽवयवान्वितम् ॥ १ ॥
पङ्गु मन्दं च बधिरं मलिनं व्याधिपीडितम् ।
उच्छिष्टं दुर्मुखं चापि स्वेच्छावेषधरं प्रिये ! ॥ २ ॥
दुर्विकाराङ्गचेष्टेहागतिभाषणवीक्षणम् ।
निद्रातन्द्राजडालस्यद्यूतादिव्यसनान्वितम् ॥ ३ ॥
कपाटकुड्यस्तम्भादौ तिरोहिततनुं सदा ।
कुलगूढकरं क्षुद्रं बाह्यभक्तिविवर्जितम् ॥ ४ ॥
किमेकवादिनं स्तब्ध प्रोषितं प्रेषिकं शठम् ।
धनस्त्रीशुद्धिरहितं निषेधविधिवर्जितम् ॥ ५ ॥
रहस्यभेदकं चापि देवि कार्यार्थपातकम् ।
मार्जारवकवृत्तिश्च रध्रान्वेषणतत्परम् ॥ ६ ॥

मायाविनं कृतघ्नं च प्रच्छिन्नावरदायकम् ।
विश्वासघातुकं स्वामिद्रोहिणं पापकारिणम् ॥ ७ ॥
अविश्वासकरं संशयात्मानं सिद्धिकाङ्क्षिणम् ।
आततायिनमादित्सुं कुत्सितं कूटसाक्षिणम् ॥ ८ ॥
सर्वप्रतारकं देवि ! सर्वोत्कृष्टाभिमानिनम् ।
असत्यनिष्ठुरासह्यग्राम्यादिबहुभाषितम् ॥ ९ ॥
दुर्विचारकुतर्कादिकारिणं कलहप्रियम् ।
वृथा वृक्षकटं मूर्खं फल्गुवाचं विडम्बकम् ॥ १० ॥
परोक्षे दूषणकरं प्रत्यक्षे प्रियवादिनम् ।
वाग् ब्रह्मवादिनं विद्याचोरमात्मप्रकाशकम् ॥ ११ ॥
गुणासहिष्णुमहितमार्तं क्रोधनमविके ।
चार्वाकदुर्जनसखं सर्वलोकविगर्हितम् ॥ १२ ॥
पिशुनंपरसंतापं संविदप्रणयं प्रिये ! ।
स्वकेशवादिनं स्वामिद्रोहिणं स्वात्मवञ्चकम् ॥ १३ ॥
जैह्व्यौपस्थ्यपरं देवि ! तस्करं पशुचेष्टितम् ।
अकारणद्वैतहास्यक्लेशाक्रोशादिकारिणम् ॥ १४ ॥
अतिसाहसकर्माणमन्यथापरिहासकम् ।
कामुकं चातिनिर्लज्जं मिथ्यादुश्चेष्टदूषकम् ॥ १५ ॥
असूयामदमात्सर्यदम्भाहङ्कारसंयुतम् ।
इच्छापारुष्यपैशुन्यकार्पण्यक्रौर्यमानसम् ॥ १६ ॥
अधीरं दुःखिनं भीरुमशक्तं स्तब्धमातुरम् ।
अधर्ममत्तं मन्दमतिं मूढं चिन्ताकुलं विटम् ॥ १७ ॥
तृष्णालोभयुतं दीनमतुष्टं सर्वयाचकम् ।
बह्वाशिनं कपटिनं भ्रामकं कुटिलं प्रिये ! ॥ १८ ॥
भक्तिश्रद्धादयाशान्तिधर्माचारादिवर्जितम् ।
मातापितृगुरुप्राज्ञसद्ब्रह्मोहास्यकारिणम् ॥ १९ ॥
पूजाद्रव्यादिबीभत्सुं गुरुसेवाभिमानिनम् ।
स्त्रीद्विष्टं समयभ्रष्टं गुरुशप्तमपीश्वरि ! ॥ २० ॥
इत्यादि लक्षणोपेतं गुरुः शिष्यं परित्यजेत् ।
किमुक्तम् । यथोक्तैर्दुर्लक्षणैरनन्वितो यो मुमुक्षुः स उत्तर इत्यर्थः ।
किञ्च ।
सच्छिष्यं तु कुलेशानि ! शुभलक्षणसंयुतम् ।
शमादिसाधनोपेतं गुणशीलसमन्वितम् ॥ १ ॥

स्वच्छ देहाम्बरं प्राज्ञं धार्मिकं शुद्धमानसम् ।
दृढप्रज्ञं सदाचारं श्रद्धाभक्तिसमन्वितम् ॥ २ ॥
कृतज्ञं पापभीरुं च साधुसज्जनसंमतम् ।
आस्तिकं दानशीलं च सर्वभूतहितेरतम् ॥ ३ ॥
विश्वासविनयोपेतं दीनदेहापवञ्चकम् ।
असाध्यसाधने शूरमुत्साहबलसंयुतम् ॥ ४ ॥
अनुकूलकृपाद्युक्तिमप्रमत्तं विचक्षणम् ।
हितसत्यमितस्मेरभाषिणं मुक्तदूषणम् ॥ ५ ॥
सकृदुक्तगृहीतार्थचतुरं बुद्धिविस्तरम् ।
दक्षमल्पाशिनं गूढचित्तं निर्व्याजसेवितम् ॥ ६ ॥
विमृश्यकारिणं वीरं मनोदारिद्र्यवर्जितम् ।
सर्वकार्यातिकुशलं स्वच्छं सर्वोपकारकम् ॥ ७ ॥
स्वस्तुतौ परनिन्दायां विमुखं सुमुखं प्रिये ! ।
जितेन्द्रियं सुसम्पुष्टं धीमन्तं ब्रह्मचारिणम् ॥ ८ ॥
सन्त्यक्तव्याधिचापल्यदुःशङ्कातर्कसंशयम् ।
नित्यं गुरुसमीपस्थं गुरुसन्तोषकारकम् ॥ ९ ॥
गुरुध्यानस्तुतिकथासेवार्चावन्दनोत्सुकम् ।
गुरुदैवतसद्भक्तंप्रमदापूजनप्रियम् ॥ १० ॥
मनोवाक्तनुभिर्नित्यं गुरुकार्यं समुद्यतम् ।
गुर्वाज्ञापालकं देवि ! गुरुकीर्तिप्रकाशकम् ॥ ११ ॥
गुरुवाक्यप्रमाणज्ञं गुरुशुश्रूषणे रतम् ।
चित्तानुवर्तिनं प्रेक्ष्यकारिणं कुलनायिके ! ॥ १२ ॥
लज्जाविवादगर्वादिवर्जितंगुरुसन्निधौ ।
निरपेक्ष्यं गुरुद्रव्ये तत्प्रसादाभिलाषिणम् ॥ १३ ॥
गुरुध्यानादिनिरतं मोक्षमार्गाभिकाङ्क्षिणम् ।
मोक्षशास्त्रप्रियंदेवि ! पशुशास्त्रपराङ्मुखम् ॥ १४ ॥
इत्यादिलक्षणोपेतं गुरुः शिष्यं परिग्रहेत् ।
किमुक्तम् । पूर्वोक्त लक्षणेभ्यो विलक्षण एतल्लक्षण लक्षितो यः कश्चित् स एवात्र श्रीराजयोगशास्त्रे उत्तमो ऽधिकारी ज्ञातव्यः । किञ्च श्यामे । शृणोषि । शमादिसाधनोपेतमित्युक्ते. । साधनचतुष्टयसम्पन्नोऽपि सच्छिष्यः । शान्तो दात इतिश्रुतेः । किन्तदित्युच्यते । **अपरोक्षानुभूतौ श्रीशंकराचार्यः** । नित्यानित्यवस्तुविवेक' वैराग्यम् । शमादिषट्कसंपत्तिः मुमुक्षुत्वम् । **इतिसाधनचतुष्टयम्** । एतेषां लक्षणानि च ।
नित्यमात्मस्वरूपं हि दृश्यं तद्विपरीतगम् ।
एवं यो निश्चय. **सम्यग्विवेको** वस्तुन स वै ॥ १ ॥

ब्रह्मादिस्थावरान्तेषु वैराग्यं विषयेष्वनु ।
यथैव काकविष्ठायां **वैराग्यं** तद्धिनिर्मलम् ॥ २ ॥
शमोदम: उपरति तितिक्षा
समाधानं श्रद्धा **इतिशमादय: षट् ।**
लक्षणानि च ।
सद्वैववासनात्याग: **शमो**ऽयमिति शब्दित: ॥ १ ॥
निग्रहो बाह्यवृत्तीनां **दम** इत्यभिधीयते ॥ २ ॥
विषयेभ्य. परावृत्ति: पर**मोपरति**र्हि सा ॥ ३ ॥
सहनं सर्वदु:खानां **तितिक्षा** सा शुभा मता ॥ ४ ॥
चित्तैकाग्र्यं तु सल्लक्ष्ये **समाधान**मितिस्मृतम् ॥ ५ ॥
निगमाचार्यवाक्येषु भक्ति: **श्रद्धेति** विश्रुता ॥ ६ ॥

**इतिशमादिलक्षणम् ।**

संसारबन्धनिर्मुक्ति. कथं स्यान्मे कदा विभो ॥ ७ ॥
इति या सुदृढा बुद्धिर्वक्तव्या सा **मुमुक्षुता ।**

**इतिसाधनचतुष्टयलक्षणम् ।**

**भगवद्गीतायामपिश्रीकृष्णः ।**

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रह: ।
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदु:खदोषानुदर्शनम् ॥ २ ॥
असक्तिरनभिष्वङ्ग: पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वं इष्टानिष्टोपपत्तिषु ॥ ३ ॥
मयि चानन्ययोगेनभक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्व मरतिर्जनसंसदि ॥ ४ ॥
अध्यात्मज्ञाननिष्ठत्वं तत्वज्ञानार्थदर्शनम् ।
एतैर्विंशतिलक्षणैरुत्तमोऽधिकारीति ।

**श्रीभागवतेऽपि कपिल: ।**

श्रद्दधानाय भक्ताय विनीतायानसूयवे ।
भूतेषु कृतमैत्राय शुश्रूषाभिरताय च ॥ १ ॥
बहिर्जातविरागाय शान्तचित्ताय दीयते ।
निर्मत्सराय शुचये यस्याहं प्रेयसां प्रिय: ॥ २ ॥

इति । ललने इत्यादिसकलललितलक्षणोल्लसित: स उत्तम: शिष्य: विहङ्गम मुमुक्षुरित्यर्थ: । ईदृग्लक्षणं मुमुक्षुं वीक्ष्य सद्य एव सद्गुरूभि: सच्छास्त्रस्वारस्य-भूत' श्रीराजयोगोल्लसितो ज्ञानोपदेशो दीयते न तु स पुन: परीक्ष्यते ।

अत्र प्रिया । भो: कुलहंस! कियत्कालं परीक्षणम् ।

श्रीहंस: । **आगमे**

सम्वत्सरं तदर्धं च तदर्धं वा प्रयत्नत: ।
अधमादीन्परीक्ष्यादौ पश्चाद्दीक्षेतसद्गुरुरिति ॥ १ ॥

हंसी । स्वामिन् अधमादीनां पुनर्विशेषेण लक्षणं श्राव्यताम् ।

स्वामी । तदपि श्रूयताम् । **आगमे**

आदौ भक्ति: प्रभूता स्यान्मध्ये भक्तिस्तु वा न वा ।
अन्ते विपुलभ्रष्टास्ते **ह्यधमा**ः परिकीर्त्तिता: ॥ १ ॥
आदौ मध्ये महाभक्तिरन्ते त्वल्पापि यस्य तु ।
स शिष्यो मध्यम' प्रोक्तो मया ते कुलसुन्दरि! ॥ २ ॥
आदौ स्वल्पतरा भक्तिर्मध्ये भक्तिस्तु वा न वा ।
अन्ते प्रभूताभक्तिश्चेत् सशिष्यश्चोत्तम: स्मृत इति ॥ ३ ॥

कान्ता । भो: कान्त कथं सन्तस्तानादौ निकषन्ते ।

कान्त: । **आगमे ।**

प्राणद्रव्यप्रदानाद्यैरादेशैश्च समासमै' ।
तन्मर्मसूचकैर्वाक्यैर्मायाभि' क्रूरचेष्टितै' ॥ १ ॥
पक्षपातैरुदासीनैरनेकैश्च मुहुर्मुहु' ॥
आक्रुष्टास्ताडिताश्चापि ये विषादं न यान्ति हि ॥ २ ॥
गुरु: कृपां करोतीति मुदा सञ्चिन्तयेत्सदा ।
श्री गुरो: स्मरणे चापि कीर्तने दर्शनेऽपि च ॥ ३ ॥
वन्दने परिचर्यायामाह्वाने प्रेरणे प्रिये' ।
आनन्द कम्पो रोमाञ्च' स्वरनेत्रादिविक्रिया ॥ ४ ॥
येषांस्यात्तेऽत्रयोग्या: स्युर्दीक्षासंस्कारकर्मसु ।

इति **परीक्षापूर्वकाधिकारलक्षणमुक्तम् ।**

भो: सुधी: सम्यगेतत् यदि तु परोपकाराय परमशिवस्वरूप एव सद्गुरूरवनितले लक्षित: तत्को भेद: । सर्व एव सद्ज्ञानेनोपदेश्या: । सहजसरला' सन्त: खलु ।

श्रीहंस: । बाढम् बृहद्बुद्धे: कल्पतरुचिन्तामणिरत्नाकरतुल्या: परोपकाराय पृथिव्यां निसर्गसरला: सन्त: । सन्ति तदपि जन्मान्तरीयनिजनिज सञ्चितसत्कर्मानुरूपमेव तेभ्य: फलं तु लभ्यम् । सन्तस्तु निमित्तमात्रम् । यथा च श्रीसूर्येण स्वप्रकाशद्वारा प्रबोध्यमाना अपि जना: पृथक्कर्मसु प्रवर्तन्ते ।

किञ्च ।

### श्रीकुलागमेऽपि ।

जन्मान्तरसहस्रेषु या बुद्धिर्विहिता नृणाम् ।
तामेव लभते जन्तुरुपदेशो निरर्थकः ॥ १ ॥
पूर्वजन्मकृताभ्यासात्तत्वज्ञानं प्रकाशते ।
सुप्तोत्थितप्रत्ययवदुपदेशादिकं विना ॥ २ ॥

### वासिष्ठेऽपि ।

उपदेशक्रमो राम! व्यवस्थामात्रपालनम् ।
ज्ञप्तेस्तुकारणं साक्षादात्मप्रज्ञैव केवलम् ॥
ज्ञप्तेरात्मसाक्षात्कारस्येत्यर्थः ।
न शास्त्रेणाऽपि गुरुणा दृश्यते परमेश्वरः ।
दृश्यते स्वात्मनैवात्मा स्वया सत्वस्थया धिया ॥ ३ ॥
स्वात्मनैव स्वपौरुषेणैव सत्वगुणनिष्ठयास्वबुध्या च ।
शास्त्रार्थैर्बुध्यते नात्मा गुरोर्वचनतो न च ।
बुध्यते स्वयमेवैष स्वबोधवशात स्वतः ॥ ४ ॥
स्वबोधवशातः स्वरूपानुसन्धानमहिम्ना स्वत एव बुध्यत इत्यर्थः ।
गुरूपदेश शास्त्रार्थैर्विना चात्मा न बुध्यते ।
एतत् संयोगसत्तैव स्वात्मज्ञानप्रकाशिनी ॥ ५ ॥
गुरुशास्त्रार्थशिष्याणां चिरसंयोगसत्तया ।
अहनीव जनाचार आत्मज्ञानं प्रवर्तते ॥ ६ ॥

अहनिसूर्यसंनिधौ जनाचारः लोकव्यवहारवत् तेषा गुरुशास्त्रार्थशिष्याणां सन्निधिसत्तया स्वात्मज्ञानप्रवृत्तिरित्यादि ।

भोः कामिनि! शुकशङ्करकरामलकादयः कतिचनोपदेशमन्तरेणाऽपि मुक्ता एवाकर्णिताः यथा तालफलं परिपक्ववृन्तं वायुस्पर्शात्पतति नापक्ववृन्तम् । तद्वदत्राऽपि । किञ्च सति तेषां ऽसतामनधिकारिभ्यस्तत्वज्ञानदानप्रत्यवायोऽपि ।

### आगमे ।

अनर्हो तत्वविज्ञानं न तिष्ठति कदाचन ।
तस्मात्परीक्ष्य वक्तव्यं तत्वज्ञानं मयोदितम् ॥ १ ॥
न ब्रूयात् शुद्धविज्ञानमयोग्ये शिवशासनम् ।
आज्ञाभङ्गं तु यः कुर्याद्देवताशापमाप्नुयात् ॥ २ ॥
मन्त्रिदोषश्च राजानं जायादोषस्तथा पतिम् ।
तथा प्राप्नोत्यसन्देहं शिष्यपापं गुरुः प्रिये ! ॥ ३ ॥

### वासिष्ठेऽपि ।

जीवं विवेकिनमिहोपदिशन्ति तज्ज्ञा नो बालमुद्भ्रममसन्मयमार्यमुक्तम् ।
अज्ञं प्रशास्ति किल यः कनकावदातां स स्वप्नदृष्टपुरुषाय सुतां ददाति ॥ १ ॥

विवेकिनं अधिकारिणं उद्भ्रमं उध्धूतविपरीतज्ञानं अत एवार्यैः सभ्यैः मुक्तं परित्यक्तं असन्मयं अविवेकिनं विद्यमानसङ्कल्पं बालं मूर्खं नोपदिशन्तीत्यर्थः ।

आदौ शमदमप्रायैर्गुणैः शिष्यं प्रबोधयेत् ।
पश्चात्सर्वमिदं ब्रह्म शुद्धस्त्वमिति बोधयेत् ॥ २ ॥

अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्
महानरकजालेषु स तेन विनियोजित इत्यादि

उषरशालिवद्वन्ध्यावीर्यवदन्धदर्पणवत्तप्तायस्तोयलववद्दृषद्घर्षणवच्छवामृतवत् । यद्यपि सज्जनैस्तत्वज्ञानमनर्हेषु स्वभावात्समर्प्यैत तथाऽपिमलीमसमानसेषु याथातथ्येन न स्फुरति। यथा पार्षदमणिस्पर्शेन निर्मलं लोहं सर्वतः सुवर्णं भवति । मलिनं तु बाह्यत एव । तथा बलात्सज्जनैः स्वसङ्गेन स्वात्मविद्भिरर्चितोऽपि न तत्वतस्तत्ववित् । बहिरेव ज्ञानी दाम्भिको विचित्रवेषो वाचा उदरम्भरिस्तत्वाभिमानीति । किमेतावता । तत्सङ्ग संस्कारसंस्कृतः कालान्तर-उत्तमोऽधिकारीभूत्वा मुक्तः स्यात् ।

दयिते ! दुष्टक्षेत्रे दिव्यदर्शनबीजं दयालुभिः कथञ्चित्प्रक्षिप्तमपि न तदैवसाकल्येन प्रतिभासते क्वचित्तुव्यर्थमेव । यथा सन्तप्तलोहगोलके घनक्षिप्तजलकणो व्यर्थी भवति स एव कमलदलगतो मुक्तावदाभासते स एव कदल्यांपतितः कर्पूरं भवति सर्पास्ये तु विषमेव। शुक्तौ हि मौक्तिकमित्येवमेव यथाक्षेत्रं तत्वज्ञानमित्यतःसन्तो यथोक्तपरीक्षापूर्वकमेवाधिकारमादावव-लोक्य पश्चात्तद्योग्योपदेशान् कुर्वन्ति नो एवमेवेत्यतः सत्सुमावैषम्यमाशङ्क्यम् । इत्थं प्रागु-दीरितलक्षणान्विताय विहङ्गममुमुक्षवे महानुभावाः श्रीपरमेश्वरस्वरूपिणः श्रीगुरवः सद्य एव सच्छास्त्ररहस्यं ज्ञानोपदेशं सर्वाङ्गत्वेन समर्पयन्ति ते च सारूप्यसम्पन्नाः सहजानन्दरस-साक्षात्कारेण यावद्देहमिहेहमानाः परिणामे परमशिव एव भवन्ति । किञ्च प्रिये प्रागुक्तोत्तमा-धिकारचिह्नार्द्धचिह्नितो यः स कपी मुमुक्षु. तस्मै च ते सन्तः शाखाचन्द्रन्यायेन सगुण-शिवस्वरूपसाक्षात्काराय भक्त्युपदेशं कृत्वा तदनु कस्मिंश्चित्समये पूर्णलक्षणः प्रेक्षितश्चेत् तर्हि पूर्णशिवस्वरूपमुपदिशन्ति नाऽन्यथा । अन्यच्च । यदि तु मध्यमाधिकारलक्षणार्द्धलक्षणलक्षितः कश्चिद्दृष्टिपथं प्राप्तस्तर्हि तस्मै तु बाह्यभक्तिलक्षणकर्मोपदेशमेव पूर्वमुपदिश्याधिकचिह्नश्चेदध्यात्म-भक्त्युपदेशं विधायाग्रेसकलसल्लक्षणसम्पन्नमवलोक्य शुद्धशिवस्वरूपमुपदिशन्ति । किञ्च इतरेऽपि ये केचित्संस्कारवशात् किञ्चिच्चिह्निताः सद्गुरोः सकाशमासादयन्ति तेभ्यस्तु नाम-कीर्तनोपयोगिमन्त्रकर्मोपदेशमेवादौ दिशन्ते नाऽन्यत् ।

तन्वि ! किमेतावतासतां मनसि प्रियाऽप्रियभेदः यदि तु अर्थाद्वा कामतो लोभतो वा भयादपि चान्यत् किञ्चित् स्वप्रयोजनस्य कृतेऽनधिकारिणे सदर्थनं दद्यात् । स सज्जनोऽपि शास्त्रदर्शीतदुरन्तदोषभुगेव । न तस्य तत्सौजन्यम् । स तु स्वस्थानात् स्रंसते । ढौकते च तमन्त-कानुचरवर्गइत्यतोऽधिकारिण एव यथायोग्यमुपदेश्याः सद्भिरिति सिद्धम् । **इतिश्री-हंसमिठ्ठुविरचिते श्रीहंसविलासे त्रिविधमुमुक्षुलक्षणदर्शनं नामसप्तमोल्लासः ॥ ७ ॥**

अथ हंसी भोः कृपालो श्रीहंस ! कथ्यतां यथातथं कितच्छास्त्रमिति ममाद्य सुदिनाह्म् । दैवमप्यानुकूल्येन प्रेक्ष्यते ॥

श्रीहंसः भोः परमार्थपथिके ! प्रेक्ष्यतां अस्यां जगत्यां मुमुक्षूणां कृते परमकृतिभिः प्रपाश्रितानि **पातंजलादी**नि मोक्षदर्शनान्यनेकानि सच्छास्त्राणीव सन्ति शास्त्राणि । किञ्च कर्मवैचित्र्याच्छास्त्रवैचित्र्यम् । एकं शास्त्रं केवलं भोगमेव दर्शयति । अन्यत् मोक्षमेव । अपरंचोभावपि । इतरस्तु तच्छून्यमेव । प्रिये ! अतःकिमस्माभिर्वाच्यम् । भवत्वेवं का नः क्षतिः । वेदमन्वीक्ष्य वदेयम् । तत्रादौ **वेदार्थः**

वेदितात्सकलाभिष्टसद्धर्मार्थनिकर्षणात् ।
दर्शनानां प्रमाणत्वात् **वेद**इत्यभिधीयत

**इत्यागमे**

अहह!!!वेदवारिधेःपारमस्मद्विधैरन्धधिषणैः कथमप्यवाप्तुमशक्यं । नानादैवतत्वाद्-गणेयमन्त्रत्वात् । कर्मवैचित्र्यात्पृथग्विधफलत्वान्नानाविधिनिषेधत्वाच्च । अस्त्वेवमेव पर-मर्षिभिर्जैमिनिमुख्यैः सकलश्रुत्यर्थं पर्यालोच्य मीमांसाशास्त्रमिह व्यक्तीकृतमस्ति । तदनुसन्धाय व्याहरेयम् ।

आः किल दृष्टमेतत् । नैवैत**ज्जैमिनि**ना विनिर्मितं तदर्हतिसच्छास्त्रं भवितुं मोक्षाभावत्वात् ।

किमुक्तं **मीमांसक**मते मोक्षोनास्ति ।

कर्मणा जायते जन्तुः कर्मणैव प्रवर्धते ।
कर्मणा लीयते काले कर्ममूलमिदञ्जगदिति ॥ १ ॥

इह ज्योतिष्टोमादिक्रतुनिकरैरिन्द्राद्या देवता इष्ट्वा यजमानो देहान्ते स्वर्गसुखमनुरूध्यात् । एवमेव ब्रह्महननादिभिर्निषिद्धकर्मभीरौरवादिनरकयातनामाप्नुयात् । किञ्च न स्वर्गसुखादपरं सुखमस्तिकिञ्चित् । नहि नहि नरकदुःखाद्दुःखमन्यत् । न च मुक्तानां सुपर्वपदादपरमस्ति पदं किञ्चित् । वस्तुतः मुक्त एव न सम्भवति । कुतः कर्मणां नित्यत्वात् । यः कर्मभिर्मुक्तः स मुक्त इति तु मनोविलासमात्रम् । न कैश्चित्कर्मभिरुडयन्ते जन्तवो जगत्यां । येन मुक्ताः स्युः । ननु 'क्षीयन्ते चास्यकर्माणि तस्मिन्दृष्टे परावरे' इत्यादि**श्रुतिभिः** कर्मणामनित्यत्वं प्रदर्शितं ।

बाढम् ।

"कृतकर्मक्षयो नाऽस्ति कल्पकोटिशतैरपि" अवश्यमेव भोक्तव्यं कृतं कर्म शुभाऽशुभमिति सञ्चितप्रारब्धक्रियमाणानामनेकेषां कर्मणां फलभोगावसाने क्षयः सूचितोऽपि तत्वतस्तद्बीज-क्षयो न स्यात् । जगदुत्सेदापत्तेः कृत्स्नकर्मणां मूलभूतं यत्कर्म तदुत्सेदे जगदुत्सेदः । बीजवृक्षवत् । वृक्षौषध्यादीनां बीजवत् जगतां बीजं कर्मैवास्ति । न तस्य वास्तवः क्षयो युक्तो भवितुम् । ननु जगतोऽपिप्रदर्शितः श्रुतिभिः प्रलयः 'तज्जलानिति' तस्माज्जायत इतितज्जं तस्मिँल्लीयते तल्लमिति तज्जलार्थः । सत्यम् । कालवैवश्याज्जगतोऽवस्थात्रयमावेद्यते वेदैः कदाचिदुदयो जगतः कियत्कालं स्थितिः प्रलयोऽपि तद्वत् । न तु तात्विकःप्रलयो जगतः श्रुत्यर्थविद्भिः शक्यो वक्तुम् । पुनरुत्पत्तेः। ननु यल्लीयते तदेवोत्पद्यतइत्यत्र किं प्रमाणम् । सत्यम् । **श्रुति**रेव 'धाता यथा पूर्वमकल्पयत्' 'तइहव्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवति तदा भवन्तीत्यादिः । न जगतः प्रलय आत्यन्तिकः । किञ्च अनादिर्नैसर्गिकोऽयं कर्मव्यवहारो न हि कैरप्यास्तिकैरपाकर्तुं योग्यः। ननु सुषुप्तौ कर्माभावः । सत्यम् । श्रोतव्यम् । यावच्चेतनस्य चेतसा साकं संयोगः चित्तस्य हृषीकैः सत्तासंयोगः विषयिणां च विषयैः समं तावत्कर्मव्यवहारः स्फुटं प्रवर्त्तते । न चैतत् सुषुप्त्य-वस्थायां सम्भवति । कस्मात् । मनसोऽवस्थाविशेषत्वात् । यथा कश्चनभारवाही श्रान्तो भारं क्वचिद्विश्रम्य सुखमासीनःसुप्तो वा ऽतन्मनस्कः पुनस्तद्भारं शिरसि निवेश्य पर्यटति

तद्वन्मनोऽपि जाग्रदवस्थायां सुखं लिप्समानं यत्र तत्र नानाकर्मतन्त्रं वितन्वत् स्वप्नावस्थायां च तदाभासमप्याचरत्। परं परिश्रान्तं सत् सुषुप्तौ क्षणं सर्वव्यापारशून्यं स्थित्वा पुनस्तत्तद्वस्थायां तत्तत्कर्मतन्त्रं हि निवर्त्तयत्येव। एवमेव प्राकृतप्रलयेऽपि तत्तत्कर्मफलभोगार्थं मुहुरुत्पत्तित्वात्। किञ्च नास्तिकश्च न कर्ममुक्तः क्वापि। **भगवद्गीतायामपि।**

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ १ ॥
विहितकर्मत्यागे प्रत्यवायोऽपि तत्रैव।
येत्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्।
• सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसइति ॥ २ ॥

अतो नित्यमेव वर्ष्मवद्भिःकर्मतन्त्रं वितन्यते। यद्यत्कर्म तत्तत्फलमत्। इच्छामूलत्वात् फलन्त्ववश्यमेवभोक्तव्यम्। अतस्तत्तत्कर्मफलभोगार्थं भोगायतनमुत्पद्यते भोगावसाने तस्य क्षयश्च। अत एव मोघैव मोक्षाशा मुमुक्षूणामिति **मीमांसकमतम्** ॥

तन्वि! अतो निगमार्थनिर्मितमपि मीमांसाशास्त्रं न वक्तुं युक्तं सच्छास्त्रमिति।

भो भर्त्तः! कतिविधङ्कर्म।

वनिते! नानाविधं तत् केन कलयितुं शक्यम्। तथा ईषद्च्छ्रूयताम्। कर्म द्विविधं। श्रौतं स्मार्त्तञ्च तत्र तावत्श्रौतं नामकेवलं श्रुतिभिर्यद्दर्शितं। अग्निष्टोमात्यग्निष्टोमवाजपेयोक्थ्यषोडश्यऽतिरात्रादिसप्तसामसंस्था सप्तहविः संस्थात्मकयज्ञलक्षणम्। तत्राप्यध्वर्युहोत्रुद्गातृ प्रमुखैर्यजूऋक्साम-ब्राह्मणैः स्वस्वमन्त्रसूचिताः शतक्रतुप्रभृतीर्देवताः सोमवल्लीरसभरितचमसपात्रप्रदानेन पुरोडाशादिना च सन्तोष्य स्वयञ्च तानात्मानमपि तत्तद्यज्ञशेषेण द्रव्येण सन्तोषयन् कृतकृत्यो भूत्वाऽऽयुषोऽवसाने देवयानेन दिव्यलोकमधिरुह्य आपुण्यबलं तत्र रम्भोर्वशीतिलोत्तमादिस्ववेश्यापीयूषनन्दनोद्यानसुमनः सौरभाद्यान्नानाविधान्दिव्यभोगानजरामरोभुञ्जन् यथासुखमवतिष्ठते।

## श्रौतार्थश्च।

श्रुतानेकमहामन्त्रयन्त्रतन्त्राधिदैवतम्।
. तत्वतो भेदविधिना **श्रौत**मित्यभिधीयते ॥ १ ॥

## इत्यागमे।

श्रुतौ काण्डत्रयं वर्तते **कर्मोपासनं ज्ञान**मिति तन्**मीमांसकमते** तु कर्मकाण्डमेव केवलम्। कर्मैवोपासनाकाण्डम्। ज्ञानकाण्डन्तु कर्मणः प्रशंसामात्रमेव न तेन किञ्चिदपि लभ्यम्। अत्र **जैमिनिसत्रम्।** आम्नायस्यक्रियार्थत्वादानर्थक्यमतदर्थानाम्।

## आम्नायार्थस्तु।

आदित्वात्सर्वधर्माणां मनोल्लासप्रवर्त्तनात् यज्ञादिधर्महेतुत्वा**दाम्नाय**इति कथ्यते।

## इत्यागमे।

आम्नायो वेदः श्रुतिर्निगमइत्येकपर्यायाः। किमुक्तम्। सर्वस्य वेदस्य क्रियार्थत्वम्। अत एव क्रियार्थरहितस्य ज्ञानकाण्डस्योपनिषल्लक्षणस्य तु नैष्फल्यात्तेन कर्मकाण्डमेव प्रशस्यते।

कर्मकाण्डस्यैव श्रैष्ठ्यमितिमीमांसकमतम्। किञ्च सकलेषु च श्रौतमन्त्रेषु कर्मैव श्रूयते यद्यत्कर्म तत्तत् सफलम्। मन्त्रास्तु प्राग्दर्शित'तत्सवितुरिति'मन्त्रे धीमहीति ध्यानलक्षणं कर्म। धिय इति कर्माणि वा मेधे विषयाद्धीरिति च। भर्गशब्देनाऽपि अन्नम्।

तत्राथर्वणं।

वेदाश्छन्दांसि सवितुर्वरेण्यं भर्गोदेवस्य कवयोऽन्नमाहुः
कर्माणि धियस्तनुते प्रब्रवीमि प्रचोदयात् सवितायाभिरेतीति।
धियो भर्ग इति फलम्।

**अग्न आयाहि वीतये गृणानो हव्यदातये।**
**निहोता सत्सि बर्हिषि ॥ १ ॥**

व्याख्यायते। हे अग्ने अङ्गनादि गुणविशिष्टत्वं आयाहि अस्मद्यज्ञ प्रत्यागच्छ। किमर्थं। वीतये हविषां च पुरोडाशादीनां भक्षणाय। वीतिर्भक्षणार्थः। कीदृशः सन्। गृणानः अस्माभिस्तूयमानः। गृणस्तुतौ। पुनः किमर्थं। हव्यदातये। देवेभ्योहविः प्रदानाय। 'अग्निमुखेन वै देवा हविर्गृह्णति' ब्राह्मणे। आगत्य च होता। देवानामाह्वाता सन् बर्हिषि। आस्तीर्णे दर्भे निषत्सि। निषीदेत्यर्थः। एतस्मिन्नपि कर्मफलार्थत्वम् ॥ १ ॥

**आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतं।**
**मध्वा रजांसि सुक्रतू ॥ २ ॥**

सुक्रतू शोभनकर्माणौ। हे मित्रावरुणौ नः अस्माकं। गव्यूतिं। गवांमार्गं गो निवासस्थान। घृतैः क्षरणसाधनैः पयोभिरुदकैः। आउक्षतं। समन्तात् सिञ्चतां ॥ अस्मभ्यं दोग्ध्रा: गाः प्रयच्छतमित्यर्थः। किञ्च। मध्वा मधुरेण सुखरसेन। रजांसि। पारलौकिकानि अस्मदावासस्थानानि। सिञ्चतम् ॥ २ ॥
सकर्मफलोऽप्येषः।

**विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे।**
**इन्द्रस्य युज्यःसखा ॥ ३ ॥**

हे ऋत्विगादयः, विष्णोः कर्माणि पालनादीनि पश्यत। यतो यैः कर्मभिः व्रतानि अग्निहोत्रादीनि पस्पशे। सर्वो यजमानः स्पृष्टवान्। स्पश बाधन स्पर्शयोः। विष्णोरनुग्रहादनुतिष्ठतीत्यर्थः। तादृशो विष्णुः। इन्द्रस्य युज्यः योज्यः। अनुकूलः सखा भवति ॥ ३ ॥

**अग्निमीळेपुरोहितं यज्ञस्य देवमृत्विजं।**
**होतारं रत्नधातमम् ॥ ४ ॥**

अहं अग्निनामकं देवं इडे स्तौमि। इडस्तुतौ। डलयोरैक्यं। कीदृशं। यज्ञस्य पुरोहितं यथाराज्ञः पुरोहितः तदभीष्टं सम्पादयति। तथा अग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा। यज्ञस्य सम्बन्धिनि पूर्वभागे आवहनीय रूपेणावस्थितं। पुनः कीदृशं। होतारं ऋत्विजं देवानां यज्ञेषु होतृनामकऋत्विगग्निरेव। तथा च श्रूयते 'अग्निर्वैदेवानां होतेति।' पुनरपि कीदृशं। रत्नधातमम्। यागरूपाणां रत्नानांअतिशयेन धारयितारं पोषयितारं वा ॥४ ॥

**शन्नोदेवीरभीष्टये आपो भवन्तु पीतये।**
**शंयोरभिस्रवन्तु नः॥ ५॥**

आपः नः अस्माकं शं कल्याण्यो भवन्तु। किं भूताः। देवीः देव्यः स्तुत्यादिविषयाः किमर्थं अभीष्टये उपचयार्थं पीतये पानाय च। किञ्च नः अस्माकं शंयोः कल्याणसंयोगाय अभिस्रवन्तु अभिमुखं गच्छन्तु। एवमेव ऋग्यजुः सामाथर्ववेदोदीरिताः सर्वे मन्त्रास्तत्तत्सूचिततत्तत् क्रतुकर्म विशेषेषु प्रयोजितास्तत्तत्फलविशेषान् ददति। यद्यल्लभ्यं तत्तन्नश्वरमित्यतः श्रौतकर्मशास्त्रमसदित्यामनन्ति तत्वविदः।

श्रूयतां सुन्दर्या सम्प्रति **स्मार्त्तकर्मलक्षणं** वच्मः।

स्वस्वशाखाभेदेन गृह्यसूत्रतत्तत्परिशिष्टतत्तद्याज्ञवल्क्यादिस्मृतिविशेषैर्विधापितं यत्तत्**स्मार्त**मुच्यते।

**स्मृत्यर्थश्च।**

स्मरणोत्सुकचित्तानां धर्माधर्मनिरूपणात्।
तिमिरोत्सादनाद्देवि! **स्मृ**तिरित्यभिधीयते॥ १॥

त्रिविधं स्मार्तं देवपितृमनुष्यभेदात्। तत्राऽपि देवादीनुद्दिश्य यद्यत्कर्मतन्त्रं प्रकटितं। तत्र ये ये मन्त्रा वैदिकाः स्मार्त्ताश्च। ते ते तत्तत् क्रियाविशेषेषु प्रयोजिता अनेकफलदा भवन्ति।

यथा देवकर्मणि।

**ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति।**
**तेषां यो अज्यानिमजीजिमावहास्तस्मै नो देवाः परिदत्तेह सर्वे॥१॥**

**व्याख्या।**

हे सर्वे देवाः! यूयं इहकर्मणि प्रवृत्तान् नः अस्मान् तस्मै पथे परिदत्त समर्पयत। कस्मै इत्युत्प्रेक्षायां ये चत्वारः देवयानाः स्वर्गमार्गाः आश्रमा इत्यर्थः। पथयः पन्थानः। द्यावा पृथिवी। षष्ठ्यर्थे द्वितीया। द्यावा पृथिव्योः अन्तरा मध्ये वियन्ति विविधं गच्छन्ति। तेषां चतुर्णां पथां मध्ये यःपन्थाः। अजीजिं जीजृअभिभवे नजीजिः अजीजिः तां, अनभिभवं। आवहाः आवहति, प्रापयति। किंभूतां अजीजिं अज्यानिं, ज्यावयोहानौ नविद्यते ज्यानिः वयोहानिः यस्यां तां अज्यानिं। क्षेमेणाभीष्टदेशामृतत्वप्राप्तिहेतुः। इत्थम्भूतायेत्यर्थः॥१॥

**आकूतीं देवीं मनसा प्रपद्ये यज्ञस्य मातरं सुहवा मे अस्तु**
**यस्यास्त एकमक्षरं परं सहस्रायुतं च शाखाः।**
**तस्यैवाचे निह्वे जुहोम्या मा वरो गच्छतु श्रीर्यशश्च॥२॥**

आकूती, शरीराधिष्ठात्रीवाग्देवता, देवीदानादिगुणयुक्ता। तामहं मनसा प्रपद्ये प्रपन्नोऽस्मि। कथं भूतां यज्ञस्य, मातर निर्मात्री। किंच, सा देवी, मे मम, सुहवा शोभनाह्वाना अस्तु भवतु सैव प्रत्यक्षीकृत्योच्यते, यस्याः ते तव एकं अक्षरं 'ॐमित्येतद्ब्रह्म' वाङ्मयमूलं। परं प्रकृष्टं सहस्राः बहुप्रकाराः। अयुतं दशसहस्रसंख्याश्च, शाखाः तस्यै एवं भूतायै वाचे

निहवे आह्वाने सति, जुहोमि, तदुद्देशेन अग्नौ हविः प्रक्षिपामि। मा मां, वरः अभिप्रेतफलं, आगच्छतु, श्री.यशश्चआगच्छतु ॥२॥

एवमाद्यावैदिकामन्त्रा सफलाः सकर्मकाश्च
स्मार्त्ताअपि तथैव ज्ञेयाः

ते च

प्रार्थये द्रविणोदरं।

आरोग्यमायुरैश्वर्यं धीर्धृतिः शं बलं यशः।
ओजो वर्चः पशून्वीर्यं ब्रह्म ब्राह्मण्यमेव च ॥१॥
सौभाग्यं कर्मसिद्धिं च कुलज्यैष्ठं सुकर्तृताम्।
सर्वमेतत्सर्वसाक्षिन् द्रविणोदररीहिणः ॥२॥

इत्यादयो देवकर्मणिमन्त्राः।

पैत्र्येऽपि।

**वाजे वाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः।**
**अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः ॥१॥**

हे वाजिनः। वाजं अन्नं अस्त्येषामिति वाजिनः पितरः नः अस्माकं, वाजेवाजे, अन्नेऽन्ने श्राद्धोपस्थापितं यत्तत्र सर्वत्र, यूयमितिशेषः। अवत रक्षत, च पुनःधनेषु अन्नातिरिक्तश्राद्धीय द्रव्येषु अवतेतिसम्बन्धः। किंभूता यूयं विप्राः विप्रमूर्त्तयः विप्रदेहस्था इति यावत्। पुन. किं लक्षणाः। अमृताः अमृतधर्माणः, पुनः कीदृशाः, ऋतज्ञाः सत्यज्ञानशालिनः, किं च रक्षित्वा, अस्य मध्वः श्राद्धदत्तान्नमधुनः रसमितिशेषः। पिबत, पीत्वा च, मादयध्वं मदयुक्ता भवत-तृप्ताः सन्तः। देवयानैः ये वर्त्मभिर्देवा यान्ति, तैः पथिभिः वर्त्मभिः, यात गच्छत ॥१॥

स्मार्त्तश्च।

अन्नं च नो बहुभवेदतिथींश्च लभेमहि।
याचितारश्च नः सन्तु मा च याचिष्म कंचन ॥१॥

इत्यादि।

मानुष्ये च विवाहे।

**मम व्रते ते हृदयं दधातु मम चित्तमनु चित्तं ते अस्तु।**
**मम वाचमेकमना जुषस्व बृहस्पतिस्त्वा नियुनक्तुमह्यम् ॥१॥**

वरः पठति। हे कन्यके! ते तव हृदयं मनः मम व्रते कर्मणि दधातु स्थापयतु मद्व्रते त्वद्हृदयं निधेहीत्यर्थः। अन्यच्च मम चित्तमनु येन तेन ते तव चित्तमस्तु। एतदुक्तं भवति, आवयोरेकचित्तं भवत्वित्यर्थः। किच, मम वाचं, मदीयां वाणीं एकमना अनन्यचेताःत्वमितिशेषः। जुषस्व सेवस्व प्रीतियुक्तां वाचंकुर्वित्यर्थः किच, बृहस्पतिः देवगुरुः त्वा त्वां मह्यं मदर्थी नियुनक्तु, नियोजयतु, सम्बन्धयत्विति यावत ॥१॥

## सीमन्ते ।

**येनादितेः सीमानं नयति प्रजापतिर्महते सौभगाय ।**
**तेनाहमस्यै सीमानं नयामि प्रजामस्यै जरदष्टिं कृणोमि ॥ २ ॥**

प्रजापतिः जगतः स्रष्टा । येन वीरतरेण । अदितेः देवमातुः सीमान सीमन्तं नयति नीतवान् । किमर्थं महते बृहते सौभगाय सुभगत्वाय तेन शरेण अहं भर्त्ता अस्यै अस्याः प्रकृतायाः स्त्रिय. । सीमानं सीमन्तं नयामि करोमि । किञ्च । अस्यै अस्याः ' बहुलं छन्दसी ' ति षष्ठ्यर्थे चतुर्थी । प्रजां पुत्रपौत्रादिकां जरदष्टिं जरापर्यन्तां दीर्घकालजीविनीं कृणोमि करोमि अहं भर्त्तेति सम्बन्धः ॥ २ ॥

## उपनयने

**येन पूषा बृहस्पतेर्वायोरिन्द्रस्य चावपत् ।**
**तेन ते वपामि ब्रह्मणा जीवातवे (जीव+नाय) (दीर्घायुष्ट्वाय) वर्चसे ॥३॥**

पूषा देवः येन स्वधितिनोदुम्बरक्षुरेण । बृहस्पतेः वायोः च पुनः इन्द्रस्य आवपत् । भद्रंकृतवानित्यर्थः वपिरत्रछेदनार्थः ब्रह्मणा ब्रह्मभूतेन तेन स्वधितिना अहमितिशेषः ते तव आवपामि भद्रं करोमीत्यर्थः । किमर्थं जीवातवे पतद्व्याचष्टे जीवनाय अस्याप्यर्थः दीर्घायुष्ट्वाय वर्चसे तेजो विवृध्यर्थम् ॥ ३ ॥

प्रिये ! कर्मशास्त्रे एवमेव ये ये यत्र यत्र मन्त्रास्ते ते तत्र तत्र सफला, सकर्मकाश्च वेदितव्याः । किं बहुना सर्वथाऽपि मन्त्रकर्मफलव्रातानामवसाने निश्चयेन विनाश एव 'इहकर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयत' **इति श्रुतेः** । अत, कृत्स्नं कर्मशास्त्रं विचार्यमाणे असदेवेति सिद्धान्तः ॥

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे मीमांसाशास्त्रलक्षणवर्णनं नामाष्टमोल्लासः ॥ ८ ॥**

अथ बरवर्णिनी । वरं वरं विद्वन् ! महामुग्धधियो मम मानुष्याः श्रीमत्सु सङ्गः केनचित् कृपालुना विधात्रा घटित इत्याशंसापूर्वकं स्वामिनं नत्वा धर्मकर्मशास्त्रश्रवणानन्तरमिदमाह । भो विपश्चिद्विदितमेतत्कर्मशास्त्रतत्वम् ।

पतिः । प्रेयसि ! किन्तच्छास्त्रमिति प्रश्नाकाङ्क्षाचेच्छृणु श्रीमता **पतञ्जलिना** प्रोक्तं यत्तत् सच्छास्त्रमितीतरे कृतिनो ब्रुवते कुतः कर्ममोचनत्वात् । 'कर्मबद्धो भवेज्जीव, कर्ममुक्तः सदाशिव' इत्यङ्गीकृत्य हठात् कृत्स्नकर्मभ्यो जीवं मोचयित्वा साक्षात् शिवरूपं प्रापयति । पातञ्जलमित्यतो **हठयोगविधिं** व्याचक्ष्महे । **अथ तत्वदर्शनोपायो योग** इति पातञ्जलं[1] सूत्रम् । यथा अष्टाङ्गै र्दशाङ्गैर्वा **हठयोगः** सिध्यति । तत्र तावत् ।

**यमः । नियमः । आसनं । प्राणायामः । प्रत्याहारः । धारणा । ध्यानं समाधिः । इत्यष्टाङ्गानि ।**

---

१ नेदंपातञ्जलसूत्र । तदसूत्रेष्वदर्शनात् । इद श्रीमच्छङ्करभाष्ये उट्टङ्कितम् । कस्माच्चित्प्राचीनयोगग्रन्थात् ।

पञ्चदशाङ्गानि तु। यम.। नियमः। त्यागः। मौनं। देशः। कालः। आसनं। मूलबन्धः। देहसाम्यं। दृक्स्थितिः। प्राणायामः। प्रत्याहारः। धारणा। ध्यानं। समाधिः।

एतेषां लक्षणानि तु। तृणादिषु प्रपञ्चजातेषु वस्तुषु अहिंसा। तथैतदादिषु चास्तेयता। वचनेषु सत्यता। ब्रह्मचर्यं। अपरिग्रहश्च। एषपञ्चाङ्गोयमः॥ १॥ शौचं। तपश्चर्याः। सन्तोषः। स्वाध्यायः। आराधनं। एषः पञ्चाङ्गो नियमः। हठप्रदीपिकायाञ्च। (?)

अत्याहारः प्रयासश्च प्रज्वाल्योनियमग्रहः।
जनसङ्गश्च लौल्यञ्च षड्भिर्योगो विनश्यति॥ १॥

उत्साहान्निश्चयाद्धैर्यात्तत्त्वज्ञानाच्चदर्शनात्।
जनसङ्गपरित्यागात् षड्भ्यो योगस्तु सिध्यति॥ २॥

अक्रोधवैराग्यजितेन्द्रियत्वं क्षमा दया सर्वजनप्रियत्वम्।
त्यागस्ततो लोभभयेऽप्यशोको योगाधिकारो दशलक्षणोऽसौ॥ ३॥

किञ्च। मनसा शरीरेण च सर्वथा सांसारिकवस्तुष्वसङ्गतात्यागः॥ ३॥ निः सङ्गेऽपि केनचित् प्रसङ्गेन वक्तव्यं स्यात्तत्र सत्यमेव वचनं मौनम्॥ ४॥

सुराज्ये धार्मिके देशे सुभिक्षे निरुपद्रवे।
एकान्ते मठिकामध्ये स्थातव्यं हठयोगिना॥ १॥

अभ्यद्वारमरन्ध्रगर्त्तविटपन्नात्युच्चनीचापितं
सम्यग्गोमयसार्द्रलिप्तममलन्निःशेषबाधोज्झितम्।
बाह्ये मण्डपवेदिकोपरचितप्राकारसम्वेष्टितं
प्रोक्तं योगमठस्य लक्षणमिदं सिद्धैर्हठाभ्यासिभिः॥ २॥

इति देशः।

सुदिने सुमुहूर्त्तेऽपि ग्रहताराबलान्विते।
शुभे मासे हठाभ्यासः कर्तव्यो हठयोगिभिः॥

इति कालः।

आसनानि तु बहूनि सन्ति। किन्तु तेषां चत्वारि सिद्धपद्मसिंहभद्राभिधानानि मुख्यानि। तत्राऽपि सिद्धासनं प्रकृष्टम्। अतस्तल्लक्षणमेवोच्यते।

हठप्रदीपिकायाम्॥

योनिस्थानकमूलमङ्घ्रिघटितं कृत्वादृढं विन्यसेत्
मेढ्रेपादमथैकमेव हृदये धृत्वा समं विग्रहम्।
स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्यन्भ्रुवोरन्तरं
चैतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते॥ १॥

मेढ्रादुपरिनिक्षिप्य सव्यगुल्फं तथोपरि ।

गुल्फान्तरञ्च निक्षिप्य **सिद्धासन**मिदं भवेत् ॥ २॥

इति कश्चिदित्यासनम् ।

अथ **प्राणायामः** । तत्रनाडीचक्रसंशोधनाय । योगशास्त्रमार्गेण प्राणायामं विद्धीत । उक्तञ्च ॥

मलाकुलासु नाडीषु मारूतो नैव मध्यग ।
कथं स्यादुन्मनीभावः कार्यसिद्धिः कथं भवेत् ॥ १ ॥
शुद्धिमेति यदा सर्वं नाडीचक्रं मलाकुलम् ।
तदैव जायते योगी प्राणसंग्रहणे क्षमः ॥ २ ॥ इति
प्राणश्चेदिडया पिबेन्नियमितं भूयोऽन्यथा रेचयेत्-
पीत्वा पिङ्गलया समीरणमथो बध्वा त्यजेद्वामया ।
सूर्याचन्द्रमसोरनेन विधिना बिम्बद्वयं ध्यायता ॥
शुद्धा नाडीगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः ॥ ३ ॥
इडा तु वामनासायां दक्षिणायाञ्च पिङ्गला ।
तयोर्मध्यगता नाडी सुषुम्णा सर्वसिद्धिदा ॥ ४ ॥
इडायान्तु स्मृतश्चन्द्रः पिङ्गलायां प्रभाकरः ।
किञ्च मात्राभेदोऽपि पूरकादिषु ॥
पूरकं नृप १६ मात्राभिश्चतुःषष्ट्या ६४ तु कुम्भकम् ।
द्वात्रिंश ३२ न्मातृकाभिस्तु कुर्याद्रेचकमुत्तमम् । ॥ ५ ॥

इति **प्राणायामः** ।

दृषयत्प्रतिकृतिरिव हस्तपादाद्यवयवव्रातं स्तब्धीकृत्य समतयाऽवस्थानं **देहसाम्यम्** ।

तत्कृते मशकमक्षिकापिपीलिकादिभिर्गाढं बाधितोऽपि धैर्येण तदवधीर्य तथैवस्थेयं

चञ्चलाऽपि दृष्टिर्हठाद्भ्रुवोरन्तरन्निर्भिद्य स्वनासाग्रएव निवेशनीया । यद्यपि तत्र चिरकालं न तिष्ठेत्तदपि शनैरितस्ततः समाकृष्य पुनस्तत्रैवस्थाप्येति **दृक्स्थितिः**

अथाऽत्र योगसिद्धयेऽन्यान्यऽपि तदङ्गानि कानिचिद्यथारुचि चेतश्चमत्कृतये च कर्तव्यानि तानि तु ॥

**धौतिर्वस्तिश्च नेतिश्च ताटकं नौलिकं तथा ।**
**कपालभाति चैतानि षट् कर्माण्याप्तिसिद्धये ॥ १ ॥**

अन्यच्च

सूर्यभेदनमुज्जायी तथा सीत्कार शीतली ।
भस्त्रिका भ्रामरीमूर्छा केवलश्चाष्टकुम्भकाः ॥ १ ॥

एवमाद्येषु कर्मसु कृतेषु सत्सु नाडीचक्रस्य शुद्धिः ।

तल्लक्षणं हि ।

वायो' कृशत्वं वदने प्रसन्नता नादस्फुटत्वं नयने च निर्मले ।

आरोग्यता बिन्दुजयोऽग्निदीपनं नाडीषु शुद्धास्विति **सिद्धिलक्षणम्** ॥ १ ॥

किञ्च ।

गुदात्तुद्व्यङ्गुलादूर्ध्वं मेढ्रात्तुद्व्यङ्गुलादधः ।

**मूलाधार** इति प्रोक्तो यत्र तिष्ठति कुण्डली ॥ २ ॥

प्रसुप्तभुजगाकारा सार्द्धत्रिवलया शुभा ।

तडित्कोटिप्रभाशक्तिर्बिसतन्तुतनीयसी ॥ ३ ॥

**आगमे** नामान्तराणि च ।

**कुटिलाङ्गी कुण्डलिनी भुजङ्गी शक्तिरीश्वरी ।**

**कुण्डल्या चेति रुद्धन्ति(?)शब्दाः पर्यायवाचकाः ॥ १ ॥**

किन्तु ।

येन मार्गेण गन्तव्यं ब्रह्मस्थानं निरामयम् ।

मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी ॥ २ ॥

तस्मात्सर्वप्रयत्नेन प्रबोधयितुमीश्वरीम् ।

ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासं समाचरेत् ॥ ३ ॥

इत्यतो **मुद्रा**कर्म कर्तव्यम्

**मुद्रानामानि च ।**

महामुद्रा महाबन्धो महावेधश्च खेचरी ।

उड्डीयानं मूलबन्धस्ततो जालन्धराऽभिधः ॥ ४ ॥

करणी विपरीताद्या वज्रोली शक्तिचालनम् ।

**इति दशमुद्राः ।**

एतासां पूर्वोक्तानामप्यङ्गविशेषाणां लक्षणानि तु पातञ्जले प्रेक्ष्य ज्ञातव्यानि नात्रविस्तरभिया लिखितानि

किञ्च ।

गोमांसं भक्षयेन्नित्यं पिबेदमरवारुणीम् ।

कुलीनं तं विजानीयादितरे कुलघातुकाः ॥ १ ॥

इत्यर्थे

**गोशब्देनोदिताजिह्वा** तत्प्रवेशो हि तालुनि ।

**गोमांसभक्षणं** तत्तु महापातकनाशनम् ॥ २ ॥

जिह्वाप्रवेशसम्भूता वह्निं गोतापितादरम् ।

चन्द्रात्स्रवति यत्सारः सस्यादमर**वारुणी** ॥ ३ ॥

गङ्गायमुनयोर्मध्ये बालरण्डां तपस्विनीम् ।

बलात्कारेण गृह्णीयात्तद्विष्णोः परमं पदम् ॥ ४ ॥

इडा भगवती गङ्गा पिङ्गला यमुना स्मृता ।

इडापिङ्गलयोर्मध्ये बालरण्डां सरस्वतीम् ॥ ५ ॥

पुच्छे प्रगृह्य भुजगीं सुप्तामुद्बोधयेच्च ताम्।

इति।

निद्रां विहाय सा ऋज्वी चोर्ध्वमुत्तिष्ठते हठात्॥ ६॥

तां धारयेदुत्तमांगे दिव्यदृष्टिप्रदायिनी॥

कान्ते! एवमाद्यनेककर्मभिर्हठान्मूलाधारस्थितामधोमुखीं तां कुण्डलिनीं ऋज्वीकृत्य शून्यपदव्या षट्पद्मानि भेदयित्वा ऊर्ध्वमानीय द्वादशान्तस्थितस्य श्रीपरमशिवस्याभ्याशं स्वयं चापि तिष्ठेत्। शून्यपदवी मध्यमार्गः।

उक्तञ्च।

सुषुम्णा शून्यपदवी ब्रह्मरन्ध्रं महापथः।

श्मशानं शाम्भवी मध्यमार्गश्चेत्येकवाचका इति।

षट्पद्मलक्षणं त्वग्रे वर्णयिष्यामः।

एवंकृतेऽपि यदि मनःप्राणादीनि चिरेण न तत्र प्रतितिष्ठेयुस्तदपि पुनः पुनस्तेषामितस्ततः स्वप्नवत्पदार्थादिषु लग्नानां स्वसकाशबलात् प्रत्याहरणं **प्रत्याहारः** ॥ १२॥

इत्थं बाह्याभ्यन्तरविषयव्रातेभ्यश्चित्तमाकृष्य भ्रुवोरन्तर्गतं तूर्यपदं नीत्वा धैर्येण सुचिरं तत्रैव धारयेदिति **धारणा** ॥ १३॥

उक्तञ्च।

भ्रुवोरन्तः शिवस्थान मनस्तत्र विलीयते।

ज्ञातव्यं तत्पदं तूर्यं तत्र कालो न विद्यत इति।

**अथ ध्यानम्।** स्वयमेव शिवोऽपि तदनादृत्य किञ्चिज्जीवत्वेन व्योमवद्व्यापकमपि श्रीपरमशिवं शाखाचन्द्रवत् स्वमूर्द्धस्थ सहस्रदलकमलकर्णिकाया चिरकालं तूर्यारूढचेतसा-चिन्तयेत्। तद्रूपन्तु तन्मन्त्रप्रदर्शितमेवेत्यवगन्तव्यम्।

नमः शिवाय गुरवे नादविन्दुकलात्मने।

निरञ्जन पदं याति यत्र योगीपरायणः इति ध्यानम्॥ १४॥

अथ **समाधिः।** तन्नामानि।

राजयोगः समाधिश्च उन्मनी च मनोन्मनी।

अमरौघालयस्तत्र शून्याच्छून्य परंपदम्॥

लक्षणञ्च।

सलिले सैन्धवं यद्वत् साम्यं भवति योगतः।

समाधावुभयोरैक्यं जीवात्मपरमात्मनोः॥ १॥

समस्तनष्टसङ्कल्पः **समाधि** सोऽभिधीयते।

प्रबुद्धायामादिशक्तौ प्राणः शून्ये विलीयते॥ २॥

उत्पन्नशक्तिबोधस्य त्यक्तनिःशेषकर्मणः।

योगिन. सहजावस्था स्वयमेव प्रकाशते॥ ३॥

सुषुम्णावाहिनि प्राणे शून्ये विशति मारुतः।

तदा सर्वाणि कर्माणि निर्मूलं यान्ति निश्चितम्॥ ४॥

निरालम्बे महाशून्ये व्योमचक्रे व्यवस्थित: ।
निरालम्बं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ ५ ॥
शक्तिमध्ये मनः कृत्वा शक्ति मनसि मध्यतः ।
मनसा मन आलोक्य धारयेत्परमं पदम् ॥ ६ ॥
खमध्ये कुरुचात्मानमात्ममध्ये च खं कुरु ।
सर्वञ्च खमयं कृत्वा मा किञ्चिदपि चिन्तय ॥ ७ ॥
अन्त: शून्यो बहिः शून्य: शून्य कुम्भ इवाम्बरे ।
अन्त:पूर्णो बहि. पूर्णः पूर्णकुम्भ इवाऽर्णवे ॥ ८ ॥
बाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तनम् ।
सर्वचिन्तां परित्यज्य न किञ्चिदपि चिन्तयेत् ॥ ९ ॥
अर्द्धोद्घाटितलोचने स्थिरमना नासाग्रदत्तेक्षण
श्चन्द्रार्कौ च विलीनतामधिगतौ निक्षिप्य भासोऽन्तरे ।
ज्योतीरूपमशेषबाह्यरहितं देदीप्यमानं परम् ।
तत्वं यच्च विशुद्धवस्तुपरमं वाच्यं किमत्राधिकम् ॥ १० ॥

**पातञ्जले एषा मुक्तिः ।**

अमनस्कं तदद्वैतं निरालम्बं निरञ्जनम् ।
जीवन्मुक्तिश्च सहजं मुक्तिश्चेत्येकवाचकाः ॥ ११ ॥
ज्ञेयवस्तुपरित्यागाद्विलयं याति मानसम् ।
मानसे विलयं याते कैवल्यमिति कथ्यते ॥ १२ ॥
मनोदृश्यमिदं सर्वं यत् किञ्चित्सचराचरम् ।
मनसश्चोन्मनीभावे द्वैतं नैवोपलभ्यते ॥ १३ ॥

**इति समाधिः** ॥ १५ ॥

किञ्च यथोक्तलक्षणसमाधौ विविधा नादा. पूर्वमुत्तिष्ठन्ति । उक्तञ्च ॥

श्रवणपुट नयनयुगलनासामुखरोधनं च कर्तव्यम् ।
शुद्धसुषुम्णाशरणे स्फुटममलः श्रूयते नादः ॥ १ ॥
विचित्रकुणके देहेऽनाहतः श्रूयते ध्वनिः ।
श्रूयते प्रथमाभ्यासे नादो नानाविधो महान् ॥ २ ॥
वर्द्धमाने ततोऽभ्यासे श्रूयते सूक्ष्मसूक्ष्मतः ।
आदौ भूतमहामेघभेरीणां श्रूयते स्वनः ॥ ३ ॥
मध्ये मार्दलशङ्खोत्थघण्टाकोलाहलस्तथा ।
अन्ते तु किङ्किणीवंशीवीणाभ्रमरनिस्वनः ॥ ४ ॥

महति श्रूयमाणेऽपि मेघभेर्यादिके ध्वनौ ।
तत्र सूक्ष्मन्नादमेव परितोऽपि परामृशेत् ॥ ६ ॥
नादो यावन्मनस्तावन्नादान्ते तु मनोन्मनी ।
सशब्दं कथितं व्योम निःशब्दं ब्रह्म कथ्यते ॥ ७ ॥
भावना काम सङ्कल्पो यावच्छब्दं प्रवर्तते ।
निःशब्दं तत्परं ब्रह्म परमात्माऽनुमीयते ॥ ८ ॥
नादज्ञाने विनष्टे तु ह्युन्मन्येवाऽवशिष्यते ।
• नादको हि सहस्राणि विन्दुकोटिशतानि च ॥ ९ ॥
सर्वे तत्र लयं यान्ति यत्र देवो निरञ्जनः ।

**उन्मनी** लक्षणम् ।

दुन्दुभ्यादिनिनादञ्च निःश्टणोति कदाचन ॥१०॥
काष्ठवज्जायते देहो ह्युन्मन्यावस्थया ध्रुवम् ।

प्रिये ! श्टणोषि, एतत्पातञ्जलशास्त्रमप्यसदिव प्रतिभासते । कस्मात् ? बलात्कारेण कर्ममोचनत्वात् । उक्तञ्च तत्रैव–

दृष्टिः स्थिरा यस्य विनैव दृश्यं
वायुस्थिरो यस्य विना प्रयत्नतः ।
चित्तं स्थिर यस्य विनावलम्ब
स एव योगी स गुरुः स सेव्यः ॥ १ ॥

किञ्च,

सर्वे हठलयोपाया राजयोगाय केवलम् ।
राजयोगं समारूढः पुरुषः कालवञ्चकः ॥ २ ॥
राजयोगमजानन्तः केवलं हठकर्मगाः ।
ये तान्कर्मवशान्मन्ये प्रयासफलवर्जिताः ॥ ३ ॥

किमुक्तम् । सञ्चितप्रारब्धं क्रियमाणेभ्यः कर्मभ्यो हठाद् जीवं मोचयित्वा **राजयोगं** प्रापयति पातञ्जलमित्यतः किं सत् ? विनैव हठकर्मजीवेनैवमेव **श्रीराजयोग**मासाद्यते किमेतैरुत्कटप्रयासैः । सुन्दरि ! सहजसरलैः सद्भी राजयोगः प्रादुष्कृतो दृष्टः श्रुतश्च, अतः पातञ्जलशास्त्रं सच्छास्त्रत्वेन नाङ्गीकृतमिति ।

गृहिणि ! । गृहकृत्यं हित्वा गृह्यतां हृद्यं मद्वचनम् । यथोक्तहठयोगिनि नानासिद्धयोऽप्याविर्भवन्ति ।

हंसी ! भोः श्रीराजहंस ! कास्ताः सिद्धयः ?

श्रीहंसः । अस्ति चेद्विवित्सा श्रूयतां । अणिमा १ लघिमा २ महिमा ३ प्राप्तिः ४ प्राकाम्यं ५ ईशिता ६ वशिता ७ श्वेतता (?) ८ विचित्रवाक्श्रवणं ९ विश्वदर्शनं १० नानारूपता ११ परपिण्डप्रवेशः १२ खेचरी १३ सङ्कल्पः १४ आज्ञा १५ त्रैकालिकी १६ आरन्ध्रं (!) १७ परचित्तज्ञानं १८ अग्न्यादिप्रतिष्टम्भः १९ अपराजयः २० एता अन्या अपि

बहव्यः क्षुद्रसिद्धयो यास्ताः सर्वा हठयोगाभ्यासिभिर्लभ्यन्ते । किन्तु सन्मुमुक्षुभिस्ता उपेक्षणीयाः । कुतः ? अन्तरायभूतत्वात् ।

उक्तञ्च **श्रीभागवते–**

अन्तराया वदन्त्येता युञ्जतो योगमुत्तमम्
मया सम्पद्यमानस्य कालक्षपणहेतवः ॥ १ ॥

**श्रीवासिष्ठेऽपि–**

आकाशगमनादीनि यान्येतानि रघूद्वह ।
प्रमाणिताः पदार्थानां सहजाः खलु शक्तयः ॥ १ ॥
यद्विचित्रं क्रियाजालं दृश्यते गम्यते पुनः ।
राम ! वस्तुस्वभावोऽसौ न तदात्मविदां मतम् ॥ २ ॥
अनात्मविदमुक्तोऽपि नभोविहरणादिकम् ।
द्रव्यमन्त्रक्रियाकालशक्त्या प्राप्नोति राघव ! ॥ ३ ॥
नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्मवान्स्वयम् ।
आत्मनात्मनि सन्तृप्तो नाविद्यामनुधावति ॥ ४ ॥
ये केचन जगद्भावा स्तानविद्यामयान्विदुः ।
कथं तेषु किलात्मज्ञस्त्यक्ताविद्यो निमज्जति ॥ ५ ॥
अविद्यामपि ये युक्त्या साधयन्ति सुखात्मिकाम् ।
तेह्यविद्यामया एव न त्वात्मज्ञास्तथाविधा. ॥ ६ ॥
न तस्यार्थो नभोगत्या न सिद्ध्या न च भोगकैः
न प्रभावेण ना मानैर्नाशा मरणजीवितैः ॥ ७ ॥
नित्यतृप्तः प्रशान्तात्मा वीतरागो विवासनः ।
आकाशसदृशाकारस्तज्ज्ञ आत्मनि तिष्ठति ॥ ८ ॥
असङ्केतोपयातेन दुःखेन च सुखेन च ।
तृप्यत्यपगतासङ्गो जीवने मरणे न च ॥ ९ ॥
यथा विषाणि निघ्नन्ति मदयन्ति मधूनि च ।
वमयन्ति च शुक्लानि मदनानि फलानि च ॥ १० ॥
तथा स्वभाववशतो द्रव्यकालक्रियाक्रमाः ।
नियतं साधयन्त्याशु प्रयोगं युक्तियोजिता. ॥ ११ ॥
द्रव्यदेशक्रियाकालयुक्तयः साधुसम्विदः ।
परमात्मपदप्राप्तौ नोपकुर्वन्ति काञ्चन ॥ १२ ॥
यस्येच्छा विद्यते काश्चित्ससिद्धिं साधयत्यलम् ।
आत्मज्ञस्य तु पूर्णस्य नेच्छा सम्भवति काचित् ॥ १३ ॥

सर्वेच्छाजालसंशाता वात्मलाभोदयो हि यः ।
तद्विरुद्धा कथं तस्मादिच्छा सञ्जायतेऽनघ ॥ १४ ॥
यथोदेति च यस्येच्छा स तया यतते तथा ।
यथा कालं तदाप्नोति ज्ञो वाप्यज्ञतरोऽपि वा ॥ १५ ॥
या बलावलयोगेन सम्प्राप्ताः सिद्धिनामिकाः ।
तास्तेनाधिगता राम ! निजात्प्रपतनद्रुमात् ॥ १६ ॥
महतान्नित्य तृप्तानां तज्ज्ञानां भावितात्मनाम् ।
ईहितं सम्प्रयातानां नोपकुर्वन्ति सिद्धयः ॥ १७ ॥

किमुक्तम् । एताः सिद्धयो मोक्षपदवीं गन्तुकामस्य विघ्नरूपाः सविकल्पकसमाधौ स्फुरन्ति । इतरेऽपि प्रत्यूहास्तत्रापतन्ति ।

**अपरोक्षानुभूतौ—**

समाधौ क्रियमाणे तु विघ्ना ह्यायान्ति वै बलात् ।
अनुसन्धानराहित्यमालस्य भोगलालसम् ॥ १ ॥
लयस्तमश्च विक्षेपस्तेजः[1] स्वादश्च शून्यता । इत्यादि ।

प्रिये । यद्यद्बलेन निष्पादितं न तत्र किञ्चित्स्वारस्यमित्यतः पातञ्जलमतमसमञ्जसम् । स्वल्पायासेन पूर्णराजयोग. सूचित. सज्जनैरिति ।

**इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे पातञ्जलशास्त्रलक्षणं नाम नवमोल्लासः ॥ ९ ॥**

## ॥ अथ दशमोल्लासः ॥

अथ हंसी । भो मनीषिन् ! मनितमेतन्मीमांसकमतमञ्जसाऽसमञ्जसमिति । किञ्च । पातञ्जलजल्पितमपीदृक् लक्षणम् । अतोऽन्यत्कोविदैः किञ्चिद्वक्तव्यम् ।

श्रीहंसः । गुणवति ! गौतमर्षिमतं साम्प्रतं श्रूयताम् । श्रीमता गौतमर्षिणा निर्मितं यत्तन्न्यायःशास्त्रमित्युच्यते । तन्मते तु षोडशपदार्थज्ञानान्मुक्तिरिति तान्वितर्कयन्तोऽन्यत्कृत्स्नमसत्कुर्वते **तार्किकाः ॥**

तन्वी । के ते [2] षोडशपदार्थाः ।

पति । जानीहि युवते ! **प्रमाणं १ प्रमेयं २ संशयः ३ प्रयोजनं ४ दृष्टान्तः ५ सिद्धान्तः ६ अवयवः ७ तर्कः ८ निर्णयः ९ वादः १० जल्पः ११ वितण्डा १२ हेत्वाभासः १३ छलं १४ जातिः १५ निग्रहस्थानं** ॥ १६ ॥

लक्षणानि ।

---

१. रसास्वादश्चेतिपाठ. क पुस्तके ।

प्रत्यक्षानुमानोपमानशब्दाः **प्रमाणानि** ॥ १ ॥

आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाः **प्रमेयम्** ॥२॥

समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः **संशयः**॥३॥

यमर्थमधिकृत्य प्रवर्त्तते तत्**प्रयोजनम्** ॥ ४ ॥

लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स **दृष्टान्तः** ॥ ५ ॥

तन्त्राधिकरणाभ्युपगमसंस्थितिः **सिद्धान्तः** ॥ ६ ॥

**प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः** ॥ ७ ॥

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्**तर्कः** ॥ ८ ॥

विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं **निर्णयः** ॥ ९ ॥

प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो **वादः** ॥ १० ॥

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो **जल्पः** ॥ ११ ॥

स्वपक्षस्थापनाहीनो **वितण्डा** ॥ १२ ॥

सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसमातीतकाला **हेत्वाभासाः** ॥ १३ ॥

वचनविघातोऽर्थविकल्पोपपत्त्या**छलम्** ॥ १४ ॥

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं **जातिः** ॥ १५ ॥

साधर्म्य-वैधर्म्योत्कर्षापकर्ष-वर्ण्यावर्ण्य-विकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्ध्यनित्यानित्यकार्यसमाः विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थाना? प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोध. प्रतिज्ञासन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमनुभाषणमज्ञानमप्रतिभाविक्षेपो मतानुज्ञा पर्यनुयोज्यापेक्षणं निरनुयोज्यायेगोऽपसिद्धान्तो हेत्वाभासाश्च **निग्रहस्थानानि** ॥ १६ ॥

एतेषां तत्वज्ञानान्निश्रेयसाधिगम इति **गौतममतम्** ।

मतान्तरमपि । **कणादर्षिमते** तु **सप्तपदार्थाः** ते हि **द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः** ।

एतल्लक्षणान्यपि ।

पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीति **नव द्रव्याणि** ॥ १ ॥

रूपरसगन्धस्पर्श सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराश्चतुर्विंशति**गुणाः** ॥ २ ॥

उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानिपञ्च**कर्माणि** ॥ ३ ॥

परमपरञ्चेति द्विविधं **सामान्यम्** ॥ ४ ॥

नित्यद्रव्यवृत्तयोऽनन्ता **विशेषा.** ॥ ५ ॥

अयुतसिद्धानां यः सम्बन्ध इह प्रत्ययहेतुः स **एकः समवायः** ॥ ६ ॥

प्रागभावप्रध्वंसाभावान्योन्याभावात्यन्ताभावात्मकश्चतुर्विधोऽ**भावः** ॥ ७ ॥

क्वचित्तु अभावविहीनाः षडेव पदार्थाः ।

तत्र **तार्किकमते** एकविंशतिदुःखध्वंसो **मोक्षः** । मोक्षेऽपि जीवो जीव एव । न कदाचन जीवः शिव स्यात् । जीवास्त्वनन्तानित्याश्च ।

तरुणि ! यत्र तत्र तार्किकाः सज्जनान्निरीक्ष्य कुतर्कैरुपक्रोशन्तः स्वमतस्थापनाय जञ्जल्प्यन्ते । किन्तु 'नैषा तर्केण मतिरापनेयेति' **श्रुत्या** तर्कशास्त्रमसत्कृतमस्ति ॥

**पौराणिकैरपि** ॥ अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्य परं यच्च तदचिन्त्यस्य लक्षणम् ।

इत्याद्यैरनेकवचनैरपाकृतम् ।

**शारीरमीमांसाभाष्येऽपि शङ्करः** वैशेषिकराद्धान्तो दुर्युक्तियोगाद्वेदविरोधाच्छिष्टापरिग्रहाच्च नापेक्षितव्य । सोऽर्द्ध वैनाशिक इत्युक्तवान् ॥

**पुष्पदन्तोऽपि ।**

अतर्क्यैश्वर्ये त्वय्यनवसरदुस्थो हतधिय
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगताम् ।

इत्यूचे ।

अत्राह हंसी । भोः स्वामिन् ! ' आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदध्यासितव्य ' इत्यादि **श्रुतिभिर्मननं** तूदीरितम् । किञ्च ।

नोत्पद्यते विना ज्ञानं विचारेणान्यसाधनै । यथा पदार्थविज्ञानं प्रकाशेन विना क्वचित् ।

इति **श्रीशङ्करोक्ति** श्रीमतान्मुखत पुरा श्रुताऽस्ति ।

स हंस । सत्यम् । **मननलक्षणं** श्रीसदानन्दाचार्येण **वेदान्तसारे** दर्शितम् । **मननन्तु** श्रुतस्याद्वितीयवस्तुनो वेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तनम् । कान्ते ! किं श्रूयते । किमुक्तम् । कणभुगाद्यैर्जल्पकैस्तर्कं बलाद्यद्जल्पितं तत्तार्किकाणां मुखराणामेव समञ्जसम् । न चैतावता सच्छास्त्रमिति युक्तं वक्तुम् । किञ्च । भेदवादित्वात् युक्तिकल्पितत्वाच्च । अतो न्यायशास्त्रमप्यसद्वेत्यवैतु भवती ॥

**इति श्रीहंसभिक्षुविरचिते श्रीहंसविलासे न्यायवैशेषिकशास्त्रद्वयवर्णनं नाम दशमोल्लासः** ॥ १० ॥

अथ सा स्मेरमुखी स्वाम्युदीरितन्तर्कशास्त्रमाकर्ण्येदमालपति स्म ।

भो पते ! । तार्किकापचायिततत्त्वज्ञानं त्ववगतम् । अन्यदप्युद्यतां किमपि महर्षिमतमित्युक्त्वोत्कण्ठती तूष्णीमास ।

अथ प्रियः। प्रियतमे ! सच्छास्त्रश्रवणायोत्सहृतया चेतोऽन्यव्यापारान्निवार्य त्वया निशाम्यताम्। श्रीमता कपिलमुनिना निरूपितं यत् साङ्ख्यशास्त्रं तत्स्वारस्यमिदानी मुद्घाट्यते।

**अजामेकां लोहितशुक्लकृष्णां**

**बह्वीः प्रजाः सृजमानां सरूपाः।**

**अजो ह्येको जुषमाणोऽनुशेते**

**जहात्येनां भुक्तभोगामजोन्यः॥ इति श्रुतेः।**

तत्र तावत्**साङ्ख्यसूत्रम्। प्रकृतिपुरुषविवेकज्ञानान्मुक्तिः।**

**अर्थः**। सत्त्वरजस्तमसां साम्यावस्था प्रकृति। निर्गुण पुरुष अचेतनाऽपि प्रकृतिः। पुरुषस्य कृते तत्सत्तया चतुर्विंशतितत्त्वैर्जगद्रचयति। तत्वानि तु-**प्रकृतिः॥ १॥ महत्तत्वं २ मनः ३ अहङ्कारः ४ तन्मात्रापञ्चकं ९ इन्द्रियदशकं १० पञ्चभूतानि २४ इति चतुर्विंशतितत्वानि**। तत्र तत्त्वेषु या प्रकृति सा **विकृति**-रनित्येत्यर्थः। मूलप्रकृतिस्तु भिन्ना नित्येत्यर्थः। एतेषां रचनाविशेषस्तु पुरतः पठिष्याम। प्रकृतिप्रपञ्चेऽभिमानवशात् सच्चिदानन्दरूपस्य पुरुषस्य कर्तृत्वम्। अभोक्तुरपि भोक्तृत्वं चोपपद्यते। अकर्ताऽभोक्ता पुष्करपलाशवन्निर्लिप्तोऽपि पुरुष प्रकृतिसन्निकर्षेण तद्रचनायामभिमनुते।

उक्तञ्च-

प्रकृते क्रियमाणानि गुणैः कर्माणि नित्यशः।

अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते॥ १॥

**। गीतायाञ्च।**

पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।

कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु॥ २॥

किञ्च प्रकृतिः कर्त्री। सैव भोक्त्री। नो पुरुषः। किन्तु तत्प्रतिबिम्बितस्य पुरुषस्याविवेकतोऽहं कर्त्ता अहं भोक्तेत्याद्यभिमान। विना पुरुषेण केवलं प्रकृत्या न किमप्युपपद्यते अचैतन्यात्। पुरुषस्तु निर्गुण न तस्माद्गुणरचना। यथा कस्यचिदैन्द्रजालिकस्य काचन पार्श्वे विद्याऽस्ति। स यदा इच्छति तदा तयाऽचेतनया विद्ययाऽविचित्रवस्तुरचना विरचय्यते। कस्मिंश्चित् क्षणे सोऽनियच्छति। तर्हि तया सर्वमुपसंहृत्य स्वमहिम्नि स्थीयते। एवमत्रापि। प्रकृति स्वयमचेतनाऽपि प्रतिफलितपुरुषेच्छया विचित्रप्रपञ्चरचनां विरचय्य। पुरुषं कर्तृत्वभोक्तृत्वाद्यनेकविधाविवेकतां नयति। अथा परिजनेन क्रियते भुज्यते च। तत्र तदधीशस्य कर्तृत्वाद्यभिमानः सम्भवति। तद्वत्। किञ्च। अविवेको विवेकश्च पुरुषस्यैव चेतनत्वात्। यस्य अविवेकस्तस्य बन्धः। यस्य बन्धस्तस्य मोक्ष। इच्छयाऽविवेकी सन् स्वयं बध्यत। अनिच्छया च विवेकी भूय मुच्यते। किमुक्तम्। पुरुष स्वयं निर्गुणो निरवयवो निष्प्रपञ्चो

नित्यमुक्तो निःसङ्गश्चित्सदानन्द । स्वयंप्रकाशोऽपि प्रकृतिप्रपञ्चकूटमिच्छयाऽधिष्ठायाऽहं कर्त्ताऽहं भोक्ताऽहं दुःखी ह्यहं सुखी मृतोऽहं जीवितोऽहमित्याद्यनेकविधतत्कर्माभिमन्यमानस्तज्जनितविचित्रविषयरसानास्वाद्य क्षीबवदात्मरूपं विस्मृत्य ब्राह्मणक्षत्रियवैश्यशूद्रा द्यपशब्दानाचक्षाणो दुःखीभूय बन्धनं वहति । अथ कदाचिल्लब्धवैराग्य श्रीसाङ्ख्याचार्यमुपसङ्गम्य सविनयं प्रधानपुरुषविवेकोपदेशेनौदासीन्यमासादयति । तदानी नैककर्मोपार्जितजन्ममरणाद्यनेकदुःखजालात् मुच्यते । सूत्र-**विविक्तबोधात्सृष्टिनिवृत्तिः प्रधानस्य सूपवत्पाके** ॥ १ ॥

**अर्थः** । पुरुषार्था सृष्टिः । तन्निवृत्तिस्तु प्रकृतिपुरुषविवेकज्ञानात् । यथा सूपकारः पाकं कृत्वा निवर्त्तते ॥ १ ॥

भो प्रिय ! सृष्टिस्वभावा प्रकृतिर्विवेकिनं प्रति कुतस्तां न करोति ।

हंस । सत्यं सत्यव्रते ! यद्यपि सानित्यमेव सृष्टिस्वभावा भवति । तदपि तद्बीजराहित्यात्ततो निवर्त्तते ।

सूत्रं । **कर्मनिमित्तायोगाच्च** ।

**अर्थः** । विवेकिनं प्रतिकर्मणो निमित्तस्याभावात् न वीजं विनाऽङ्कुरो भवति । **'क्षीयन्ते चास्य कर्माणि'इति श्रुतेः** ।

अन्यदपि ।

**नर्त्तकीवत्प्रवृत्तस्याऽपि निवृत्तिश्चारितार्थ्यात्** ।

**अर्थः** । यथा नर्त्तकी परिषच्चारितार्थ्यात् नृत्यान्निवर्त्तते । तद्वत्प्रकृतिरपि पुरुषस्य विवेके चारितार्थ्यात् सर्गान्निवर्त्तत इति ॥ १ ॥

हंसी । भोः प्रियतम ! कियन्त पुरुषा । ?

हसः । प्रिये ! किमाशङ्क्यते एक एव पुरुष ?

प्रिया । भो भगवन् ! प्रपञ्चे तु नैकशः पुरुषा श्रूयन्ते च दृश्यन्ते ।

भर्त्ता । किं किं कान्ते ! न ज्ञायते त्वया । ज्ञायताम् । एक एव पुरुषः श्रीपरमशिवः । तस्य पार्श्वे काचन प्रकृतिसंज्ञकाऽस्ति । सा जडाऽपि श्रीपरमेश्वरप्रसङ्गनश्चेतना । तस्य श्रीपुरुषस्य विलसनेच्छया तया श्रीमूलप्रकृत्या विचित्रास्तनवो विरचिता. । तासामपि प्रकृतिरित्येवाख्या । स परमेश्वरः पुरुषो विलसनाय प्रकृतिविरचितासु नानातनुषु प्रतिबिम्बात्मना प्रविष्टः । प्रवेशमात्रेणात्मरूपं विस्मृत्यानन्तनामरूपात्मको जातः । यथा सजलकुम्भमणिकादिषु प्रतिबिम्बितश्चन्द्रः । कुम्भचन्द्रमणिका चन्द्रादिसंज्ञया स्फुरति । तथा त्वयि मयि च प्रविष्टः श्रीपुरुषः मूलीसंज्ञको मिट्ठुसञ्ज्ञकश्च जातः । किमेतावताऽनेकत्वम् । एवमेव सर्वत्राऽस्मिन्संसार एक एव पुरुषः खेलति स्त्रीषु पुंसु च । स्त्रीपुलिङ्गानि शरीराणि प्रकृतिजनितानि । तेषु यो जीव इत्युच्यते स पुरुषः । स एक एव स्त्रीसंज्ञया पुमाख्यया च बद्ध एव विस्मृतात्मस्वभावः परं दुःखीभूय प्रकृतिपुरुषविवेकज्ञानेन मुक्तोऽहमित्यात्मानं पुंरूपं संस्मृत्य जीवन्मुक्ततया प्रधानप्रपञ्चे व्यापृतोऽपि तदभिमतिराहित्यान्न तज्जनितजन्ममरणादिदुःखमनुभवति । प्रारब्धभोगाय हि जीवति । नो तदपि काचिदापत्तिः । प्रारब्धफलभोगावसाने निखिलकर्म-

निर्मूलनत्वात् कृतकृत्य सन् प्रकृतिजनितशरीरबन्धनात् प्रमुच्यत एवेति **साङ्ख्यस्मृति-सिद्धान्तः।**

स्त्री। भोः स्वामिन्! यर्हि एक एव पुरुषः स्त्रीषुपुंसु चान्यत्र च बद्ध। तर्हि कस्य कुतश्चित् पुरुषस्यात्मविवेकज्ञानेन मुक्त्या सर्वतः सर्वेषां मुक्तिप्रसङ्ग।

हंसः। सत्यं तरुणि! यद्यप्येवं प्रसज्येत तदपि न तथा। कुतः? प्रकृतेर्नित्यत्वात्। यथा कलशकुड वशरावादीनां मृण्मयानां भाण्डाना प्रकृतिः मृत्तिका तन्नाशे तदुत्सेदः। एवं सकलशरीराणां मूलकारणं **प्रकृतिः।** तदुत्सेदे जगदुत्सेद। स तु न युक्तो वक्तुम्। यथाग्निः सहस्रशः पात्रेषु दीपात्मना स्फुरन् यत्पात्रतस्तैलादि क्षीणं तत एव सोऽग्निर्भवति नेतरस्मात्। तद्वत् यतः कर्मादि नष्टं तस्मादेव कलेवराज्जीवो मुक्तो भवति नान्यत।

सुन्दरि! विशेषशास्त्रार्थस्तु साङ्ख्यस्मृतावेवास्ति। नास्त्येवास्मदादीनान्तु वादार्थं विवक्षा। तात्पर्यार्थग्रहणमात्रं प्रयोजनम्, कलौ मनुष्याणां जीवितं कियत्? शब्दाकूपारपारा-वार माप्तुमपर्याप्ताः पद्मोद्भवादयोऽपीत्यन्तं स्तोकतत्त्वज्ञानस्वारस्यं स्वीकृत्य हि ब्रह्मीभूय कृत्स्नकर्मफलभोगावधि निःस्पृहतया तैः स्थेयम्॥

वरवर्णिनि! वर्णितमेतत्कपिलमुनिमतम्। श्रीकापिलं मतं सदसदित्यावेद्यम्। अद्वैत-श्रुतिविरोधित्वात्। प्रकृतिपुरुषयोर्नित्यत्वे द्वैतवाद सिद्ध। स तु वेदान्तसम्मतो न भवति। प्रकृत्यादितत्त्वरचनाऽस्मत्प्रभृतिरसिकानां सम्मता। अन्यत्तु यथायोग्यसम्मतमित्यत सद-सदित्युक्तम्। पश्य पश्य प्रतीपदर्शिनि! अमू जैमिनिमुख्या महर्षयो निखिलनिगमार्थोपालो-चनचातुर्येणोन्नीय तत्तद्वचनविचारमैहिककर्मकृपणेभ्यो मुमुक्षुभ्यः कृपयाऽर्पितवन्तं शास्त्र-सन्दोहमहामृतमिति। अधिकारबाहुल्याच्छास्त्रवैचित्र्यम्। सर्वेषां मोक्ष एव लक्ष्यम् अत पद्धयाभेदेऽपि पदभेदो न भवति।

॥ पुष्पदन्तश्च ॥

त्रयी साङ्ख्यं योग पशुपतिमत वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमद पथ्यमिति च।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषा नृणामेकोगम्यस्त्वमसि पयसामर्णव इवेति ॥ १॥

**इति श्रीहंसभिक्षु प्रकाशिते श्रीहंसविलासे सांख्यशास्त्रकथनं नाम एकादशोल्लासः** ॥ ११ ॥

श्रुणोतु सम्प्रति सीमन्तिनी सच्छास्त्रम्। उपनिषद्भिर्यद्दर्शितं तत्सच्छास्त्रत्वेन स्वीकृतं श्रीव्यासादिभिरित्यतस्तत्त्वं वच्मः। कश्चिद्ब्रह्मनाम्ना चित्सदानन्दाद्वितीयाऽखण्डाऽचला-ऽजाक्रियकूटस्थाऽनन्तस्वप्रकाशस्वरूपं निरुपितमुपनिषद्भि। अपि च तस्याप्यात्मेत्याख्या। अथानन्तशक्तेस्तस्मादात्मन एकोऽहं बहु स्यामिति नानारूपो भवितुमुत्थितसङ्कल्प। तन्मात्रत स आवृत आवरणं शक्त्याविक्षितश्च कयाचिद्विक्षेपशक्त्या। पश्चाद्विचित्रविषयं तस्मि स्फुरित-मिद जगदिन्द्रजालवदिति। सङ्कल्पस्वरुपमेवेदं विश्वमवस्तुभूतं न किमप्युत्पन्नम्। किन्तु, आवरणविक्षेपवशाद्विचित्रं विश्व प्रतिभासमानमप्यवस्त्वेव। मायैव, मानिषेधे यामा नास्त्येव। समायेति तदर्थविचार्यमाणेन किञ्चिदुत्पन्नं जगन्नाम्ना कालत्रयेऽपि। ‘ सर्वं खल्विदं ब्रह्म, ’

नेहनानाऽस्तिकिञ्चनेत्यादिभिर्भाषितं हि **श्रुतिभिः** । अतः किं कथनीयम् । तथापिकथयाम कल्पितमेव किञ्चित् । वन्ध्यातनयव्यवहाराकाशकुसुमसौरभ्य शशविषाण तिग्मत्व-गन्धर्वनगर स्वप्नसुरतव्योम चित्रेन्द्रजालवस्तुवर्णनवद्ब्रह्मणि विश्ववर्णनमत्पन्तालिकम् । तथाप्यावरणवशाद्यथातथं नाविरस्ति । अतोऽध्यारोपलक्षणं किञ्चिद्वाच्यम् । स एव परमात्मापरमशिव । तत्प्रतिबिम्बात्मना भोगायतनं भोगसाधनमिति देहद्वयमधिष्ठितो जीव इत्युच्यते । **श्रुतिश्च । तत्सृष्ट्वातदेवानुप्रविशत् । 'अनेन जीवेनात्मनाऽनुप्रविश्यनामरूपे व्याकरवाणीति' ।**

किं तद्भोगायतनञ्चभोगसाधनमित्यत्रात्मबोधे **शङ्करः** ॥

पञ्चीकृतमहाभूत सम्भवं कर्म सञ्चितम् ।
शरीरंसुखदुःखानां **भोगायतनमुच्यते** ॥ १ ॥
पञ्चप्राण मनोबुद्धि दशेन्द्रिय समन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ॥ २ ॥

किञ्च **भगवद्गीतायामपि** श्रीभगवान् ।

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षतीति ॥ १ ॥

प्रतिबिम्बात्मत्वादंशइत्युक्तम् ।

श्रृणोषि योषे ! । यत्रतत्र श्रुत्यन्त तत्वस्मृतिदृष्टान्ताद्यैर्वेदान्तदर्शने ब्रह्मणि भ्रान्तिमात्रमेव जीवत्वं तत्वज्ञैर्विज्ञापितं न वास्तवम् । निःशेषं जगदपि तथैव । अतस्तस्मिन्निवृत्तिरेव **मुक्तिः** । मुक्तिर्नाम न कश्चित् पदार्थ विशेषः प्राप्यः ।

अत्र स्त्री भो विपश्चित् ! किमेतत् ? यत तो । ज्ञानघने परमशिवेऽविद्यावशाज्जीवभाव इति ।

हंसः । सम्यक्सम्यक् श्रीहंसि ! चित्सदानन्दघने श्रीपरमशिवेऽविद्यावशतो जीवभ्रम इत्यसदेव । तदप्येतदवैतु भवती । अखण्डज्ञानघनरूपोऽनन्तशक्ति श्रीपरमशिवोऽपि स्वेच्छया लीला कलेवरं मायामय निर्मायतदधिष्ठितत्वेन तदावृतस्तद्विक्षिप्तश्च जीवाख्यानिको भूत्वा कियत्कालं सङ्कल्पमात्रं तत्प्रपञ्चसुखमास्वाद्य, पुन कस्मिँश्चित्कल्पितक्षणे ह्यात्मना निर्विकल्पी भूय श्रीपरमशिव एव भवति । अनन्तशक्तित्वान्नकाचनाऽऽशङ्का कयाचिदुल्लासशक्तया विजृम्भित जीवभावोऽपि नोवास्तव ।

प्रियो ! परमशिवे जीवभ्रमो न भवत्येव व्यावहारिकीदशामाश्रित्योच्यते । कल्पितं कथयाम इत्युक्तमेव पूर्वक्रमे ।

अथ हंसी । ननु, यद्येवं श्रीपरमशिवेन स्वयमेवजीवत्वमासादितं, स्वशक्त्यैव जीवभ्रमं व्युदस्य शिवोभवेत् । नान्यजातश्च किञ्चिज्ज्ञायमानं तर्हि शास्त्रोपदेशस्य वैयर्थ्यम् ।

श्रीहंस । तथ्यं तथ्य, तर्कचतुरे, भूयिष्ठोपाधिभेदवशान्निबिडजीवभ्रमनिवृत्तये शास्त्रोपदेशस्यप्रामाण्यम् । नाना नामरूपात्मका उपाधयोऽविद्याविरचिता सन्तिसहस्रश । अत कचिद्व्याधिष्ठकालेऽभीक्ष्ण शतश शास्त्रोपदेशैस्तन्निवृत्ति । कुत्रचिच्छ्रवणमात्रत । अन्यत्र तु ।

नो किमप्यपेक्ष्यम्। स्वत शिव एवेत्यवगन्तव्यं विद्वद्वन्दितया भवत्या। भार्ये!। न बिभेतव्यम्। शङ्काचेत्पुन पृष्टव्यम्। किन्तु शारीरमीमांसायां सत्यवती तनयेन विविक्तवेदान्तवाक्यानां विविधवादार्थों निष्टङ्कित । परन्तु।

नानुध्याये द्बहून् शब्दान्वाचो विग्लापनं हि तत्।

प्रशान्तशास्त्रार्थविचार चापलइत्याद्यै सहजविरक्तस्य तु शास्त्रार्थविचारस्य प्रातिषिध्यात्तात्पर्यग्रहणमेवयुक्तम्। किमसत्तमैरुहापोहै ।

हंसी। स्वामिन्! सम्यक् परास्तद्वापरं पत्युर्वचनं समञ्जसं। किमध्याहारैरविद्याविहितै प्रस्तुतं प्रोच्यताम्। प्रिय: अयि आर्ये! श्रुत्यन्तशास्त्रस्वारस्य विशुद्धधिषणया परिश्रुत्याहं **ब्रह्मास्मीत्याद्यै महावाक्यै:** शिवाभिन्नमेवात्मान मुपलभ्य ज्ञानदशाऽध्यक्षीकृतात्मरूपो यथाकथञ्चिदितस्तत पर्यटन् प्रारब्धफलभोगपर्यवसाने पन्नगनिर्मोकवद्देहद्वयात् पृथक्भूत्वा कीटभ्रमरवत् स्वय शिव एव भवति। नात्रसन्देह:। न च पुनर्मिथ्यामतेराशङ्का। **श्रुतिश्च न स पुनरावर्तते ब्रह्मविद्ब्रह्मैव भवति। तरतिशोकमात्म विदित्यादि:।**

**वेदस्तुतौ च।**

**त्वयितइमे ततो विधनामगुणै: परमे**

**सरितइवार्णवे मधुनिलिल्युरशेषरसा इति।**

**शुकश्च।**

यद्व न्नद्यो दधिसमरसा: सागरत्वं प्रपन्ना स्तद्वज्जीवो लयपरिगत: सामरस्यैक भूतम्।
भेदातीत परिचयगतं सच्चिदानन्दरूप निस्त्रैगुण्ये पथिविचरतां को विधि को निषेध इति॥१॥

यथा, सैन्धवशकलं जलधौगलितं पुनस्तदेव ततो नोत्पद्यते बुद्बुदश्चाब्धौ लीनो न च पुन स एव सम्भवति। एवमनेककल्पितदृष्टान्तैर्य कश्चिज्जीव: शिवो जात: स नैव क्वापि कदाचन पुनर्जीवो भवतीति नि:सन्देहतयाज्ञेयमिति **वेदान्त शास्त्रसिद्धान्त:**

प्रिये! किमुक्तम्। अखण्डसच्चिदानन्दस्वरूपे श्रीपरमशिवेस्वेतो(?)त्पन्नं किं प्रलीनं। कुतो न प्रतिवक्षि। नो किमपीति का तत्र विचिकित्सा॥ **अत्रोपाख्यानम्॥ वासिष्ठानुमतम्।**

श्रीवसिष्ठ:। कश्चिल्लवणो नाम राजासीत्। तेनैकस्मिन्नवसरे सभायामुच्चासनमुपविश्याहमिन्द्रजाल मालोकयेयमित्यपध्यातम्। तद्दु सङ्कल्पमात्रात्तत्राकस्मात्कश्चिदिन्द्रदैवत्य ऐन्द्रजालेक प्रादुर्भूत। **श्रुतिश्च, 'इन्द्रो मायाभि:पुरुरूप ईयतइति'**। तेनागत्यादौ तदुपरि तिरस्करिणी विस्तारिता द्रष्टव्यमिदमिन्द्रजालमित्युक्त्वा तत्प्रपञ्चो विरचित ।

हंसी भो दीर्घदर्शिन्! किं लक्षण स प्रपञ्च प्रोच्यताम्।

श्रीहंस श्रूयतां श्रवणोत्सुके तत्क्षणे तस्य राज्ञ प्रतिहारेणागत्येतन्निवेदितम्। भो: प्रभो केनचिच्छ्रीमतां कृतेऽलौकिकोऽश्व: प्रेषित । यादृशी आज्ञा तर्हि तेन राज्ञाऽवरणवशाद्विक्षितान्तरेणानीयतामश्व इत्युक्तम्। पश्चात् प्रतिहारेणाज्ञस: कश्चिदैन्द्रजालिककल्पित पुरु-

षोऽश्वमादाय तत्रागत । सुलक्षणं तमश्वमालक्ष्याध्यारोढुमुत्थित' स लवण । ततस्तदैव तमश्वमारुह्य सानुचरः सनगराद्बहिर्निर्गत्य जवपरिक्षायां कृपया पार्ष्णिभ्यां चेषत्ताडयामास । तन्मात्रतस्तदनुचरवर्ग तिरस्कृत्यराज्ञाबलाद्यत्नतश्च बलानेनाकृष्टोऽपि तदैन्द्रजालिककल्पितकान्तारकाननं स तं नीतवान् । ततः प्रान्तरविपिनं प्राप्य समुहूर्तं तत्र स्थितः अथ सप्तेरुत्तीर्यनातिदूर निरीक्षितवृक्षमूले समूत. (?) । आतपवशेनतर्षित स राजा ससम्भ्रममितस्ततः कापथकाननं पर्यटञ्जलमलभमान एवमेव बुभुक्षितोऽप्यप्राप्तान्नाद्यो जठरकृशानुशुष्ककण्ठौष्ठ पुनर्व्यध्वविपिनकपीटात्तत्त्वर्भ्यग्रमागत्य तत्राप्यनालोकिततुरङ्गमः शोकाशुशुक्षणि सन्धुक्षितस्वान्तो विक्षिप्तस्वभावः कथञ्चिदप्यनाप्तस्वापो रात्रीमत्यक्रमीत् । अथ प्रत्यूषसि षोडशवार्षिकी काञ्चिद्ब्रह्मकविरचितां चाण्डालीमुन्मदामपरिणीतां मिष्टान्नजलकरां स्वसकाशमालोक्य ससम्भ्रमं भूपतिनोऽर्थीभूयअयि आर्ये, परं पिपासिताय बुभुक्षिताय च मह्यमुदकाद्यं सम्पादयेति कार्पण्येन भिक्षितम् । तदाकर्ण्यतया चाण्डाल्या आः पापकस्त्वं कृपण कुतोऽत्र मत्तातकान्तारकाननोपकण्ठमभ्यागतो मज्जनकान्नाद्यमिदमयेक्षसइति कृत्रिमसंरम्भेणावहेलितोऽपि पुनर्मन्दंमन्दं तत्पृष्ठेगत्वा किञ्चिद्दत्स्वदत्स्वेत्यसकृत्तेनार्दितम् । ततस्तत्रतिष्ठन्त्या तया चाण्डालपुत्र्या नेदिष्ठमागतकमितार तं नरपति । भो कामुक ! यद्येव भवानुदन्पतिक्षुधितोऽप्यस्ति । तन्मामुपयच्छतामिति सस्मितमभ्युक्तम् । अथ नवयौवनगर्वितं तद्विग्रहं विलोक्यराजमदवशात्तेन लवणेन प्राणरक्षिणि मह्यमन्नाद्य दीयता मह त्वां परिणेष्यामीत्याख्यातम् । तच्छ्रुत्वातया तु तस्यै यथेच्छं तदन्नाद्यं दत्तम् । तदनन्तरं सा तेन साकं स्वपितुरन्तिकं गत्वा ।

भोः पित ! एष मया मनसा तु वृत परन्तु पितुरादेशोऽपेक्षितइति निजगाद । अथ पित्रोरनुज्ञया सा सह तेन परिणीता आद्वादशवर्ष तयासार्द्ध चाण्डाललोकेन्वुष्य । तस्यां निधुवन धर्मेणापत्यान्युत्पाद्य, प्रत्यहं हिंसाद्युपार्जितक्रव्यादिना स्वात्मस्त्रीशिशुसम्बन्धि बान्धवान् सन्तर्प्य चाण्डालोऽहमिति तल्लोकमभिमन्यमानस्तत्रैव तस्थौ । अथ कर्हिचित् कालान्तरेऽनावृष्टिवशात्सचाण्डाललोकस्तज्जङ्गलं त्यक्त्वाऽन्यतरामरण्यानीं प्रतिजगाम । ततस्तद्प्यरण्यमकस्माद्दावाग्निनावलयितम् । तत्र केचन चाण्डाला दग्धाः । केचिदेवमेव मृताः । एके तु केनचिन्मार्गेण विनिर्गता । तत सलवणोऽपि दैवात् कान्तापत्यसहित कथञ्चित्त दावानलमतीत्य । निरुपद्रवस्थाने स्थितः । तदैव तस्य स्त्री तु शिशुद्वयेन साकं सुप्ता पश्चात्केनचिदशनाऽपि तेन तत्तनयेन रे रे तात ! क्षुधितोऽहंकिमग्नि दातव्य किमपि त्वया भक्ष्यमिति मुहुर्मुहुराक्रोशेन स आकृष्ट ततो लवणेन सक्रोधं आ पाप ! किमत्र दृष्टं अहं त्वस्मिखादमामित्याक्षिप्तम् । तत ससुतः गृहाणेमं खड्गं छिन्धित्वदं त्वन्मांसादिकमपि मह्य सत्वरं ददस्वेत्युक्तवान् इत्थ स्वसुतस्य परुषवचनश्रवणमात्रेण धिङ्मां धिगिमां धिगपत्यानि धिक्ससारमित्युत्थितविषादवैराग्य प्रज्वालितानलेऽपतत् पतनमात्रत स्वसिंहासनात्कम्पित । इत्थं मानसत्रासाद्वेपितेनृपतौ तदनुजीविभिस्तत्क्षणात् क्षमाक्षमामहाराज किमेतदित्युक्त्वा त्वरितं तद्बाहुयुगं गृहीतम् । तत स लवणो राजा सावधानधिषणो विमुक्तकृत्रिमावरण स्वात्मानं स्वीयां च सभा निर्मलदशा निरीक्ष्य अहह !!! किमेतन्ममनसि स्फुरितमितिविचारयामास । अथतत्समये श्रीमतामहर्षिणावसिष्ठेन तदभ्याशं गत्वा स प्रबोधित । भो पार्थिव इन्द्रजालविलोकनाभिलाषमात्रादिन्द्रप्रेषितेन्द्रजालिकेन त्वदन्तिकमा-

गत्य । कयाचित् मायया त्वदृष्टिं निबध्य तदखिल जाग्रत्स्वप्नदु खजालं दर्शितम् । यदा तु दु खमनुभूय त्वं विरक्तो जात तदा तन्निखिलं व्यर्थीभूतम् भो भो भूपते भवान् सावधानतया मद्भाषणं मनसिकुरुताम् । कालत्रयेप्ययं भूलोको न भवति । असौस्वर्लोकोऽपिनास्ति । न च पातालंलोक इदं दृश्यमानमपि तव वर्ष्मनास्ति । असतिशरीरे लवणइतिनाम गौरवर्णश्चैतद्वयं क । क्षुतृडामयाद्यमप्यसत् । जन्ममरणादिकमपिसलिङ्गशरीरेसम्भवति । किं बहुना, त्वं शिव एव तथापि वासनावशेन या चिद्विद्यया निर्मितोऽयं शरीरादिप्रपञ्चोऽसद्रूपोऽपि सत्तया चाण्डाललोकवत्त्वयि प्रतिभासित । अतस्त्वमस्मद्वाक्यविवेकेनात्मरूपं साक्षयेत्युक्त्वा स वसिष्ठ स्वाश्रमं प्रतिजगाम ।

अथ गते महर्षौ स लवणः स्वात्मानं तद्वद्वाक्यविवेकेन शिवरूपमनुभूय । ब्रह्मभूयं गत' एवं पुराणेतिहासादिषु महर्षिदर्शिताः शतशउपाख्यायिका' सन्ति ।

कान्ते ! किमुदीरितम् । परमार्थत श्रीपरमशिव एव सर्वत्रास्तिजीवाशङ्का । तथापि व्यावहारिकमाश्रित्य जीव इत्युच्यते । जीवत्वविनिवृत्तये सच्छास्त्रोपदेश ।

किञ्च । अङ्गने ' यद्वद्दत्तात्विकं जीवत्वं तद्वद्देवशास्त्रोपदेशाअप्यसन्तः । तथाप्यविद्याप्राबल्यात् स्वात्मानुभवावधिसत्यत्वेनप्रतीयन्ते ।

शङ्करश्च ।

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्च ।
स्वरूपानुबोधो विकल्पासहिष्णु
स्तदेकोऽवशिष्टः शिव केवलोऽहमिति ।

**इति श्रीहंसमिट्ठुप्रदर्शिते श्रीहंसविलासे वेदान्तशास्त्रवर्णनं नाम द्वादशोल्लास ॥ १२ ॥**

## इति षट् शास्त्राणि ।

श्रीहंस भोःश्रीहंसि ! **श्रीवासिष्ठ शास्त्रं** समीचीनमस्ति । अत स्तदप्याकर्ण्यतामीषत् ।

युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यत्तृणमिव त्याज्यमप्युक्त पद्मयोनिना ॥ १ ॥
ब्रह्मोपदेशदृष्टान्तो यस्तवेह हि कथ्यते ।
एकदेशसधर्मित्वं तत्रान्तः परिगृह्यताम् ॥ २ ॥
एवं सति निराकारे ब्रह्मण्याकारवान् कथम् ।
दृष्टान्तइहनोद्यन्ति मूर्खवैकल्पिकोक्तयः ॥ ३ ॥
नकुतार्किकतामेत्य नाशनीया प्रबुद्धता ।
अनुभूत्यबला पान्त्यै रपवित्रैर्विकल्पितैः ॥ ४ ॥
आरोऽविवेकिनः शास्त्रं आरोज्ञानं च रागिणः ।
अशान्तस्य मनो भारो भारोनात्मचिदो वपुः ॥ ५ ॥

रूपमायुर्मनोबुद्धि रहङ्कारस्थिरेहितम् ।
भारोभारधरस्येह सर्वंदुःखायदुर्धिय. ॥ ६ ॥
वासनावेगवैवश्यात्स्वरूपे प्रजहाति तत् ।
भ्रान्तं पश्यति दुर्दृष्टि सर्वं मदवशादिव ॥ ७ ॥
वासना द्विविधा ज्ञेया शुद्धा च मलिना तथा ।
मलिना जन्मनो हेतुः शुद्धा जन्मविनाशिनी ॥ ८ ॥
अज्ञानसुघनाकाराघनाहङ्कार शालिनी ।
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥ ९ ॥
पुनर्जन्मान्तरं त्यक्त्वा स्थिता सम्भृष्टबीजवत् ।
देहार्थं ध्रियते ज्ञात ज्ञेयाशुद्धेति सोच्यते ॥ १० ॥
वासनेहामनश्चित्रं सङ्कल्पोभावनंस्पृहा ।
इत्यादिनिवहोनाम्ना मस्याआशयकोषगः ॥ ११ ॥
भीषयत्यपिधीरेवमन्धयत्यपि सेक्षणम् ।
खेदयत्यपि शान्तहं तृष्णा कृष्णेव शर्वरी ॥ १२ ॥
यन्नशक्नोति तत्रापि धत्तेताण्डविनी गतिम् ।
नृत्यत्यानन्दरहितं तृष्णा जीर्णेव नर्त्तकी ॥ १३ ॥
चित्तबालोजगद्यक्षं मिथ्यापश्यत्यबोधतः ।
बोधितोऽसौ परं रूपं संपश्यति निरामयम् ॥ १४ ॥
चित्तमेव हि संसारो रागादिक्लेशदूषितम् ।
तदेव तैर्विनिर्मुक्त भवान्त इति कथ्यते ॥ १५ ॥
इच्छामात्रमविद्येयं तन्नाशो मोक्ष उच्यते ।
अकर्तृकमरङ्गश्च गगने चित्रमुत्थितम् ॥ १६ ॥
कातकं फलमासाद्य यथा वारिप्रसीदति ।
तथा विज्ञानवशात, स्वभावः सम्प्रसीदति ॥ १७ ॥
प्रवृत्तश्च निवृत्तश्च भवति द्विविधः पुमान् ।
स्वर्गापवर्गोन्मुखयोः शृणु लक्षणमेतयो. ॥ १८ ॥
कियत्तन्नाम निर्वाणं वरं संसृतिरेव मे ।
इति निर्णीय यः कर्त्ता सप्रवृत्त उदाहृतः ॥ १९ ॥
असारा बत संसारे व्यवस्थाऽल ममैतया ।
किं कर्मभिः पर्युषितैर्दिनं तैरेव नीयते ॥ २० ॥
क्रियातिशयनिर्मुक्तं किं स्याद्विश्रमणं परम् ।
इति निश्चयवान् योन्तः स निवृत्त उदाहृतः ॥ २१ ॥
अप्यापदिदुरन्तायां नैवगन्तव्यमक्रमे ।
राहुरप्यक्रमेणैव पिबन्नप्यमृतं मृतः ॥ २२ ॥
त्रिविधो राघवास्तीह सोऽहङ्कारो जगत्रये ।
द्वौ श्रेष्ठावितरस्त्याज्यः शृणु ते कथयाम्यहम् ॥ २३ ॥

अहं सर्वमिदं विश्व परमात्माऽहमच्युतः ।
नान्यदस्तीति संविद्यात्परमा साह्यहङ्कृतिः ॥ २४ ॥
सर्वस्माद्व्यतिरिक्तोऽहं बालाग्रशतकल्पितः ।
इति या संविदेवासौ द्वितीयाऽहङ्कृतिः शुभा ॥ २५ ॥
पाणिपादादिमात्रोय महमित्येषनिश्चयः ।
अहङ्कारसदतीयोऽसौ लौकिकस्तुच्छ एव सः ॥ २६ ॥
वर्ज्य एषदुरात्माऽसौ । कन्दःसंसारसन्ततेः ।
अनेनाभिहतो जन्तुरधोऽधः परिधावति ॥ २७ ॥
जीवस्य त्रीणि रूपाणि स्थूलसूक्ष्मापराणि च ।
तत्रास्य यत्परं रूप तद्भज द्वे परित्यज ॥ २८ ॥
पाणिपादमयो योऽयं देहो भोगाय वल्गति ।
भोगार्थमेतज्जीवस्य रूपं स्थूलमिहस्थितम् ॥ २९ ॥
स्वसंकल्पमयाकारं यावत्संसारभावियत् ।
चित्तं तद्विद्धिजीवस्य रूपं रामातिवाहिकम् ॥ ३० ॥
•आद्यन्तरहित सत्य चिन्मात्र निर्विकल्पकम् ।
यत्तद्विद्धि पर रूपं जीवस्याद्यं तृतीयकम् ॥ ३१ ॥
एतत्तुर्यपदं शुद्धमत्रबद्धपदो भव ।
वासनायास्तथावह्ने ऋणव्याधिद्विषामपि ॥ ३२ ॥
स्नेहवैरविषाणाञ्चशेषः स्वल्पोऽपि बाधते ।
चिच्छक्तिर्वासनाबीजरूपिणीसर्वदेहिनाम् ॥ ३३ ॥
यस्मात्त्वदर्शनं यत्तदविद्येत्युच्यते बुधैः ।
अविद्यायास्तुभागेन प्रधानेनेतरं दहेत ॥ ३४ ॥
तावद्यावन्मिथोघर्षाद्वयं शाम्येच्छिवो भवेत् ।
अविद्यासंसृतिर्मोहोमनोबन्धोमलंतमः ॥ ३५ ॥
इति सङ्कल्पजालस्य नामान्येतानि राघव ! ।
स्वसङ्कल्पिततन्मात्रजालाभ्यन्तरवर्त्ति च ॥ ३६ ॥
कोषकारक्रिमिरिव स्वेच्छयायाति बन्धनम् ।
यस्येदं जन्मपाश्चात्यं तस्यान्ते च महामते ॥ ३७ ॥
विशन्ति विद्याविमला मुक्तावेणुमिवोत्तमम् ।
देहदुःखं विदुर्व्याधिमाध्याख्यं वासनामयम् ॥ ३८ ॥
मौर्ख्यमूले हिते विद्या तत्वज्ञानपरिक्षये ।
असत्यमेव सङ्कल्पभ्रमेणेदं शरीरकम् ॥ ३९ ॥
जीवः पश्यति मूढात्मा बालो यक्षमिवोद्धतम् ।
यावत्तु न प्रबुद्धस्त्वं तावन्मदवचसैवते ॥ ४० ॥
निश्चयो भवतूद्रामो नास्त्यविद्येति निश्चयः ।
भेददृष्टिरविद्येयं सर्वथा तां विवर्जयेत् ॥ ४१ ॥

सर्वं ब्रह्मेतियस्यान्तर्भावना स हि मुक्तिभाक् ।
कुतो जातेयमिति ते राममाऽस्तु विचारणा ॥ ४२ ॥
इमां कथमहं हन्मीत्येव तेऽस्तु विचारणा ।
अस्तं गतायां क्षीणायामस्यां ज्ञास्यसि राघवं ॥ ४३ ॥
यत एषा यथा चैषा यथा नष्टेत्यखण्डितम् ।
स्वसङ्कल्पोपशमने शाम्ये निःस्नेहदीपवत् ॥ ४४ ॥
आकाशसदृशं सर्वं कल्पनामात्रजृम्भितम् ।
प्रबुद्धबुद्धे. प्रक्षीण भोगेच्छस्य निराशिषः ॥ ४५ ॥
नास्त्यविद्यामलमिति त्वादृशस्यैव गोचरः ।
अथ राघवतत्वज्ञो व्यवहारेषु सस्थितः ॥ ४६ ॥
नष्टं नष्टमुपेक्षस्व प्राप्तं प्राप्तमुपाहर ।
अनागतानां भोगानामवाञ्छनमकृत्रिमम् ॥ ४७ ॥
आगतानां च सम्भोग इति पण्डितलक्षणम् ।
यस्य नेच्छा नवाऽनिच्छा ज्ञस्यकर्माणि तिष्ठतः ॥ ४८ ॥
न तस्य लिप्यते प्रज्ञा पद्मपत्रमिवाम्बुभिः ।
ससाराम्बुनिधावस्मि न्वासनाम्बुपरिप्लुते ॥ ४९ ॥
ये प्रज्ञानावमारूढा स्तीर्णास्ते बुडिताः परे ।
न त्यजन्ति न वाञ्छन्ति पारावार विदो जनाः ॥ ५० ॥
सर्वमेवानुवर्तन्ते व्यवहारं जगद्भवम् ।
तण्डुलस्य यथाचर्म यथाताम्रस्य कालिमा ॥ ५१ ॥
नश्यति क्रियया पुत्र ! पुरुषस्य तथा मलः ।
जीवस्य तन्दुलस्येव मलं सहजमप्यलम् ॥ ५२ ॥
नश्यत्येव न सन्देहस्तस्मादुद्यमवान् भव ।
सङ्कल्पेनैव सङ्कल्पं मनसा स्वमनो मुने ! ॥ ५३ ॥
छित्वा स्वात्मनि तिष्ठ त्वं किमेतावतिदुष्करम् ।
समाधिमथ कर्माणि मा करोतु करोतु वा ॥ ५४ ॥
हृदयेनास्तसर्वास्थो मुक्त एव न संशयः ।
निरिच्छे संस्थिते रत्ने यथाऽलोकः प्रवर्तते ॥ ५५ ॥
सत्तामात्रेणदेवे तु तथैवायञ्जगद्गणः ।
अत आत्मनि कर्तृत्वमकर्तृत्वञ्च विद्यतम् ॥ ५६ ॥
निरिच्छत्वादकर्त्ताऽसौ कर्त्ता सन्निधिमात्रतः ।
सर्वत्राहमकर्त्तेति दृढभावनयाऽनया ॥ ५७ ॥
प्रवाहपतितं कार्यं कुर्वन्नपि न लिप्यते ।
नैष्कर्म्येण न तस्यार्थो न तस्यार्थोऽस्ति कर्मभिः ॥ ५८ ॥

न समाधिजपाभ्यां वा यस्य निर्वासनं मनः ।
विचारितमलं शास्त्रं चिरमुद्ग्राहित मिथः ॥ ५९ ॥
सन्त्यक्तवासनान्मौना नृतेनास्त्युत्तमं पदम् ।
बुध्वाप्याद्यन्तवैरस्यं यः पदार्थेषु दुर्मतिः ॥ ६० ॥
बध्नाति भावनां भूयो नरो नासौ स गर्दभः ।
नाभिवाञ्छाम्यसम्प्राप्तं सम्प्राप्तं न त्यजाम्यहम् ॥ ६१ ॥
स्वच्छस्वात्मनि तिष्ठामि यन्ममास्ति तदस्तु मे ।
भविष्यभानुसन्धत्ते नातीतं चिन्तयत्यसौ ॥ ६२ ॥
वर्त्तमान निमेषं तु हसन्नेवानुवर्त्तते ।
आत्मीये परकीये च सर्वस्मिन्नेव सर्वदा ॥ ६३ ॥
नष्टे चोपचिते कार्ये सुखदुःखे गृहाण मा ।
सर्वातीतपदालम्बीपूर्णेन्दुशिशिराशयः ॥ ६४ ॥
नोद्वेगी न च तुष्टात्मा संसारे नावसीदति ।
नाभिनन्दति न द्वेष्टि न शोचति न काङ्क्षति ॥ ६५ ॥
ईहितानीहितैर्मुक्तः संसारे नावसीदति ।
दृष्टया तु पारमार्थिक्या न कश्चित्त्वं न चाप्यहम् ॥ ६६ ॥
मिथ्याज्ञानमिदं पुण्यः पावनश्चेति वल्गति ।
बाह्यार्थवासनोल्लूना तृष्णा बद्धेति कथ्यते ॥ ६७ ॥
सर्वार्थव्यसनोन्मुक्ता तृष्णामुक्तेति राघव ! ।
विषयान्प्रति भो,राम ! सर्वानेव हि सर्वथा ॥ १८ ॥
अनास्था परमाह्येषा सा युक्तिर्मनसो जये ।
सा सत्यता सा शिवता साऽवस्था पारमार्थिकी ॥ ६९ ॥
सर्वज्ञता सा सा तृप्तिर्नूनं यत्र मनः क्षतम् ।
अविवेकादुपाहृत्य चेतः सोद्यमनिश्चयैः ॥ ७० ॥
बलात्कारेणसयोज्यं शास्त्रसत्पुरुषक्रमे ।
परव्यसनिनी नारी व्यग्रापि गृहकर्मणि ॥ ७१ ॥
तदेवास्वादयत्यन्तर्नवसङ्गरसायनम् ।
एवं तत्वे परे शुद्धे धीरो विश्रान्तिमागतः ॥ ७२ ॥
तदेव स्वादयत्यन्तर्बहिर्व्यवहरन्नपि ।
सङ्गत्यागं विदुर्मोक्षं संङ्गत्यागादजन्मता ॥ ७३ ॥
सङ्गत्यज त्वं भावानां जीवन्मुक्तो भवानघ ! ।
भावाभावपदार्थानां हर्षामर्षविकारदा ॥ ७४ ॥
मलिनावासनायैषा सा सङ्ग इति कथ्यते ।
जीवन्मुक्तशरीराणामपुनर्भवकारिणी ॥ ७५ ॥
मुक्ताहर्षविषादाभ्यां शुद्धा भवति वासना ।
अजीवन्मुक्तरूपाणां दीनानां मूढचेतसाम् ॥ ७६ ॥

कथ्यते सङ्गशब्देन वासना भवकारिणी ।
यथा सत्त्वमुपेक्ष्य स्वं शनैर्विप्रो दुरीहया ।
अङ्गीकरोति शूद्रत्वं तथा जीवत्वमीश्वरः ॥ ७७ ॥
सङ्कल्पितं हि बन्धस्य कारणं तत्परित्यज ।
मोक्षस्तु निःसङ्कल्पत्व तदभ्यासं धिया कुरु ॥ ७८ ॥
सन्तोऽतीतं न शोचन्ति भविष्यच्चिन्तयन्ति नो ।
वर्त्तमान तु गृह्णन्ति क्रमप्राप्तं सदानघ ! ॥ ७९ ॥
यया वासनया तज्ज्ञा विहरन्तीह कर्मसु ।
तां त्वं सत्त्वाभिधां विद्धि पुनर्जननवर्जिताम् ॥ ८० ॥
मनसैव मनश्छित्त्वा पाशं परमबन्धनम् ।
भवादुत्तारयात्मानं नासावन्येन तार्यते ॥ ८१ ॥
अन्तर्मुखमना नित्यं सुप्तो बुद्धो व्रजन् पठन् ।
पुरञ्जनपदं ग्राममरण्यमिव पश्यति ॥ ८२ ॥
अहङ्कारमसद्विद्धि मैनमाश्रय मा त्यज ।
असतेः शशशृङ्गस्य किल त्यागग्रहौ कुत ॥ ८३ ॥
अदृश्यो दृश्यते राहुर्गृहीतेन यथेन्दुना ।
तथानुभवमात्रात्मा दृश्यते नावलोक्यते ॥ ८४ ॥
कुचकोटरसंसुप्तं विस्मृत्य जननी सुतम् ।
यथा रोदिति पुत्रार्थं तथात्मार्थमयं जनः ॥ ८५ ॥
वर्णधर्माश्रमाचार-शास्त्रयन्त्रणयोज्झितः ।
निर्गच्छति जगज्जालात्पञ्जरादिव केसरी ॥ ८६ ॥
स्फटिकः प्रतिबिम्बेन यथा नायाति रञ्जनम् ।
तज्ज्ञः कर्मफलेनान्त-स्तथा नायाति रञ्जनम् ॥ ८७ ॥
सुखदुःखादयस्त्वेते दृश्यन्ते यदि वा मुखे ।
दृश्यन्त एव तुच्छत्वान्नतु लिम्पन्ति ते मन. ॥ ८८ ॥
संयुक्तश्च वियुक्तश्च सर्वाचारनयक्रमैः ।
रागद्वेषभयानन्दै-स्त्यज्यतेऽपि च युज्यते ॥ ८९ ॥
तनुं त्यजति वा तीर्थे श्वपचस्य गृहेऽपि वा ।
तथापि च स तत्त्वज्ञो मुक्त एव न संशयः ॥ ९० ॥
यावद्देहमवस्थासु समचित्ततयैव ये ।
कर्मेन्द्रियैर्न तिष्ठन्ति न ते तत्त्वविदः, शठाः ॥ ९१ ॥
येह्यतत्त्वविदो मूढा राजन् ! बालतयैव ते ।
अवस्थाभ्यः पलायन्ते गृहीताभ्यः स्वभावतः ॥ ९२ ॥

यावत्तिलं तथा तैलं यावद्देहं तथा दशा ।
यो न देहं दशामेति स च्छिनत्त्यसिनाम्बरम् ॥ ९३ ॥
एष देहदशादुःख-परित्यागो ह्यनुत्तमः ।
यत्साम्यचेतसो योगान्न तु कर्मेन्द्रियस्थिते ॥ ९४ ॥
यावद्देहं यथाचार-दशास्वङ्ग ! विजानता ।
कर्मेन्द्रियैर्हि स्थातव्यं न तु बुद्धीन्द्रियैः क्वचित् ॥ ९५ ॥
परमेष्ठिप्रभृतयः सर्व एवोदिताशयाः ।
देहावस्थासु तिष्ठन्ति नियतेरेष निश्चयः ॥ ९६ ॥
तज्ज्ञा बुद्ध्यादिसाम्येन पाण्यादिचलनेन च ।
नियतिं यापयन्तीमां यावद्देहमखण्डिताम् ॥ ९७ ॥
अज्ञास्तु सर्वक्षोभेण सुखदुःखदशाहताः ।
नियतिं यापयन्त्यङ्ग ! देहलक्षैर्विखण्डिताम् ॥ ९८ ॥
सर्वशङ्कां परित्यज्य धैर्यमालम्ब्य शाश्वतम् ।
महाकर्ता महाभोक्ता महात्यागी भवानघ ! ॥ ९९ ॥
रागद्वेषौ सुखं दुःखं धर्माधर्मौ फलाफले ।
यः करोत्यनपेक्ष्यैव महाकर्त्ता स उच्यते ॥ १०० ॥
मौनवान्निरहम्भावो निर्ममो मुक्तमत्सरः ।
यः करोति गतोद्वेगं महाकर्त्ता स उच्यते ॥ १०१ ॥
सर्वत्र विगतस्नेहो यः साक्षिवदवस्थितः ।
निरिच्छं वर्त्तते कार्ये महाकर्त्ता स उच्यते ॥ १०२ ॥
उद्वेगानन्दरहितः समया स्वच्छया धिया ।
न शोचति न चोदेति महाकर्त्ता स उच्यते ॥ १०३ ॥
यस्मिन् स्थितिविनाशेषु सोदयास्तमयेष्वलम् ।
सममेव मनो नित्यं महाकर्त्ता स उच्यते ॥ १०४ ॥
न किञ्चन द्वेष्टि तथा न किञ्चिदभिकाङ्क्षति ।
भुङ्क्ते च प्रकृतं सर्वं महाभोक्ता स उच्यते ॥ १०५ ॥
सुखदुःखैः क्रियाभोगैर्भावाभावैर्भ्रमप्रदैः ।
भुक्तैर्न संक्षुभ्यति यो महाभोक्ता स उच्यते ॥ १०६ ॥
जरामरणमापच्च राज्यं दारिद्र्यमेव वा ।
रम्यमित्येव यो वेत्ति महाभोक्ता स उच्यते ॥ १०७ ॥
कट्वम्ललवणं तिक्तममृष्टं मृष्टमुत्तमम् ।
अधमं याति साम्येन महाभोक्ता स उच्यते ॥ १०८ ॥

सरसं नीरसं चैव सुरतं विरतं तथा ।
यः पश्यति समं सौम्ये महाभोक्ता स उच्यते ॥ १०९ ॥
आपदं सम्पदं मोह-मानन्दमपर तथा ।
यो भुङ्क्ते समया बुद्ध्या महाभोक्ता स उच्यते ॥ ११० ॥
धर्माऽधर्मौ सुखं दुःख तथा मरणजन्मनी ।
धिया येनेति सन्त्यक्तं महात्यागी स उच्यते ॥ १११ ॥
सर्वेच्छाः सकलाः शङ्काः सर्वेहा. सर्वनिश्चया. ।
धिया येन परित्यक्ता महात्यागी स उच्यते ॥ ११२ ॥
येन धर्ममधर्मञ्च मनो मननमीहितम् ।
परित्यक्तं स्वच्छबुद्ध्या महात्यागी स उच्यते ॥ ११३ ॥
सर्गात्मभिर्विभुः स्पन्दैः क्रीडते वालवत्स्वयम् ।
संहारात्मकशक्त्याऽथ संहृत्यात्मनि तिष्ठति ॥ ११४ ॥
स्वयमस्य यथा शक्ति-रुदेत्यावध्यते यया ।
स्वयमस्य तथा शक्ति-रुदेत्युन्मुच्यते यया ॥ ११५ ॥
प्रशान्तशास्त्रार्थविचारचापलो निवृत्तनानारसकाव्यकौतुकः ।
निरस्तनिःशेषविकल्पविभ्रमः समः सुख तिष्ठति शाश्वतात्मकः ॥ ११६ ॥
अन्यत् क्वचित् किञ्चिदिदं कदाचिन्न सम्भवत्येव सदप्यसच्च ।
इत्येव साधो ! दृढनिश्चयोऽतः स्थित्वा गताशङ्कविलासमास्स्व ॥ ११७ ॥
अन्तर्मुख सन् सततं समस्तं कुर्वन् बहिष्ठं खलु कार्यजातम् ।
न खेदमायासि कदाचिदेव निराकृताऽहङ्कृतितामुपैषि ॥ ११८ ॥
ब्रह्मेन्द्रविष्णुवरुणा यद्यत् कर्त्तु समुद्यता ।
तदह चिद्वपुः सर्वं करोमीत्येव भावय ॥ ११९ ॥
सशिरस्कं हकारादिमशेषाकारसंस्थितम् ।
अजस्रमुच्चरन्तं तं स्वात्मानं समुपास्महे ॥ १२० ॥

## इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे वासिष्ठवर्णनं नाम त्रयोदशोल्लासः ॥ १३ ॥

अथ श्रीहंसी-भोः कुलहंस ! अहमबलाऽस्मि, न मयि बुद्धिप्राबल्यम् । अतः श्रीमद्भिर्भाषितेषु शास्त्रेषु मध्ये किमप्येकमेव सनिश्चय सदिति वक्तव्यम् । श्रीहंसः-भोश्चतुरवरे ! अत्र प्रागुक्तानि मीमांसादीन्यास्तिकसम्मतानि चेतराणि नास्तिकनिश्चितानि कानिचिदनुदितानि शास्त्राणि तानि निखिलानि खलु स्वकपोलकल्पितान्येव विज्ञातव्यानि । न हि विचार्यमाणे

वस्तुतस्तत्र सारस्यम्। किन्तु येनौपनिषदेन रहस्येन श्रीमतीश्वरी श्रीपरमेश्वरेणोपदिष्टा तदेवास्मदादीनां श्रीरसिकानान्तु सम्मतम्। तदेव हि सच्छास्त्रं नान्यदित्यतस्तदत्र किञ्चिदुच्यते।

श्रीकुलार्णवे

॥ श्रीदेव्युवाच ॥

भगवन् देवदेवेश ! सर्वकृत्यविधायक !।
सर्वज्ञ भक्तिसुलभ ! शरणागतवत्सल ! ॥ १ ॥
कुलेश ! परमेशान ! करुणामृतवारिधे !।
असारे घोरसंसारे सर्वदुःखमलीमसे ॥ २ ॥
नानाविधशरीरस्था-श्चानन्ता जीवराशयः।
जायन्ते च म्रियन्ते च तेषामन्तो न विद्यते ॥ ३ ॥
सदा दुःखातुरा एव न सुखी विद्यते क्वचित्।
केनोपायेन देवात्र मुच्यन्ते वद मे प्रभो ! ॥ ४ ॥

॥ ईश्वर उवाच ॥

शृणु देवि ! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण संसारान्मुच्यते जनः ॥ ५ ॥
अस्ति देवि ! परब्रह्म-स्वरूपी निष्कलः शिवः।
सर्वज्ञः सर्वकर्त्ता च सर्वेशो निष्क्रियोऽव्ययः ॥ ६ ॥
स्वयंज्योतिरनाद्यन्तो निर्विकारः परात्परः।
निर्गुणः सच्चिदानन्द-स्तदंशो जीवसंज्ञकः ॥ ७ ॥
अनाद्यविद्योपहितो यथाग्नौ विस्फुलिङ्गकः।
अन्येऽप्युपाधिसम्भिन्नास्ते जीवा नामकर्मभि. ॥ ८ ॥
सुखदुःखप्रदैः पुण्य-पापरूपैर्नियन्त्रिताः।
तत्तज्जातियुतं देहमायुर्भोगञ्च कर्मजम् ॥ ९ ॥
प्रतिजन्म प्रपद्यन्ते तेषामप्यपरं पुनः।
सूक्ष्मं लिङ्गशरीर यत् त्वामोक्षादक्षयं प्रिये ! ॥ १० ॥
स्थावराः क्रिमयश्चाब्जाः पक्षिणः पशवो नराः।
धार्मिकास्त्रिदशाः सम्यङ् मोक्षिणश्च यथा क्रमात् ॥ ११ ॥
चतुर्विधशरीराणि धृत्वा मुक्त्वा सहस्रशः।
सुकृतान् मानवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥ १२ ॥

चतुराशीतिलक्षेषु शरीरेषु शरीरिणाम् ।
न मानुष्यं विनाऽन्यत्र तत्त्वज्ञानं हि लक्ष्यते ॥ १३ ॥
अत्र जन्मसहस्राणां सहस्रैरपि पार्वति ! ।
कदाचिल्लभते जन्तु-र्मानुष्यं पुण्यसञ्चयात् ॥ १४ ॥
सोपानभूतं मोक्षस्य मानुष्य प्राप्य दुर्लभम् ।
यस्तारयति नात्मानं तस्मात् पापतरोऽत्र कः ॥ १५ ॥
नरः प्राप्योत्तरं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् ।
न वेत्त्यात्महित यस्तु स भवेद् ब्रह्मघातकः ॥ १६ ॥
विना देहेन कस्यापि पुरुषार्थो न विद्यते ।
तस्माद्देहधनं रक्ष्यं धर्मकर्माणि साधयेत् ॥ १७ ॥
रक्षयेत्सर्वदात्मानमात्मा सर्वस्य भाजनम् ।
रक्षणे यत्नमातिष्ठेज्जीवन् भद्राणि पश्यति ॥ १८ ॥
पुनर्ग्राम पुनः क्षेत्रं पुनर्वित्तं पुनर्गृहम् ।
पुनः शुभाशुभं कर्म न मानुष्य पुनः पुनः ॥ १९ ॥
शरीररक्षणोपायः क्रियते सर्वदा बुधैः ।
नेच्छन्ति हि पुनस्त्यागमपि कुष्ठादिरोगिणः ॥ २० ॥
यद्गोपितं स्याद्धर्माय धर्मं ज्ञानार्थमेव च ।
ज्ञान तु ध्यानयोगार्थ-मचिरात्स प्रमुच्यते ॥ २१ ॥
आत्मैव यदिनात्मानमहितेभ्यो निवारयेत् ।
कोऽन्यो हितकरस्तस्मादात्मानं तारयिष्यति ॥ २२ ॥
इहैव नरकव्याधेश्चिकित्सां न करोति यः ।
गत्वा निरौषध देशं व्याधिस्थः किं करिष्यति ॥ २३ ॥
यावत्तिष्ठति देहोऽसौ तावत्तत्त्वं समभ्यसेत् ।
सन्दीप्ते भवने केन कूपं खनति दुर्मतिः ॥ २४ ॥
व्याघ्रीवास्ते जराप्यायुः स्रवेद्भिन्नघटाम्बुवत् ।
निघ्नन्ति रिपुवद्रोगा-स्तस्माच्छ्रेयः समभ्यसेत् ॥ २५ ॥
यावन्नाश्रयते दुःखं यावन्नायान्ति चापदः ।
यावन्नेन्द्रियवैकल्यं तावच्छ्रेयः समभ्यसेत् ॥ २६ ॥
कालो न ज्ञायते नानाकार्यैःसंसारसम्भवैः ।
सुखदुःखैर्जनो हन्त न वेत्ति हितमात्मन ॥ २७ ॥
जाताञ्जातान्मृतानापद्ग्रस्तान् दृष्ट्वा च दुःखितान् ।
लोको मोहसुरां पीत्वा न बिभेति कदाचन ॥ २८ ॥

सम्पदः स्वप्नसङ्काशा यौवनं कुसुमोपमम्।
तडिच्चपलमायुष्य कस्य स्याज्ज्ञानतो धृतिः॥ २९॥

शतं जीवितमत्यल्पं निद्राकल्पं तदर्द्धकम्।
बाल्यरोगजरादुःखैरर्द्धं तदपि निष्फलम्॥ ३०॥

प्रारब्धव्ये निरुद्योगो जागर्त्तव्ये प्रतारकः।
विश्वस्तव्यो भयस्थाने हा नरः को न हन्यते॥ ३१॥

तोयफेनसमे देहे जीवे शत्राविव स्थिते।
अनित्ये प्रियसंवादे कथं तिष्ठन्ति निर्भयाः॥ ३२॥

अहिते हितसंज्ञश्च ह्यध्रुवे ध्रुवचिन्तकः।
अनर्थे चार्थसंज्ञानी स्वमर्थं यो न वेत्ति सः॥ ३३॥

पश्यन्नपि प्रस्खलति शृण्वन्नपि न बुध्यते।
पठन्नपि न जानाति देवि! मायाविमोहितः॥ ३४॥

सन्निमज्जेज्जगदिदं गम्भीरे कालसागरे।
मृत्युरोगजराग्राहे न कश्चिदपि बुध्यते॥ ३५॥

प्रतिक्षणमयं कालः क्षीयमाणो न लक्ष्यते।
आमकुम्भो महाम्भस्थो विशीर्णश्चापि भाव्यते॥ ३६॥

युज्यते वेष्टनं वायो-राकाशस्य च खण्डनम्।
ग्रन्थनं च तरङ्गाणा मास्था नायुषि युज्यते॥ ३७॥

पृथिवी दह्यते येन मेरुश्चापि विशीर्यते।
शुष्यते सागरजलं शरीरे देवि! का कथा॥ ३८॥

अपत्यं मे कलत्रं मे धनं मे बान्धवाश्च मे।
लपन्तमिति मर्त्यं हि हन्ति कालवृको बलात्॥ ३९॥

इदं कृतमिदं कार्य मिदमन्यत् कृताकृतम्।
एवमीहासमायुक्तं मृत्युरेति नरं प्रिये!॥ ४०॥

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।
न हि मृत्युः प्रतीक्षेत कृतं वाप्यथवाकृतम्॥ ४१॥

जरादर्शितपन्थानं प्रचण्डव्याधिसैनिकम्।
मृत्युशत्रुमधिष्ठाय त्रातारं किन्न पश्यति॥ ४२॥

तृष्णासूचिविनिर्भिन्नं सिक्तं विषयसर्पिषा।
रागद्वेषानले पक्वं मृत्युरश्नाति मानवम्॥ ४३॥

बालांश्च यौवनस्थांश्च वृद्धान् गर्भगतानपि।
सर्वानेवाविशेन्मृत्यु-रेवम्भूतमिदञ्जगत्॥ ४४

ब्रह्मविष्णुमहेशादिदेवता भूतजातयः ।
नाशमेवानुधावन्ति तस्माच्छ्रेयः समभ्यसेत् ॥ ४५ ॥
स्वस्ववर्णाश्रमाचार-लङ्घनाद्दुष्परिग्रहात् ।
परस्त्रीधनकामाच्च नृणामायुःक्षयो भवेत् ॥ ४६ ॥
वेदशास्त्राद्यनभ्यासात् देवर्षिगुरुवञ्चनात् ।
नृणामायु.क्षयो भूया-दिन्द्रियाणामनिग्रहात् ॥ ४७ ॥
जीवस्तृणजलूकावद्देहाद्देहान्तरं व्रजेत् ।
स सम्प्राप्योत्तरांशेन देहं त्यजति पौर्विकम् ॥ ४८ ॥
वाल्ययौवनवृद्धत्वं यथा देही परादिकम् ।
तथा देहान्तरप्राप्ति-र्गृहाद्गृहमिवागतम् ॥ ४९ ॥
जनाः कृत्वाऽर्थकर्माणि सुखदुःखानि भुञ्जते ।
यदत्राज्ञानिनो देवि ! याता यान्ति पुनः पुनः ॥ ५० ॥
इह यत् क्रियते कर्म तत् परत्रोपभुज्यते ।
सिक्तमूलस्य वृक्षस्य फलं शाखासु दृश्यते ॥ ५१ ॥
दारिद्यमूलदुःखानि बन्धनं व्यसनानि च ।
आत्मापराधवृक्षाणां फलान्येतानि देहिनाम् ॥ ५२ ॥
निःसङ्ग एव मोक्षः स्याद्दोषाः सर्वे हि सङ्गजाः ।
सङ्गात्पतत्यधो ज्ञानी ह्यवश्यं, किमतत्त्ववित् ॥ ५३ ॥
सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सन्तः सङ्गस्य भेषजम् ॥ ५४ ॥
सत्सङ्गश्च विवेकश्च निर्मलं नयनद्वयम् ।
यस्य नास्ति नरः सोऽन्धः स विनश्येदमार्गतः ॥ ५५ ॥
यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रिये ! ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ५६ ॥
स्वदेहमपि जीवोऽयं मुक्त्वा याति कुलेश्वरि ! ।
स्त्रीमातृपितृपुत्रादिसम्बन्धः केन हेतुना ॥ ५७ ॥
दुःखमूलो हि ससारः स यस्यास्ति स दुःखितः ।
तस्य त्यागः कृतो येन स सुखी नापरः प्रिये ! ॥ ५८ ॥
प्रभवं सर्वदुःखाना-मालयं सकलापदाम् ।
आलयं सर्वपापानां संसारं वर्जयेत् प्रिये ! ॥ ५९ ॥
स्वस्ववर्णाश्रमाचारनिरताः सर्वमानवाः ।
अबन्धबन्धनं घोरमङ्गीकृत्य महाविषम् ॥ ६० ॥

अशास्त्रखण्डनं देवि! संसारासक्तचेतसाम् ।
आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ॥ ६१ ॥
तस्मात्सन्त्यज्य संसारं तत्त्वनिष्ठः सुखी भवेत् ।
लोहदारुमयैः पाशैर्दृढं बद्धोऽपि मुच्यते ।
स्त्रीधनादिषु संसक्तो मुच्यते न कदाचन ॥ ६२ ॥
कुटुम्बचिन्तायुक्तस्य कुतः सत्त्वादयो गुणाः ।
अपक्वकुम्भजलवत्तस्य सङ्गेन तेन हि ॥ ६३ ॥
वञ्चिताशेषवित्तास्ते नित्यं लोका विनाशिनः ।
हा हन्त विषयाहारै-र्देहस्थेन्द्रियतस्करैः ॥ ६४ ॥
मांसलुब्धो यथा मत्स्यो लोहशङ्कुं न पश्यति ।
सुखलुब्धस्तथा देही यमपाशं न पश्यति ॥ ६५ ॥
हिताहिते न जानन्ति नित्यमुन्मार्गगामिनः ।
कुक्षिपूरणनिष्ठा ये तेऽबुधा नारकाः प्रिये ! ॥ ६६ ॥
निद्राभीमैथुनाहाराः सर्वेषां प्राणिनां समाः ।
ज्ञानवान् मानवः प्रोक्तो ज्ञानहीनः पशुः प्रिये ! ॥ ६७ ॥
प्रभाते मलमूत्राभ्यां क्षुत्तृड्भ्यां मध्यगे रवौ ।
रात्रौ मदननिद्राभ्यां बाध्यन्ते मानवाः प्रिये ! ॥ ६८ ॥
स्वदेहधर्मदारादिनिरताः सर्वमानवाः ।
जायन्ते च म्रियन्ते च हा हन्ताज्ञानमोहिताः ॥ ६९ ॥
स्वस्ववर्णाश्रमाचारनिरताः सर्वमानवाः ।
न जानन्ति परं धर्मं वृथा नश्यन्ति पार्वति ! ॥ ७० ॥
क्रियायासपराः केचित् व्रतचर्यादिसंयुताः ।
अज्ञानसंवृतात्मानः सञ्चरन्ति प्रतारकाः ॥ ७१ ॥
नाममात्रेण सन्तुष्टाः कर्मकाण्डरता नराः ।
मन्त्रोच्चारणहोमाद्यैर्भ्रामिताः क्रतुविस्तरैः ॥ ७२ ॥
एकभुक्तोपवासाद्यैर्नियमैः कायशोषणैः ।
मूढाः स्वपक्षमिच्छन्ति तव मायाविमोहिताः ॥ ७३ ॥
देहदण्डनमात्रेण का मुक्तिरविवेकिनाम् ।
वल्मीकताडनाद्देवि ! मृतः कुत्र महोरगः ॥ ७४ ॥
जठरापूरणे युक्ता दाम्भिका वेषधारिणः ।
भ्रमन्ति ज्ञानिवल्लोके भ्रामयन्ति जनान् प्रिये ! ॥ ७५ ॥
संसारजसुखासक्तं ब्रह्मज्ञोऽस्मीतिवादिनम् ।

कर्मब्रह्मोभयभ्रष्टं त त्यजेदन्त्यजं यथा ॥ ७६ ॥
गृहारण्यसमा लोके गतव्रीडा दिगम्बराः ।
चरन्ति गर्दभाद्याश्च विरक्तास्ते भवन्ति किम् ? ॥ ७७ ॥
मृद्भस्मोद्धूलनादेव मुक्ता स्युर्यदि मानवाः ।
मृद्भस्मवासिनो नित्यं श्वानो मुक्ता भवन्ति किम् ? ॥ ७८ ॥
शीतवातातपसहा भक्ष्याऽभक्ष्यसमाः प्रिये ! ।
तिष्ठन्ति सूकराद्याश्च ज्ञानिनस्ते भवन्ति किम् ? ॥ ७९ ॥
तृणपर्णादिकाहाराः सततं वनवासिनः ।
हरिणाद्या मृगा देवि! तापसास्ते भवन्ति किम् ? ॥ ८० ॥
आजन्ममरणान्तञ्च गङ्गादितटिनीस्थिताः ।
मण्डूकमत्स्यप्रमुखा व्रतिनस्ते भवन्ति किम् ? ॥ ८१ ॥
वदन्ति हृदयानन्द पठन्ति शुकसारिकाः ।
जनानां पुरतो देवि! विबुधास्ते भवन्ति किम् ? ॥ ८२ ॥
पारावता. शिलाहारा॰ परमेश्वरि! चातकाः ।
न पिबन्ति महीतोयं योगिनस्ते भवन्ति किम् ? ॥ ८३ ॥
तस्मादित्यादिकं कर्म लोकरञ्जनकारकम् ।
मोक्षस्य कारणं साक्षात्तत्त्वज्ञानं कुलेश्वरि ! ॥ ८४ ॥
षट्दर्शनमहाकूपे पतिताः पशवः प्रिये ! ।
परमार्थं न जानन्ति पशुपाशनियन्त्रिताः ॥ ८५ ॥
वेदशास्त्रार्णवे घोरे उह्यमाना इतस्ततः ।
षडूर्मिनिग्रहग्रस्तास्तिष्ठन्तीह कुतार्किकाः ॥ ८६ ॥
वेदागमपुराणज्ञः परमार्थं न वेत्ति यः ।
विडम्बकस्य तस्याम्ब तत्सर्वं कामभाषितम् ॥ ८७ ॥
इदं ज्ञातमिदं ज्ञेयमिति चिन्तासमाकुलाः ।
पठन्त्यहर्निशं देवि! परतत्त्वपराङ्मुखाः ॥ ८८ ॥
वाक्यच्छन्दोनिबन्धेन काव्यालङ्कारशोभिता॰ ।
चिन्तया दुःखिता मूढास्तिष्ठन्ति व्याकुलेन्द्रिया ॥ ८९ ॥
अन्यथा परमं तत्त्वं मूढा॰ क्लिश्यन्ति चान्यथा ।
अन्यथा शास्त्रसद्भावो व्याख्यां कुर्वन्ति चान्यथा ॥ ९० ॥
कथयन्त्युन्मनीभावं स्वयं नानुभवन्ति च ।
अहङ्काररताः केचिदुपदेशादिवर्जिताः ॥ ९१ ॥

पठन्ति वेदशास्त्राणि बोधयन्ति परस्परम् ।
न जानन्ति परं तत्त्वं दर्वीपाकरसं यथा ॥ ९२ ॥
शिरो वहति पुष्पाणि गन्धं जिघ्रति नासिका ।
कश्चित् पठति शास्त्राणि कश्चित्तद्भावबोधकः ॥ ९३ ॥
तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यति ।
गोपः कुक्षिगते छागे कूपं पश्यति दुर्मतिः ॥ ९४ ॥
संसारमोहनाशाय शब्दबोधो न हि क्षमः ।
न निवर्तेत तिमिरं कदाचिद्दीपवार्तया ॥ ९५ ॥
प्रज्ञाहीनस्य पठनमन्धस्य दर्पणं यथा ।
देवि! प्रज्ञावतः शास्त्रं तत्त्वज्ञानस्य साधनम् ॥ ९६ ॥
अग्रतः पृष्ठतः केचित् पार्श्वयोरपि केचन ।
तत्त्वमीदृग् तादृगिति विवदन्ति परस्परम् ॥ ९७ ॥
सुविद्यादानशौर्याद्यै-र्गुणैर्विख्यातमानवः ।
ईदृशस्तादृशश्चेति दूरतः कथ्यते जनैः ॥ ९८ ॥
प्रत्यक्षग्रहणन्नास्ति वार्तायां ग्रहणं प्रिये ! ।
एव ये शास्त्रसम्मूढास्ते दूरस्था न संशयः ॥ ९९ ॥
इदं ज्ञानमिदं ज्ञेय सर्वत. श्रोतुमिच्छति ।
दिव्यवर्षसहस्रायुः शास्त्रान्त नैव गच्छति ॥ १०० ॥
सम्वेद्यानेकशास्त्राणि तत्त्वं ज्ञात्वाऽथ बुद्धिमान् ।
पलालमिव धान्यार्थी सर्वशास्त्राणि सन्त्यजेत् ॥ १०१ ॥
यथाऽमृतेन तृप्तस्य नाहारेण प्रयोजनम् ।
तत्त्वज्ञस्य तथा देवि! न शास्त्रेण प्रयोजनम् ॥ १०२ ॥
न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि ।
ज्ञानादेव हि कैवल्यं नान्यथा वीरवन्दिते ! ॥ १०३ ॥
नाश्रमः कारणं मुक्ते-र्दर्शनानि न कारणम् ।
मुक्तिदा गुरुवागेका विद्याः सर्वा विडम्बकाः ॥ १०४ ॥
अद्वैतं हि शिवप्रोक्त क्रियायासादिवर्जितम् ।
पूर्वपुण्येन लभ्येत नाधीतागमकोटिभिः ॥ १०५ ॥
आगमोत्थं विवेकोत्थ द्विधा ज्ञानं प्रचक्षते ।
शब्दब्रह्मागममयं परब्रह्मविवेकजम् ॥ १०६ ॥
अद्वैत केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ।
समतत्त्वं न जानन्ति द्वैताद्वैतविवर्जितम् ॥ १०७ ॥

द्वे पदे बन्धमोक्षाय न ममेति ममेति च ।
ममेति बध्यते जन्तुर्न ममेति प्रमुच्यते ॥ १०८ ॥
तत् कर्म यन्न बन्धाय सा विद्या या विमुक्तिदा ।
आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम् ॥ १०९ ॥
यावत् कर्माणि दृश्येरन् तावत्संसारवासना ।
यावदिन्द्रियचापल्यं तावत्तत्त्वकथा कुतः ॥ ११० ॥
यावद्देहाभिमानश्च ममता यावदेव हि ।
यावन्न गुरुकारुण्यं तावत्तत्त्वकथा कुतः ॥ १११ ॥
यावत्तपो व्रतं तीर्थं जपहोमार्चनादिकम् ।
वेदशास्त्रागमकथा तावत्तत्त्वं न विन्दति ॥ ११२ ॥
तस्मात्सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ।
तत्त्वनिष्ठो भवेद्देवि! यदीच्छेन्मोक्षमात्मनः ॥ ११३ ॥
धर्मज्ञानसुगुप्तस्य स्वर्गभोगफलस्य च ।
तापत्रयादिसन्तप्तश्छायां मोक्षतरोः श्रयेत् ॥ ११४ ॥
जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ।
पाशबद्धः स्मृतो जीवः पाशमुक्तः सदाशिवः ॥ ११५ ॥
तुषबद्धो व्रीहिरुक्तस्तुषमुक्तस्तु तन्दुलः ।
कर्मबद्धः सदा जीवः कर्ममुक्त शिवः प्रिये! ॥ ११६ ॥
न पद्मासनतो योगो न नासाग्रनिरीक्षणात् ।
ऐक्यं जीवात्मनोराहुर्योगं योगविशारदा ॥ ११७ ॥
ध्यायेत्तत्क्षणमात्रं वा श्रद्धया परमं महः ।
यद्भवेत्सुमहत्पुण्यं तस्यान्तो नैव गण्यते ॥ ११८ ॥
यः पश्येत्सर्वगं शांतमानन्दात्मानमव्ययम् ।
न तस्य किञ्चिद्ध्यातव्यं ज्ञातव्यं वाऽवशिष्यते ॥ ११९ ॥
सम्प्राप्ते ज्ञानविज्ञाने ज्ञेये च हृदि संस्थिते ।
लब्धे शान्तपदे देवि! न योगो नैव धारणा ॥ १२० ॥
देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र समाधयः ॥ १२१ ॥
परब्रह्मणि विज्ञाते समस्तैर्नियमैरलम् ।
तालवृन्तेन किं कार्यं लब्धे मलयमारुते ॥ १२२ ॥
आशिखाबन्धनं नास्ति नासिकाबन्धनं न च ।
नियमोऽनियमो नास्ति स्वयमोमिति पश्यताम् ॥ १२३ ॥

क्षणं ब्रह्माऽहमस्मीति यः कुर्यादात्मचिन्तनम् ।
तस्याज्ञाननिवृत्ति. स्यात्तम: सूर्योदये यथा ॥ १२४ ॥
देहे देवालये देवि! जीवो देवः सदाशिव: ।
त्यजेदज्ञाननिर्माल्यं सोऽहं-भावेन पूजयेत् ॥ १२५ ॥

## ॥ श्रीकापिलगीतायाश्च ॥

कर्माकर्मविकर्मबोधजनका: कर्मार्थमीमांसका·
साङ्ख्यास्त्यागपरा: सदैव विदुरा: संन्यासिन: स्नातका: ।
योगाङ्गाष्टकबोधका: प्रतिभटा: पातञ्जला न्यायका-
स्तेषामल्पमिहैकमेव हि फलं सत्यं न मोक्ष: पर: ॥ १ ॥
प्राणापाननिरोधनार्थनिरता: सन्तर्ज्य वैशेषिकान्
वायुं पूरककुम्भकं प्रतिदिनं तद्रेचनं हाठका: ।
जिह्वादोहनकार्मिका: सुरसिका: सिद्धे: समालम्बका-
योगा नित्यविभूषकाश्च सततं ते तत्त्वतो वञ्चिता: ॥ २ ॥
वेदान्ते बहुतर्ककर्कशधियश्चाद्वैतवादे रता
नानावादविवादशब्दनिपुणा विज्ञानबोधात्मका: ।
कर्त्तारं प्रभजन्ति चापि यवना:पापे रता निर्दया
विप्रा वेदविधाननित्यनिरतास्ते तत्त्वतो वञ्चिता: ॥ ३ ॥
चार्वाकाश्चतुरा: स्वतर्कनिपुणा देहात्मवादे रता
नानातर्कवितर्कभावसहिता: स्वेच्छापरास्तार्किका: ।
वेदार्थप्रतिपादने सुकुशला: कर्त्तेति नैय्यायिका-
स्तेषामल्पफलं भवेद्धि सतत सत्यं न मोक्ष. पर: ॥ ४ ॥
शून्यार्थप्रतिपादका लघुगुरू बौद्धा जिना: श्रावका
नानातीर्थनिषवका: श्रुतिपरा स्मृत्यर्थसम्बाधका: ।
चण्डोच्चण्डवितण्डजल्पनमहाभेदा: सदा वैष्णवा-
स्ते सर्वे प्रपतन्ति दु:सहतरे सत्यं न मोक्ष: पर: ॥ ५ ॥
सौरा· सूर्यमुपासते च सततं शक्तिश्च शाक्तास्तथा
गाणापत्यपरा गणेशभजनं विष्णुं तथा वैष्णवा: ।
शैवानां शिवपूजनं हि सततं वैप्रं च सर्वात्मकं ।
नानादैवतवाञ्छितार्थवरदं सत्यं न मोक्ष: पर: ॥ ६ ॥
नानाचित्रविचित्रवेषरचिता नानामतभ्रामका
नानातीर्थनिषेवका जपपरा मौने स्थिताश्चापरे ।
सर्वे चोदरपोषकास्त्वभिमता वादेऽपवादे रता:-
ज्ञानान्मोक्षपदं वदन्ति मुनयस्तत् प्रायशो दुर्लभम् ॥ ७ ॥

मीनः स्नानरतः फणी पवनभुग्मेषस्तु पर्णाशनो-
नैराश्यादपि चातकः प्रतिदिनं शेते बिले मूषकः ।
भस्मोध्धूलितविग्रहः खलु खरो ध्यानानुरक्तो बकः- ।
सर्वेषां फलमस्ति किन्तु विफलं ज्ञानं प्रधानं परम् ॥ ८ ॥
ज्ञानमात्रेण मुच्यन्ते नान्यैर्विविधसाधनैः ।
साक्षात्कारं परं ज्ञान प्राप्यते सद्गुरोर्मुखात् ॥ ९ ॥
पठित्वा वेदशास्त्राणि स्वात्मज्ञानविवर्जित ।
तृष्णाविषयसम्मग्नो न शास्त्रेणोद्धरेन्नरः ॥ १० ॥

प्रिये! किमुक्तम् ? येन केनापि यत्र तत्र सहजानन्दस्वरूपसाक्षात्कारस्तच्छास्त्रं सदन्यद्-सदित्यवेदितव्यम् ।

शास्त्रार्थश्चागमे

शासनादनिविष्टत्वाद्वर्णाश्रमनिरूपणात् । त्राणनात्सर्वपापेभ्यः **शास्त्र**मित्यभिधीयते ।

**इति श्रीहंसभिक्षुपठिते श्रीहंसविलासे शास्त्रदर्शनवर्णनं नाम चतुर्दशोल्लासः ॥ १४ ॥**

## । अथ ज्ञानयोगः ।

श्रीहंसः । किमुन्मनायते मानिनी भो भो भामिनि ! भवती प्रति भर्त्रा किं किं भणितं; सावधानधिया समग्रमुक्तं प्रत्यवमृश्यताम् ।

अथ हंसी । स्वात्मानन्दरससाक्षात्कारिण्यः स्वामिना गिरः सङ्कीर्णाः । अथात्र मम-प्राणः प्रोक्तात्मतत्त्वविवेकश्रवणायोत्सहते ।

श्रीहंसः । अयि विवेकिनि ! श्रूयताम् । श्रीमत्सच्छास्त्रसारस्यभूत**मात्मतत्त्वविवेकं** वर्णयामः । शारीरविवेकं विना नात्मानुभूतिरित्यतः **शारीरं** शृणु । **चतुर्विधं शरीरम् । स्थूलं १ सूक्ष्मं २ कारणं ३ महाकारणं ४** चेति । पञ्चभूतेभ्यश्चतुर्णामुत्पत्तिः ।

हंसी । कानि भूतानि ? ।

हंसः । आकाशः १ वायुः २ अग्निः ३ जलं ४ पृथिवीति ५ एतान्यपि **द्विविधानि** स्थूलानि सूक्ष्माणीति । **स्थूलानि** ब्रह्माण्डे शरीरे तु **सूक्ष्माणि ।**

हंसी । शरीरे कथम् ?

श्रीहंसः । इत्थं । यत् शरीरे काठिन्यं सा पृथिवी । यद् द्रवं तदापः । यदौष्ण्यं तत्तेजः यत् सञ्चरणं स वायुः । यत् सुषिरं तदाकाशम् । किञ्च पञ्चीकृतपञ्चभूतमयमिदं स्थूलशरीरम् ।

हंसी । पञ्चीकृतमिति किम् ? ।

प्रियः । एकैकस्य भूतस्य पञ्च पञ्च तत्त्वानि तैः परस्परानुप्रवेशेन पञ्चीकरणमित्यु-च्यते ।

प्रिया । भोः प्राणनाथ ! कानि तानि तत्त्वानि ? कथमनेकस्यैकैकस्मिन् प्रवेशः ।

वल्लभः । भोः सुभगे ! तदपि भण्यते । अस्थिमांसस्नायुत्वग्रोमाणि पार्थिवानि ॥१॥ रेतः-पित्तस्वेदलालारक्तान्याप्यानि ॥२॥ क्षुधातृषानिद्राकान्त्यालस्यानि तैजसानि ॥३॥ धावनप्रसारणोत्क्रमणचलनसङ्कोचनानि वायव्यानि ॥४॥ कट्युदरहृदयकण्ठशिरांसि नाभसानि ॥५॥ इति पञ्चविंशतितत्त्वानि परस्परानुप्रविष्टानि पञ्चभूतमयानि ।

**परस्परप्रवेशोऽपि** । अस्थिमुखा पृथिवी काठिन्यात्पीतवर्णत्वाच्च । मांसमुदकं, सद्रवत्वात् । स्नायु, तेजः, ज्वरस्य परीक्षणत्वात् । त्वग् वायुः, स्पर्शधर्मत्वात् । रोमाकाश, छेदने दुःखाभावात् ।

एवं पार्थिवतत्त्वेषु जलादितत्त्वानां प्रवेशेन पञ्चीकारः ॥ १ ॥

आप्यतत्त्वेषु च रेतः मुख्यमुदकं, गर्भोत्पत्तेः शुभ्रवर्णत्वाच्च । पित्तं तेजः, ऊष्माङ्गत्वात् । स्वेदो वायुः, श्रमप्रसङ्गत्वात् । लालाकाशं, ऊर्ध्वादागमनात् । रक्तं पृथिवी, लोहितत्वात् ॥ २ ॥

क्षुधा मुख्योऽग्निः, पचनसमर्थत्वात्, प्रसन्नत्वाच्च । तृषा वायुः, कण्ठोष्ठशोषणत्वात् । निद्राकाशं, शून्यस्वभावत्वात् । कान्तिरुदकं, शीतोष्णसम्बन्धात् । कृष्णलोहितत्वं भवति, आलस्यं पृथिवी जाड्यत्वात् ॥ ३ ॥

धावनं मुख्यो वायुः, सबलत्वात् । प्रसारणमाकाशं, व्यापकत्वात् । उत्क्रमणं तेजः, उत्कृष्टव्यापारत्वात् । चलनमुदकं, शिथिलत्वात् द्रवत्वाच्च । संङ्कोचन पृथिवी जडत्वात् ॥ ४ ॥

शिरसि अवकाशं मुख्याकाशं, अनाहतशब्दस्थानत्वात् । कण्ठस्यावकाशं वायुः, मुखनासिकयोः सञ्चरणत्वात् । हृदि अवकाशमग्निः, सर्वदा ऊष्मस्थितेः । उदरावकाश जलं, जलाशयत्वात् । कट्यवकाशं पृथिवी, गन्धस्थानत्वात् ।

## इति श्रीशंकराचार्यसम्मतं पञ्चीकरणम् ।

किञ्च । पादादि जानुपर्यन्तं पृथिवी । जान्वोर्नाभिपर्यन्त जलं । नाभेर्हृदयान्तं तेजः । हृदयाद् भ्रूपर्यन्त वायुः । भ्रूमध्यतो ब्रह्मरन्ध्रपर्यन्तमाकाशम् ।

किञ्च ।

पञ्चभूतात्मकानि दशेन्द्रियाणि । तानि तु श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाख्यानि दिग्वातार्कवरुणाश्विनेयाधिदैवतानि ज्ञानेन्द्रियाणि पञ्च । वाक्पाणिपादोपस्थपायुसंज्ञकानि अग्नीन्द्रविष्णुमृत्युप्रजापत्यधिदैवतानि पञ्च कर्मेन्द्रियाणि । तत्र वाक्श्रोत्रे आकाशकार्ये, शब्दाभिव्यञ्जकत्वात् । प्रायेण शब्दोत्पत्तिर्वागस्य ॥ १ ॥ त्वक्पाणी वायुविकारौ । स्पर्शग्रहणसाधनत्वात् । स्पर्शवत एव द्रव्यस्य हस्तेनोपादातुं शक्यत्वाच्च । चक्षुःपादौ तेजोविकारौ रूपस्य ग्राहकत्वात् । प्रायेणोष्णत्वं पादयोः ॥ ३ ॥ अपां विकारावुपस्थजिह्वे । एकरसग्राहकत्वात् स्निग्धत्वात् प्रायेणोपस्थ आनन्दत्वाच्च ॥ ४ ॥ घ्राणगुदे पृथिवीकार्ये । गन्धग्राहकत्वात् । प्रायेण गन्धत्वाच्च, पायोर्विसर्गात् ॥ ५ ॥ इत्थं ज्ञानेन्द्रियपञ्चकञ्च कर्मेन्द्रियपञ्चकं पृथक् पृथक् आकाशवायुतेजोजलपृथिवीमयं क्रमेण विज्ञेयम् ।

किञ्च ।

शब्दस्पर्शरूपरसगन्धाः श्रोत्रादीनां पञ्च क्रमेण विषयाः । वचनादानगमनानन्दविसर्गाः पञ्च वागादीनां पृथग् विषयाः । किमुक्तम् । श्रोत्रादीनि शब्दादिज्ञानानां साधनानि । वागादीनि वचनादिकर्मणां साधनानि । यथा दीपो रूपादिज्ञानसाधनं दीपेन रूपादि गृह्यते, तद्वत् श्रोत्रा-

दिभिः शब्दादयः। दर्वीवद् वागादिभिः कर्मसाधनैर्वचनादयो विषयाश्चेति। अतो ज्ञानेन्द्रियत्वं कर्मेन्द्रियत्वं चोक्तम्।

किञ्च।

**षड्भावविकाराः।** ते च **जायते**।१। **अस्ति**।२। **वर्धते**।३। **विपरिणमते**।४। **अपक्षीयते**।५। **विनश्यति**।।६।

**ऊर्मिद्वयञ्च** जरामृत्युलक्षणं। बाल्यं यौवनं वार्द्धकञ्च व्याधिस्थानञ्च सार्द्धत्रिहस्तपरिमाणम् **अन्नमयकोषः,** अन्नविकारत्वात्। अन्यत् कोषषट्कञ्च। अस्थिशिरामज्जेतिकोषत्रयं पितृजन्यम्। त्वग्रुधिरं मांसमिति मातृभवम्। जाग्रदवस्थं, नेत्रस्थानं विश्वाभिमानिकं देहादिसकलप्रपञ्चं व्यवधानेन जाग्रति यो जानाति स विश्वः। सूक्ष्मशरीराभिमानमपरित्यज्य स्थूलशरीरादिप्रविष्टत्वाद्विश्वः अकारमातृकं ब्रह्माधिदैवतं रजोगुणं क्रियाशक्तिकम्। वल्लभे! एतल्लक्षणमिदं **स्थूलशरीरं,** शीर्यते तच्छरीरमिति ॥ १ ॥

किञ्च।

इडा च पिङ्गला चैव सुषुम्णा च तृतीयका।
गान्धारी हस्तिनी चैव पूषा चापि पयस्विनी ॥ १ ॥
अलम्बुषा कुहूश्चैव शङ्खिनी दश नाडिका.।
सरस्वती वारुणी चेति द्वादशापि।
वामनासापुटे चेडा पिङ्गला दक्षिणे स्मृता ॥ २ ॥
सुषुम्णा मध्यनाले तु गान्धारी वामकर्णके।
दक्षकर्णे हस्तिनी च पूषा वै वामनेत्रके ॥ ३ ॥
अलम्बुषा दक्षनेत्रे जिह्वाग्रे तु सरस्वती।
गुदस्थाने कुहूः प्रोक्ता शङ्खिनी लिङ्गदेशके ॥ ४ ॥
वारुणी मूत्रद्वारे च सर्वाङ्गे तु पयस्विनी ॥

हरिब्रह्मरुद्रेन्द्रवरुणदिक्पद्मजपृथिवीसूर्यचन्द्राधिदैवत्याः अन्या अपि द्वासप्ततिसहस्रसङ्ख्यका.। **इति स्थूलशरीरलक्षणम्** ॥

अथ।

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ॥ १ ॥
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्।
तत्र तु प्राणापानसमानोदानव्यानाः पञ्च वायवः।
हृदि प्राणो गुदेऽपानःसमानो नाभिमण्डले

उदानः कण्ठदेशे च व्यानः सर्वशरीरगः ॥२॥ इन्द्रनीलहरिद्विद्युद्गोक्षीरनीलवर्णकाः। प्राणो नाम प्राग्गमनवान् नासाग्रस्थानवर्त्ती ॥ १ ॥ अपानः अधोगमनवान् गुदस्थानवर्त्ती ॥ २ ॥

व्यानो नाम विश्वग्गमनवानखिलशरीरवर्ती॥३॥ उदानो नाम उर्ध्वगमनवान् कण्ठस्थानवर्ती॥४॥ समान शरीरमध्ये ऽशितपीतान्नपानादिसमीकरणकरः ॥५॥ एतेऽप्याकाशादिपञ्चभूतविकाराः

किञ्च ।

नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः ।

एतेऽपि वायुभेदाः पीतश्वेतधूम्रनीलरक्तवर्णाः वाक्पाणिपादोपस्थगुदस्थाः उद्गिरणोन्मीलनक्षुधाजृम्भणपोषणकराश्चेति ॥ समस्तरोमनाडीस्थश्चलनकर ॥ १ ॥ ललाटोदरस्थः ॥ २ ॥ नासास्थः ॥ ३ ॥ गुह्यगुदस्थः ॥ ४ ॥ ब्रह्मरन्ध्रस्थः ॥ ५ ॥ वैरम्भो मुख्य प्रभञ्जनः अन्तर्यामी । महाप्राणश्चेत्यपि । विषयत्यागे श्रद्धाकृत् अन्तरङ्गस्थः ॥ १ ॥ नाडीः खेलयिता नाडीस्थः ॥ २ ॥ षड्वर्गवशीकृत् ॥ ३ ॥ तनुत्रयातिरिक्तस्तुरीयस्थानेक्रीडाकरः ॥ ४ ॥ सर्वस्थः सोऽहमित्युच्चारकृत् ॥ ५ ॥ अन्येऽपि बहवो वायवः सूक्ष्मशरीरे वर्तन्ते ॥ मनः पञ्चभूतकार्यं साधारणं, पञ्चवृत्तिग्राहकत्वात् सङ्कल्पविकल्पात्मकं चन्द्राधिदैवतम् । बुद्धिर्मनोविशेषः निश्चयात्मिका ब्रह्माधिदैवत्या, बुद्धिर्ज्ञानेन्द्रियैः सहिता सती **विज्ञानमयः कोषः,** ज्ञानशक्तिमान् कर्तृरूपः । शोकमोहोर्मिमन्मनः । मनः कर्मेन्द्रियैः सहितं सन्**मनोमयः कोषः,** इच्छाशक्तिमान् करणरूपः । प्राणादिपञ्चकं कर्मेन्द्रियैः सहित सत् **प्राणमयः कोषः,** क्रियाशक्तिमान् कार्यरूपः । बुभुक्षापिपासेति ऊर्म्मिद्वयसम्पन्नः प्राणः । एतत् कोषत्रय मिलितं सत् **सूक्ष्मशरीर** मिति चोच्यते । चित्तं बुद्धिभेदः अनुसन्धानविषयम् अच्युताधिदैवतम् । अहङ्कारो मनोभेदः अभिमानात्मकः शङ्कराधिदैवत्यः । बुद्धिमनसयोश्चित्ताहङ्कारयोरन्तर्भावे सप्तदशावयवं **लिङ्गशरीर**–मित्यावेदितव्यम् ।

स्वप्नावस्थम् अङ्गुष्ठमितं, कण्ठस्थानं, सत्त्वगुणम्, उकारमातृकं विष्ण्वधिदैवत, तैजसाभिमानिकं (तेजोमयान्तःकरणोपहितत्वात्तैजसः)। मध्यमा वाक्; एतल्लक्षणं सूक्ष्मशरीर मित्यावेदितव्यम् ।

किञ्च

वक्ष्यमाणपञ्चविंशतितत्त्वमयमपि तत् । **इति सूक्ष्मशरीरलक्षणम् ॥ २ ॥** अन्तःकरणादितत्त्वचतुष्टयात्मकं कारणशरीरम्, अखिलकारणत्वात् । पर्वार्द्धपरिमित, तमोगुणं, हृदयस्थानं, सुषुप्त्यवस्थं, सर्वोपरमत्वात् सुषुप्तिः, रुद्राधिदैवत, पश्यन्ती वाक्, मकारमातृक प्राज्ञाभिमानिकं, ( एकाज्ञानावभासकत्वात् प्राज्ञः, ) **आनन्दमयकोषः** । आनन्द प्रचुरत्वात् कोशवदावरकत्वात् । कान्ते ! एतल्लक्षणं कारणशरीरम् ॥ **इतिकारणशरीरम् ॥ ३ ॥** तुर्यावस्थं, मसूरमित, शुद्धसत्त्वगुणम्, अर्द्धमातृकं, मूर्द्धस्थानं, परा वाक्, ईश्वराधिदैवत्यं प्रत्यगात्माभिमानिकम्, अव्यक्तं **महाकारणशरीर**मिति । **इतिमहाकारणशरीरम् ।**

प्रिये ! इत्थं शरीरचतुष्टयं जीवस्य नालिकेरफलवद् विज्ञेयम् ।

भोभो हंसि ! **श्रीपद्मपुराणान्तर्गतसिद्धान्तसारे शरीरचतुष्टयदर्शने श्रीकपिलः ।**

आपादमूर्द्धपर्यन्तं मूर्त्तिरूपं प्रदृश्यते ।
अकारो मातृका तत्र ताम्रवर्ण सुशोभितम् ॥ १ ॥
सर्वेन्द्रियादिव्यापार ऋग्वेदोऽपि तथैव च ।
विश्वोऽभिमानी सम्प्रोक्तः कीर्तितश्च रजोगुणः ॥ २ ॥
भूमिस्तत्त्वं दृश्यरूपं स्थूलभोगस्तथैव च ।
विपरीतज्ञानयुतं वाचा चापि तु वैखरी ॥ ३ ॥
प्रमाणं हस्तसङ्ख्यातं सार्द्धत्रयमिति स्मृतम् ।
अवस्था जाग्रदित्येत-न्नेत्रस्थानं प्रकीर्तितम् ॥ ४ ॥
पञ्चभूतमयो देहः पञ्चविंशतितत्त्वकः ।
प्रत्येकं भूतमंशश्च शृणु सिद्धमहामुने ! ॥ ५ ॥
उत्पत्तिर्जागरो बोधो विवृत्तिस्तु चतुर्थिका ।
कलाचतुष्टयं याति जाग्रतीत्यभिधीयते ॥ ६ ॥
लोभः कामस्तथा क्रोधो मोहश्च भय एव च ।
आकाशभागाः सम्प्रोक्ता ज्ञातव्याश्च मनीषिभिः ॥ ७ ॥
प्रसारणञ्च चाञ्चल्य-मापादगमनं तथा ।
भ्रमणं कुञ्चनं पञ्च वायुभागा इमे स्मृताः ॥ ८ ॥
निद्रा च रतिभोगश्च क्षुधा तृष्णा तथैव च ।
आलस्यं तेजसो भागा, स्थूले पञ्च प्रदर्शिताः ॥ ९ ॥
श्लेष्मा शुक्र तथा रक्त मूत्रं मेदस्तथैव च ।
अपो भागा इमे पञ्च मया विप्र ! प्रकीर्तिताः ॥ १० ॥
रोम, त्वङ्, मांसनाड्यौ च तथैवास्थि च पञ्चमम् ।
पृथ्वीभागाः प्रविज्ञेयाः स्थूले पञ्च मयोदिताः ॥ ११ ॥
प्रत्येकं पञ्चभूतेषु ज्ञेया भागाः परस्परम् ।
व्यापिताः सर्वतो देहे दृश्यंते चर्मचक्षुषा ॥ १२ ॥

## इति स्थूलदेहविवरणम् ।

अथ सूक्ष्मशरीरञ्च वर्णव्यक्ति तथैव च ।
स्थानकर्मक्रियायुक्तं स्वस्थचित्तेन सम्शृणु ॥ १३ ॥
अपञ्चीकृतभूतेभ्यो लिङ्गदेहसमुद्भवः ।
स्थानं कण्ठप्रदेशश्च गुणः सत्त्वं प्रकीर्तितम् ॥ १४ ॥
उकारो मातृका ज्ञेया स्वप्नावस्थाऽभिधीयते ।
अन्यथा ज्ञानमाबोध्य-मापस्तत्त्वं प्रचक्षते ॥ १५ ॥
शुक्लवर्णं दृष्टरूपं वाचा तु मध्यमा स्मृता ।
यजुर्वेदः प्रविज्ञेयो मनो वैकारिकं स्मृतम् ॥ १६ ॥

वपुरङ्गुष्ठमात्रञ्च ह्यभिमानी तु तैजसः ।
प्रविविक्तः स्मृतो भोग, शरीरं सूक्ष्मसंज्ञकम् ॥ १७ ॥
सादृश्यञ्च ह्यनादृश्यं सदृशानादृशो तथा ।
मनो वैकारिकं सर्व स्वप्नावस्थाचतुष्टयम् ॥ १८ ॥
अन्तःकरणं मनो बुद्धि-श्चित्तं चाहङ्कृतिस्तथा ।
आकाशस्य च तत्त्वज्ञै-र्भागाः पञ्च प्रकीर्तिताः ॥ १९ ॥
व्यानः समानोदानौ च प्राणोऽपानस्तथैव च ।
एते पञ्च प्रविज्ञेया भागाः सूक्ष्मे तु वायवः ॥ २० ॥
श्रोत्रं चक्षुस्त्वचा जिह्वा घ्राणश्चापि तु पञ्चमः ।
तेजोभागाः समुद्दिष्टाः पञ्चैते सूक्ष्मदेहके ॥ २१ ॥
वाचा पाणिपादशिश्नं गुदेति पञ्चकं स्मृतम् ।
अपां भागाः प्रविज्ञेयाः सूक्ष्मे पञ्च बुधैरिमे ॥ २२ ॥
शब्दः स्पर्शोऽथ रूपञ्च रसो गन्धस्तथैव च ।
एवमेते तु विज्ञेयाः पृथ्वीभागा हि पञ्च च ॥ २३ ॥
स्थूलदेहस्य मध्यस्थं श्वेतवर्णविराजितम् ।
तन्मध्ये क्रीडते जीव-स्तदधो हृदि कारणम् ॥ २४ ॥

## इति लिङ्गदेहलक्षणम् ॥ २ ॥

कारणं हृदयस्थानं तमोगुणसमन्वितम् ।
अभिमानी स्मृत, प्राज्ञो भोग आनन्दसंज्ञकः ॥ २५ ॥
मकारो मातृका ज्ञेया ह्यवस्था तु सुषुप्तिका ।
अज्ञान तेजस्तत्त्वञ्च दर्शनं परमं स्मृतम् ॥ २६ ॥
कृष्णवर्णञ्च पर्वार्द्धं वाचा पश्यन्तिका स्मृता ।
सामवेदस्तु विज्ञेयो हृदि पद्मं सुशोभनम् ॥ २७ ॥
मरणं विस्मृतिर्मूर्छा निद्रा च तमसावृता ।
कलाचतुष्टय याति सुषुप्तिरिति कथ्यते ॥ २८ ॥
अवकाशं विस्मृतिं चावरणत्व तृतीयकम् ।
निरावृतिप्रभावत्वं भागाः पञ्च विहायसः ॥ २९ ॥
भ्रान्तिः शङ्का शोषणं च शीतलीकरण तथा ।
धीरत्वमिति पञ्चैव वायुभागाः प्रकीर्तिताः ॥ ३० ॥
गूढं मूढं कृतघ्नञ्च ह्यविचारत्वमेव च ।
सङ्क्लेशत्वं च पञ्चैते तेजोभागाः प्रकीर्तिताः ॥ ३१ ॥
मृदुत्वं पोषणत्वञ्च हालाहलत्वमेव च ।
क्लेदनं धारणत्वञ्च भागाः पञ्च स्मृता ह्यपाम् ॥ ३२ ॥

मूढत्वञ्च बलत्वञ्च लज्जाङ्कितत्वमेव च ।
पिण्डीकरणकर्तृत्व काठिन्यत्वञ्च पञ्चमः ॥ ३३ ॥
एवं पञ्च प्रविज्ञेयाः पृथ्वीभागा मुनीश्वर ! ।
हृदये कारणं ज्ञेयं शरीरत्रयसंज्ञकम् ॥ ३४ ॥

**इति कारणदेहविवरणम् ॥ ३ ॥**

एतदूर्ध्वं शरीरञ्च महाकारणमुच्यते ।
ईश्वरो दैवतं ज्ञेयं जीवत्वं तत्र लीयते ॥ ३५ ॥
स्थानं मूर्द्धा तु विज्ञेयं भोगश्चैवावभासकः ।
शुद्धसत्त्वगुणो ज्ञेयः प्रत्यगात्माऽभिमानिकः ॥ ३६ ॥
तुर्यावस्थाप्यर्द्धमात्रा विवेकज्ञानमाश्रितम् ।
वायुतत्त्वं तथा ज्ञेयं नीलवर्णविराजितम् ॥ ३७ ॥
प्रमाण मसुरामात्रं परा वाचा ह्याथर्वणः ।
महाकारणदेहे तु वायुमण्डलमेव च ॥ ३८ ॥
वैराग्यत्वं मुमुक्षुत्वमात्मत्वं तत्त्वदर्शनम् ।
कलाचतुष्टयं याति तुर्यावस्थाभिधानके ॥ ३९ ॥
पूर्णत्व चासमत्वं च व्यापकं सर्वबीजकम् ।
अखण्डत्वमिति प्रोक्ता भागाः पञ्चात्र नाभसाः ॥ ४० ॥
अजत्वमच्छेद्यत्वं च परात्परत्वनिर्मले ।
अखण्डत्वमिति ज्ञेया वायुभागास्तु पञ्च वै ॥ ४१ ॥
अदाहत्वमूर्ध्वपद प्रकाशत्वं तथैव च ।
चैतन्यत्वमनर्घ्यत्वं तेजोभागाः प्रकीर्तिताः ॥ ४२ ॥
अक्रोधत्व जगज्जीवं ज्योतीरसत्वरूपकम् ।
अमृतत्वं कारणत्वमपां भागाः स्मृता इमे ॥ ४३ ॥
अशोकत्वं कारणत्वं पावनत्वमिति स्मृतम् ।
समृध्यत्वं तथाधारं पृथ्वीभागाः प्रकीर्तिताः ॥ ४४ ॥
पञ्चविंशतितत्त्वात्म महाकारणसंज्ञकम् ।
देहमध्ये महाश्रेष्ठं नालिकेरफलाम्बुवत् ॥ ४५ ॥
शरीरं वेदसङ्ख्याकं तत्त्वानां शतक तथा ।
भस्मीभूते शरीरेऽपि वर्णरूपं न चोज्झ्यते ॥ ४६ ॥

**इति महाकारणशरीरलक्षणम् ॥ ४ ॥**

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे शरीरचतुष्टयदर्शनं नाम पञ्चदशोल्लासः ॥ १५ ॥**

श्रीहंसः । भोः प्रज्ञावति ! ज्ञायतामात्मतत्त्वविज्ञानरहस्यम् ।

हंसी । कृतार्थाऽस्म्यनुगृहीताऽस्मीति स्वामिनश्चरणकमलं नत्वोत्कण्ठान्तच्छ्रवणाय चकार ।

श्रीहंसः । अथ ह खल्वखण्डत्वेन खेलतोः श्रीशक्तिशिवयोरोमिति तेजोरूपं चराचरजगदुत्पत्तिस्थितिलयादिकारणं निर्गुणमपि सकलगुणजाततत्त्वप्रपञ्चमूलमेकदाविर्भूतम् । तस्याक्षरमितिनाम ॐ **मित्येतदक्षरमिति श्रुतेः** । न क्षरतीत्यक्षरमिति व्युत्पत्त्याऽविनाशि स्वरूपम् । श्रीशिवशक्त्योः साक्षात्सामरस्योद्भूतत्वात् केनोङ्कारस्वरूपं कलयितुं शक्यम् । यद्यदुत्पन्नं तत्तद्विनाशीति तर्कोऽचिन्त्यमहिम्नि नो विचिन्त्यः । तदोङ्कारं श्रीतिरस्करिण्यावृतम् । यद्यपि न तदप्यस्मदादिवद्वेद्यम् । तत्तु सकलब्रह्माण्डमूलं चैतन्यप्रचुरं नैरन्तर्येण वर्त्तते । न कदाचन स्वरूपभ्रमस्तत्कृत इति तत्र विचार्यम् । न चावयववैकृत्यम् । इत्थम्भूतं सकलशब्दादिमोङ्कारतः सर्वञ्जगज्जातमित्यवगन्तव्यम् ।

जाये ! । किं बहुजल्पनेन, न तदक्षरब्रह्मणः सकाशादित्थञ्जगदुत्थितमित्यसंशयं महान्तोऽपि ब्रह्मविष्णुरुद्रादयो भणितुं प्रभवः । तथापि तदिच्छया किञ्चित्त्वामहमाचक्षे । श्रीमदर्द्धनारीश्वरस्याप्रमेयमहिमानं का मयि शक्तिः संज्ञापयितुम् । क्षम्यतां मम साहसमिति प्रणतिपूर्वकं स्वशक्तिं प्रति जगतीप्रपञ्चरचनां रासत्वादवोचत् स हंसः ।

शृणोतु शक्तिः । तदक्षरब्रह्मणो नादबिन्दुमकारोकाराकारलक्षणानि पञ्चाक्षराणि तेजोरूपाणि मूर्द्धभ्रूहृदयनाभिपादाङ्गभूतानि भवन्ति । तानि चानिर्वचनीयशुद्धसत्त्वतमःसत्त्वरजोलक्षणैर्गुणैरलङ्कृतानि सकलप्रपञ्चबीजभूतानि । किञ्च समष्ट्या ॐ मितिबीजं शिवशक्त्यात्मकं नानाब्रह्माण्डकोटिक ज्योतिर्मण्डलमज्ञेयगुणं सर्वव्यापकं शब्दब्रह्माभिधमविद्याप्रधानपरमाणुकर्मादिनानाख्यानकं च श्रीनगरान्तर्गतसच्चिदानन्द-परिपूर्णाद्वैतार्द्धनारीश्वरसामरस्योल्लसितमित्यवैतु भवती । तद्व्यष्ट्या तु विचित्रजगत्प्रपञ्चरचना व्यक्तीभवति । तादृशस्य श्रीमच्चिच्छक्तिस्वरूपस्य तस्यानिर्वाच्यस्य किन्तद्व्यष्टिरूपमिति कियत् साम्प्रत शृणु । मादृग्विधैः कथमखिलं शक्येत वक्तुम् । अनन्तमहिम्नः श्रीमच्छब्दब्रह्मस्वरूपतः श्रीमदर्द्धनारीश्वरस्वरूपमेव रूपान्तरेण विचित्ररासक्रीडार्थं प्रथममाविर्भूतं पराशक्तिसदाशिवाख्यं, एतदेवादिमं मिथुनं, स सदाशिवः नादात्मा कैवल्यमूर्त्तिराकाशमयोऽनिर्वचनीयगुणः निरावरणः । तदग्रजातानां सर्वेषां मिथुनानामनुगृहीता सकलशब्दप्रकाशकः । किञ्च, श्रीपराशक्त्या साकं क्रीडतः सदाशिवादादिशक्तीश्वरौ तदभेदेनाविर्भूतौ, स ईश्वरः बिन्द्वात्मा, नादबिन्द्वोर्व्यत्यासः क्वचित् । शुद्धसत्त्वगुणः वायुमयः, अव्याकृतमायामूर्त्तिः । अखिलमाया-खेलयिता, प्रलये कारणरूपस्य सर्वस्य स्वात्मना सह तिरोधानकर्त्ता, सावरणोऽपि स्वायत्तः, तादृशादीश्वराद्गौरीरुद्रावुदितौ । स रुद्रः मकारात्मा, सत्त्वतमोगुणः, तेजोमयः, विश्वसंहर्त्ता । एतन्मिथुनाल्लक्ष्मीविष्णू स्फुरितौ । स विष्णुः उकारात्मा सत्त्वतमोगुणः, जलमयः, हिरण्यगर्भमूर्तिः सकलपालकः । श्रीविष्णोः सकाशात् सरस्वतीब्रह्माणावाविर्भूतौ । स च ब्रह्मा, अकारात्मा, रजोगुणः, पृथिवीमयः । विराण्मूर्तिः सर्वस्य जगतःस्रष्टा ।

उक्तञ्च **शारदातिलके** ।

अथ बिन्द्वात्मनः शम्भोः कालबन्धोः कलात्मनः ।
अजायत जगत्साक्षी सर्वव्यापी सदाशिवः ॥ १ ॥

सदाशिवाद्भवेदीश-स्ततो रुद्रसमुद्भवः ।
ततो विष्णुस्ततो ब्रह्मा तेषामेवं समुद्भव इति ॥ २ ॥

**योगरसायने । ईश्वरः ।**

अस्ति कारणमव्यक्तं सर्वव्यापि परात्परम् ।
सान्निध्यादपि दुर्ग्राह्यं विश्वमूर्त्युपलक्षितम् ॥ १ ॥
नाकारं न निराकारं न च स्त्रीपुंनपुंसकम् ।
नाम्भस्तेजो मरुद्व्योम भूमिर्दूरे न चान्तिके ॥ २ ॥
ततोऽनिच्छस्य देवस्य शक्तिरिच्छेत्यजायत ।
चिद्रूपिण्या तया क्रीडां कर्त्तुमैच्छत् सुलीलया ॥ ३ ॥
क्रियारूपा गुणमयी तस्या बुद्धिरजायत ।
ज्ञानशक्तिरितिख्याता क्रियाशक्तिश्च सा स्मृता ॥ ४ ॥
बुद्धेरहं ततश्चित्त-शक्तिस्तस्याः सदाशिवः ।
नभोरूपी ततो वायु-रीश्वरः समजायत ॥ ५ ॥
ईश्वरात् समभूद्रुद्रो ज्योतिर्मय उमापतिः ।
रुद्राद्विष्णुरभूदाप-स्त्रैलोक्यपरिपालकः ॥ ६ ॥
विष्णुनाभ्यम्बुजे जातो ब्रह्माऽयं पृथिवीमयः ।
तैरुद्भूतं स्वशक्त्येदं त्रैलोक्यं सचराचरम् ॥ ७ ॥
पञ्चभि.सह सम्भूय पञ्चभूतमयात्मकैरित्यादि ।

**। कुब्जिकातन्त्रे ।**

शिवस्य निःप्रपञ्चस्य परमार्थशरीरिणः ।
चिदुल्लासात्परा जाता पञ्चानां मातृरूपिणी ॥ १ ॥
परातोऽजायतेच्छा हि सा च व्योमपतिः स्मृता ।
षट्त्रिंशन्नायिका प्रोक्ता कण्ठस्थानसमाश्रिता ॥ २ ॥
इच्छातो जायते ज्ञाना सा च वायोरधीश्वरी ।
सप्तविंशतिरश्मीनां पतिः साऽनाहताश्रया ॥ ३ ॥
ज्ञानातोऽभूत् क्रियाऽव्यक्ता सा च वह्नीश्वरी मता ।
एकत्रिंशद्रश्मिपतिः स्वाधिष्ठानसमाश्रिता ॥ ४ ॥
क्रियातः कुण्डली व्यक्ता सा स्यात् सलिलनायिका ।
सप्तविंशत्युस्त्रिया सा मणिपूरसमाश्रिता ॥ ५ ॥
कुण्डल्या मातृका जाता सा क्षितेरीश्वरी मता ।
अष्टाविंशतिरश्मीना-मधिपाऽऽधारमाश्रिता ॥ ६ ॥

कान्ते ! किमुक्तं, परा १ इच्छा २ ज्ञाना ३ क्रिया ४ कुण्डलिनी ५ मातृका ६ इति षट् शक्तयः । तत्र ता एव परमशिव-सदाशिवेश्वर-रुद्रविष्णु-ब्रह्मरूपाः । ब्रह्माकाशवायुतेजोजल-

भूमिस्वामिन्यस्तद्रूपा इत्यर्थः। नामभेदेऽपि नार्थान्तरभेद इत्याशङ्क्य, अनिर्वचनीया १ परा २ आदिः ३ इच्छा ४ ज्ञाना ५ क्रिया ६ तत्र इच्छादयस्तिस्रो गौरीलक्ष्मीसरस्वतीसंज्ञकाः। तत्र सदाशिवेश्वरयोः परा १ आदि २ रिति शक्तिद्वयम्। रुद्रादीनां तु इच्छादयः। अत्र तु, इच्छाज्ञाने तयोः शक्ती। रुद्रादीनां तु, क्रियाकुण्डलिनीमातृकाः, गौरीलक्ष्मीसरस्वतीलक्षणाः। अत्र विशुद्ध्यादि पञ्च चक्राणि स्थानानि। तत्र भ्रूवादिपादान्तमिति। किञ्च, 'जगत् सूते धातेति' **श्रीशङ्करश्चानन्दलहर्याम्** । एते सदाशिवादयः पञ्च श्रीमदर्द्धनारीश्वरानुज्ञया स्व स्वशक्तिमन्तोऽक्षरतः प्रपञ्चकर्मसु प्रवर्त्तन्ते, तदायत्तत्वात्तदिच्छावैवश्याच्च। 'तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोरिति' **शङ्करः**। तदभिन्ना अपि लीलाचमत्कृतये भिन्ना इवावलोक्यन्ते। प्रेयसि! एष त्वध्यारोपः। वस्तुन्यवस्त्वारोपोऽध्यारोपः। वस्तु शिवाद्वयरूपं, अवस्तु सदाशिवादि वक्ष्यमाणमशेषं जगत्, तस्य तस्मिन् आरोप इत्यर्थः। किञ्च, त एव पञ्च ऊर्ध्वपूर्वदक्षिणोत्तरपश्चिमक्रमेणेशानतत्पुरुषाघोरवामदेवसद्योजातेति–मुखसंज्ञकाः। ब्रह्मसंज्ञकाश्च, महाप्रेतसंज्ञा अपि। इत्थं श्रीपरमशिवस्य बाहुल्येच्छयाऽनेकरूपत्वम्। **एकोऽहं बहु स्यामित्यादिश्रुतेः। श्रीनरारे** तु नानानामरूपोऽप्यनावृतत्वादनुभूतिमन्तस्त्वेक एवेति जानन्ति। स एव शिवः। आवरणान्तरालेऽप्येक एव श्रीरासलीलार्थमुल्लसितः। **'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति' श्रुतेः।** तथापि **श्रीतिरस्करिणी**महिम्ना स्वाच्छन्द्येनैव भ्रान्तो भूत्वा तत्तद्भोगायतनेषु प्रविश्य जीवरूपेण नाना भोगान्भुङ्क्ते इति तु **तात्त्विकम्**। तथा तस्येदृशः क्षररूप**रासविलासस्य** पारंपर्यज्ञापनाय **तल्लक्षणं** त्वां श्रावयामः।

अथ तदव्यक्तब्रह्मणः सकाशान्महत्तत्वं त्र्यक्षरं त्रिगुणं चोज्जृम्भितम्। बिन्दुनादयोर्विकारो न स्यात्, तस्मादहङ्कारः। स ईश्वरः, कारणोपाधिः, मकारोल्लसितः स ईश्वरः इच्छाशक्तिमाश्रित्य, तमोगुणमपश्यत् तदैक्षत, स ईक्षाञ्चक्रे इत्यादि **श्रुतेः** तदीक्षणतस्तत्सत्तया च, त्रिगुणात्मकानि पञ्चभूतानि जातानि। शब्दस्पर्शरूपरसगन्धाश्च।

तेषां भूतानां गुणधर्मकर्मवर्णास्तु।

शब्दादिपञ्चविषया भूमेः पञ्चगुणाः स्मृताः।
जले गुणास्तु चत्वारो गुणाश्चाग्नौ त्रयः स्मृताः॥ १॥
वायौ च द्वौ गुणौ ज्ञेयौ ह्याकाशे त्वेक एव हीति।
यत्काठिन्यञ्च सा पृथ्वी यद्द्रवं तज्जलं स्मृतम्॥ २॥
यदुष्णत्वञ्च तत्तेजो वायुः सञ्चरता त्विह।
अवकाशत्वमाकाशं भूतधर्मा इमे स्मृताः॥ ३॥
पीतं श्वेतञ्च रक्तञ्च हारीतं कृष्णमेव च।
पृथ्व्यादि पञ्चभूतानां वर्णभेदाः प्रकीर्तिताः॥ ४॥
धारणं पिण्डकरणं पचनं व्यूहनादि च।
सर्वाश्रयञ्च भूतानां कर्माण्येतानि निश्चितम्॥ ५॥

पृथ्व्यां ब्रह्मा जले विष्णुस्तथा रुद्रो हुताशने ।
ईश्वरः पवने देव ! आकाशे तु सदाशिवः ॥ ६ ॥

इत्यधिदैवतानि ।

अथ स ईश्वरः उकारोल्लसित-ज्ञानशक्तिमङ्गीकृत्य सत्त्वगुणमैक्षत । ततोऽन्तःकरणचतुष्टयं जातम् । मनः १ बुद्धिः २ चित्तम् ३ अहङ्कार ४ श्चेति । क्वचित् ज्ञातृनामकं पञ्चममपि । ज्ञानेन्द्रियाणि च । तथैव अकारोल्लसितस्य ब्रह्मात्मकस्य, क्रियाशक्तियुक्तस्येश्वरस्य रजोगुणेक्षणात् प्राणादिपञ्चकं कर्मेन्द्रियपञ्चकं चोत्पन्नम् । इत्थं प्रणवाङ्गभूतमकारोकाराकारात्मनः श्रीपरमेश्वरस्य, इच्छादिशक्तित्रयाश्रितस्य प्रेक्षणतो मकारोकाराकारगततमःसत्त्वरजोगुणेभ्यः पञ्चभूतान्तःकरणचतुष्टय-ज्ञानेन्द्रियपञ्चक-प्राणपञ्चक-कर्मेन्द्रियपञ्चकानामाविर्भावः । तत्र प्राणपञ्चकवर्जितानि अहङ्कारप्रभृति बुद्धिमनःशब्दादिपञ्चकयुक्तानि चित्तरहितानि चतुर्विंशतितत्त्वान्यपि ज्ञातव्यानि ।

किञ्च ।

पञ्चभूतान्यहङ्कारकार्याणि पारंपर्यक्रमतः । तत्रादौ तमःप्रधानाहङ्कारात् श्रीपरमेश्वर सत्तया त्रिगुण आकाश उत्पन्नः १ ततस्त्रिगुणो वायुः २ ततस्तेजः ३ ततो जलं ४ ततस्त्रिगुणा-भूमिः ५ इत्थं त्रिगुणानि भूतानि तमःप्रधानानि जाड्यबाहुल्यात् ।

आकाशादिभूतपञ्चकगतसत्त्वगुणैक्यात् अन्तःकरणानि उत्पन्नानि ।

महत्तत्वतो योऽहङ्कारः स कारणरूपः अन्तःकरणे तु कार्यरूपः । अथवान्तःकरणद्वयं मनःबुद्धिश्चेति । बुद्धावहङ्कारस्य, मनसि चित्तस्यान्तर्भावः स्फूर्तिमत्त्वात् । सत्त्वकार्यत्वमन्तःकरणानाम् ।

किञ्च ।

भूतपञ्चकगतपृथक्पृथक्सत्त्वगुणकार्याणि ज्ञानेन्द्रियाणि । आकाशस्य सत्त्वांशात् श्रोत्रमित्येवं क्रमेण । अपि च । आकाशादिभूतपञ्चकगतरजोगुणैक्यात् प्राणादिपञ्चकमुत्पन्नम् । तद्गत पृथक्पृथक्रजोंशेभ्यः वागादिकर्मेन्द्रियपञ्चकोत्पत्तिः । आकाशस्य रजोंशात् वागुत्पन्ना । वायो रजोंशात् पाणिरित्यादि । ये च पञ्चभूतगतशब्दादयो गुणाः त एव ज्ञानेन्द्रियविषयाः । कर्मेन्द्रियाणां तु वचनादानगमनानन्दविसर्गा विषयाः । स्फूर्तिसङ्कल्पनिश्चयानुसन्धानाभिमानाः ज्ञात्राद्यन्तःकरणपञ्चकविषयाः ।

प्राणादीनां तु स्थानवर्णधर्मा उच्यन्ते । हृदयगुदसर्वसन्धिकण्ठनाभिसंज्ञानि प्राणापानव्यानोदानसमानानां पृथक् स्थानानि । इन्द्रनीलहरिद्गोक्षीरविद्युन्नीला वर्णाः । श्वासोच्छ्वासमलोत्सर्गनाडीचक्रान्नपानपूरणस्थितिगतिनिरोधनाडीरोगान्नपानसमीकरणधर्माः, तेषां विषया इत्यर्थः ।

किञ्च ।

पञ्चभूतानां स्वस्वतत्त्वानि—अन्तःकरणपञ्चकमाकाशस्य १ वायोः प्राणपञ्चकं २ ज्ञानेन्द्रियपञ्चकं तेजसः ३ शब्दादिपञ्चकं जलस्य ४ वागादिपञ्चकं पृथिव्याः ५ पञ्चीकरणे तु परस्परानुप्रवेशेन ।

अहञ्च प्राणवायुश्च नासिका गन्ध एव च ।
गुह्यं पञ्चममित्युक्तं जलपञ्चकमुत्तमम् ॥ १ ॥

चित्तं चापानवायुश्च जिह्वा रसनमेव च ।
पायुः पञ्चममित्युक्तं भूमिपञ्चकमुत्तमम् ॥ २ ॥
बुद्धिश्चोदानवायुश्च चक्षू रूपं तथैव च ।
पादः पञ्चमइत्युक्तं तत्त्वज्ञैरग्निपञ्चकम् ॥ ३ ॥
मनश्च व्यानवायुश्च चर्म स्पर्शस्तथैव च ।
पाणिः पञ्चम इत्येतत् प्रोक्तं वै वायुपञ्चकम् ॥ ४ ॥
ज्ञातृ समानवायुश्च श्रोत्रं शब्दस्तथैव च ।
वाक् चेति पञ्चमं तज्ज्ञैः सम्प्रोक्तं व्योमपञ्चकमिति ॥ ५ ॥

शृणोषि तत्त्वज्ञे ! । भूतानि द्विविधानि अपञ्चीकृतानि पञ्चीकृतानि च । तत्रापञ्चीकृतानि सूक्ष्माणि तन्मात्राण्यपि, पञ्चीकृतानि तु स्थूलानि ।

**। पञ्चीकरणं तु ॥**

द्विधा विधाय चकैकं चतुर्द्धा प्रथमं पुनः ।
स्वस्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च च ॥ १ ॥

किमुक्तम् । एकैकमाकाशादिभूतं द्विधा विभज्य, अर्द्धमर्द्धं पञ्चानां पृथक् संस्थाप्य, द्वितीयार्द्धानि पञ्च एकैकं चतुर्द्धा विभज्य, तत्र पृथिव्या अर्द्धस्य भागाश्चत्वारः-जलादीनां चतुर्णां स्थापितेषु चतुर्षु अर्द्धेषु पृथक् पृथक् एकैकं योजनीयाः । अर्द्धं तु एवमेव रक्ष्यम् । तथैव जलार्द्धस्य चत्वारोऽशाः-पृथ्वीतेजःपवनाकाशानामर्द्धेषु पृथक् योज्याः जलार्द्धं तु तथैव रक्षणीयम् । एवं तेजोभागाश्चत्वार. स्वांशं परित्यज्येतरेषु चतुर्षु नियोज्याः । तद्वद्वाय्वाकाशयोरप्यनेन प्रकारेण परस्परानुप्रवेशात् पञ्चीकृतपञ्चमहाभूतानि स्थूलान्यभवन् ॥ **इति पञ्चीकरणप्रकारः ।**

एतेभ्यः स्थूलभूतेभ्यः ईश्वरेक्षणात् स्थूलप्रपञ्चः समभूत् । एतादृशपञ्चीकृतपञ्चमहाभूतेभ्यो ऽण्डमुत्पन्नम् । एतस्मिन्नण्डेऽतलवितलसुतलतलातलरसातलमहातलपातालानीति सप्ताधोऽधोलोकानां भूर्भुवःस्वर्महर्जनस्तपःसत्यमित्युपर्युपरि विद्यमानानां सप्तलोकानां ब्रह्माण्डस्य तदन्तर्वर्त्तिचतुर्विधस्थूलशरीराणामन्नपानादीनां चोत्पत्तिर्भवति । तत्तल्लोकस्योचितान्युद्भिज्जस्वेदजाण्डजजरायुजलक्षणानि चतुर्विधानि शरीराणि । भूमिमुद्भिद्य जातानि वृक्षपर्वतादीन्युद्भिज्जानि १ स्वेदाज्जातानि यूकामशकादीनि स्वेदजानि २ अण्डेभ्यो जातानि पक्षिपन्नगादीनि ३ जरायुभ्यो गर्भवेष्टनपुटेभ्यो जातानि मनुष्यपश्वादीनि ४ ॥

किञ्च ।

**योगरसायने ॥**

तदर्थमभवत्पूर्वं ब्रह्माण्डं कनकप्रभम् ।
तत्र सृष्टं स्वशक्त्येदं त्रैलोक्यं सचराचरम् ॥ १ ॥
ततो ब्रह्मा द्विधाभूतः शिवशक्तिविभागतः
स्त्रीपुंरूपेण सौख्यार्थं सुरतेनासृजत् प्रजाः ॥ २ ॥

ततश्चतुर्मुखादासन् दशपुत्रा मनोभवाः ।
तेभ्यो दश ददौ कन्या मनोजाताः प्रजापतिः ॥ ३ ॥
ते सर्वे ज्ञाननिरताः सुसन्तुष्टास्तपोधनाः ।
तेषां पुत्रैश्च पौत्रैश्च व्याप्तं सर्वमिदं जगत् ॥ ४ ॥
तत आत्मभुवः पुत्रो मरीचिरिति योऽभवत् ।
दशपुत्रेषु विख्यातस्तस्माज्जातस्तु कश्यपः ॥ ५ ॥
सोऽपि दक्षस्य कन्यासु कश्यपः समजीजनत् ।
उत्पत्तिहेतुर्विश्वस्य भूतग्रामांश्चतुर्दश ॥ ६ ॥
अष्टधा देवता योनिस्तिर्यग्योनिश्च पञ्चधा ।
एकधा मानुषी योनि-र्भूमेर्भूताश्चतुर्दश ॥ ७ ॥
तैजसा देवकार्येषु बभूवुः सप्त धातवः ।
अन्येषान्त्वपि कार्येषु पार्थिवाः सप्त धातवः ॥ ८ ॥
सर्वे मिथुनरूपेण प्रजा उत्पादयन्ति ते ।
मैथुनानन्दनिरता विषयासक्तचेतसः ॥ ९ ॥
योनिस्तु वैष्णवी शक्तिर्लिङ्गरूपी सदाशिवः ।
उभयोर्योगतो बीजं ब्रह्मरूपं प्रवर्त्तते ॥ १० ॥
गर्भाशयो धरापीठं रजो रक्तं च भास्करः ।
सौम्यं रेतो ब्रह्मरूपं तस्मिंस्तत्रावलम्बते ॥ ११ ॥
सूर्याचन्द्रमसोर्योग-ममावास्यां विदुर्बुधाः ।
तस्यां प्रजाः प्रजायन्ते यदीच्छा पारमेश्वरी ॥ १२ ॥

प्रिये ! । इत्यादि **पञ्चीकृतपञ्चमहाभूतलक्षणम् ।**

किञ्च, चत्वारि शरीराणि जीवस्य, ईश्वरस्यापि चत्वारि । स्थूलं सूक्ष्मं कारणं महाकारण चेति जीवस्य । कार्योपाधिर्जीव. । विराट् १ हिरण्यगर्भ. २ अव्याकृतः ३ मूलप्रकृति ४ रितीश्वरस्य । कारणोपाधिरीश्वरः ।

अथ स्थूलशरीरं पञ्चीकृतपञ्चभूतोत्थं पञ्चविंशतितत्त्वमयम् । एतदेवान्नविकारत्वादन्नमयकोशः । स्थूलदेहेऽभिमानिनो जीवात्मनो विश्वो व्यावहारिकश्चिदाभास इति नामत्रयम् १ पञ्चप्राणमनोबुद्धिदशेन्द्रियेतिसप्तदशावयवं सूक्ष्मशरीरं लिङ्गशरीरं वा । तत्तु प्राणमयमनोमयविज्ञानमयसंज्ञककोषत्रयात्मकम् । प्राणादिपञ्चकं प्राणमयकोषः, क्रियाशक्तिमान् कार्यरूपः । कर्मेन्द्रियैः सहितं मनः मनोमयः कोषः, इच्छाशक्तिमान् कारणरूपः । ज्ञानेन्द्रियैःसहिता-बुद्धिः विज्ञानमयकोषः, ज्ञानशक्तिमान् कर्तृरूपं भोगसाधनञ्च । तस्मिन् लिङ्गशरीरेऽभिमानिन आत्मनः तैजस प्रातिभासिकः स्वप्नकल्पित इति नामत्रयम् । अन्तःकरणं चित्तमहङ्कारो ज्ञातेति चतुरवयवं भोक्तृरूपं कारणशरीरम्, आनन्दमयकोषात्मकम् । तत्राभिमानिन आत्मनःप्राज्ञ-पारमार्थिकोवच्छिन्न इति नामत्रयम् । इत्थं विराड्देहाभिमानिनःपरमेश्वरस्य ब्रह्मा इति नाम । हिरण्यगर्भदेहाभिमानी विष्णुः । अव्याकृतमायादेहाभिमानी रुद्रः । मूलप्रकृतिशरीराभिमानी-

श्वरः । श्रीसदाशिवस्तु कैवल्यदेहः नादात्मा स्वशक्त्या सह सकलानुग्रहकर्ता साक्षित्वेन श्रीरासेश्वरानुज्ञया तेजःपुञ्जाक्षरब्रह्मणि विलसति ।

सधवे ! । एतत् सर्वमध्यारोपः ।

**। अथापवादः ।**

अपवादो नाम कारणाद्भिन्नं कार्यं न भवतीति ज्ञानं, यथा मृदः सकाशादुत्पन्ना घटशरावादयः मृद्व्यतिरिक्ता न भवन्ति । तद्वत् श्रीशिवशक्त्योः सकाशात् उत्पन्नः प्रपञ्चःपरमशिवव्यतिरिक्तो न भवतीति ज्ञानमपवाद इत्युच्यते । तथा च पञ्चीकृतपञ्चमहाभूतेभ्योऽण्डमुत्पन्नम् । अण्डे चतुर्दश भुवनानि । तत्तल्लोकोचित-चतुर्विधभूतग्रामः । एतेषां कारणभूतपञ्चीकृतपञ्चमहाभूतानि तादृशसमष्टिव्यष्ट्यात्मकं लिङ्गशरीरञ्च अपञ्चीकृतपञ्चमहाभूतेभ्यः भिन्नं नास्तीति ज्ञानम् । तादृशापञ्चीकृतमहाभूतानि विलोमक्रमेण तत्तद्व्यतिरिक्तानि न भवन्तीति ज्ञानम् । जलादुत्पन्ना पृथिवी जलव्यतिरिक्ता न भवति । तेजस उत्पन्नं जलं तेजोव्यतिरिक्तं न । वायोरुत्पन्नं तेज. न तद्व्यतिरिक्तम् । आकाशादुत्पन्नो वायुः आकाशान्न भिन्नः । अहङ्कारादुत्पन्नः आकाशस्तद्व्यतिरिक्तो न । महत्तत्वत उत्पन्नोऽहङ्कारो न तद्भिन्नः । अव्यक्तादुत्पन्नं महत्तत्वं न तद्भिन्नम् । श्रीमदर्द्धनारीश्वरोल्लासात् उत्पन्नमव्यक्तं तद्व्यतिरिक्तं न भवतीति ज्ञानम् । अव्यक्तं नाम अक्षरलक्षणम् । सद्वा असद्वा सदसद्वा भिन्न वाऽभिन्नं वा भिन्नाभिन्न वा सावयवं वा निरवयवं वा उभयात्मकं वा इति विचार्यं चेत् किमपि न भवतीति । कालत्रयेऽपि वन्ध्यातनयवन्नास्तीति कृत्वा सन्नभवति । अनुभवादसन्न भवति । विरुद्धधर्मप्रकारत्वात् सदसन्न भवति । अहम् अज्ञ इति सञ्ज्ञाभावात् भिन्नन्नभवति । अचेतनत्वात् अभिन्नं न भवति । विरुद्धप्रकारत्वात् भिन्नाभिन्नं न । जगदाकारतया परिणामित्वात् निरवयवं न । मूलकारणत्वात् सावयवं न । विरुद्धप्रकारत्वात् उभयात्मकं न । तर्हि किमितिचेदनिर्वचनीयमेव । अनिर्वचनीयं नाम मिथ्यास्वरूपम् ।

**इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे तत्त्वविवेको नाम षोडशोल्लासः ॥ १६ ॥**

**अथात्मविवेकः प्रोच्यते ।** शरीरचतुष्टयान्तर्गतोऽपि तद्विलक्षणो ज्योतिर्मयः सर्वसाक्षी नित्यो निर्मलः परमशिव एवात्मा विज्ञातव्यः । शिव एव स्वेच्छयाऽऽदौ शरीररूपो भूत्वा पश्चादात्मतया तस्मिन् खेलनाय प्रविष्टः । प्रवेशमात्रात्तदीयेच्छावैवश्येन कयाचित्तिरस्करिणीनाम्न्याऽऽवरणशक्त्याऽऽवृतः विक्षेपशक्त्या च विक्षिप्तः ततः स्वकीयं शिवरूपं विस्मृत्य शरीरमयो नानानामरूपात्मको जात इव विज्ञेयः ।

**। वासिष्ठे च ।**

यथा सत्त्वमुपेक्ष्य स्वं शनैर्विप्रो दुरीहया ।
अङ्गीकरोति शूद्रत्वं तथा जीवत्वमीश्वरः ॥ १ ॥

**श्रुतिश्च । तत्सृष्ट्वा तदेवानुप्राविशत् । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति ।**

किञ्च ।

श्रीपरमशिव एव विलसनाय स्वेच्छया स्त्रीशरीरं पुरुषशरीरं चाङ्गीकृत्य दिङ्मूढवदात्मानं विस्मृत्याऽहं स्त्री पुरुषोऽहमित्याद्यभिमन्वानो वर्णाश्रमकुलजातिविनिर्मितविचित्रकर्मनिबद्ध इव नानायोनिसमुत्थितसुखदुःखदशां भुङ्क्ते ।

## । वासिष्ठे च ।

भूतानि द्विविधान्येव प्रतिसर्ग स्फुरन्ति वै ।
आद्यचित्स्पन्दजातानि तानि निष्कारणानि वै ॥ १ ॥
ईश्वरात् समुपागत्य पुनर्जन्मान्तराणि तु ।
भूतान्यनुभवन्त्यङ्ग ! स्वकृतैरेव कर्मभिः ॥ २ ॥
कार्यकारणभावोऽयमीदृशो जन्मकर्मणोः ।
अकारणमुपायान्ति सर्वे जीवाः परात्पदात् ॥ ३ ॥
पश्चात्तेषां स्वकर्माणि कारणं सुखदुःखयोः ।
एते जीवाश्रितो भावा भवभावनयाहिताः ॥ ४ ॥
ब्रह्मणा कलिताकाराः सहस्रायुतकोटिश. ।
सङ्ख्यातीताः पुरा जाता जायन्तेऽद्यापि चाभित. ॥ ५ ॥
उत्पत्स्यन्तेऽपि चैवान्ये कणौघा इव निर्झरात् ।
स्ववासनावशावेशा-दाशाविवशतां गताः ॥ ६ ॥
दशास्वपि विचित्रासु स्वयं निगडिताशयाः ।
अनारतं प्रतिदिशं प्रतिदेशं जले स्थले ॥ ७ ॥
जायन्ते च म्रियन्ते च बुद्बुदा इव वारिणि ।
केचित् प्रथमजन्मानः केचिज्जन्मशताधिकाः ॥ ८ ॥
केचिच्चासङ्ख्यजन्मानः केचिद् द्वित्रिभवान्तरा. ।
विहरन्तश्च कैः केचित् निपतन्त्युत्पतन्ति च ॥ ९ ॥
कन्दुका इव हस्तेन मृत्युनाऽविरतं हताः ।
आशापाशशताबद्धा वासनाभारवाहिनः ॥ १० ॥
कायात् कायमुपायान्ति वृक्षाद्वृक्षमिवाण्डजाः ।
दिवि देवा भुवि नराः पाताले भोगिनोऽसुराः ॥ ११ ॥
ब्रह्माण्डोदुम्बरफले स्फुरन्मशकवत् स्थिताः ।
केचित् किन्नरगन्धर्व-विद्याधरमहोरगाः ॥ १२ ॥
केचिदर्केन्दुवरुणत्र्यक्षाऽधोक्षजपद्मजाः ।
केचिद्ब्राह्मणभूपालवैश्यशूद्रगणाः स्थिताः ॥ १३ ॥
कीचत्तृणौषधिपत्र-फलमूलपतङ्गकाः ।
केचित् कदम्बजम्बीर-शालतालतमालकाः ॥ १४ ॥

केचिन्महेन्द्रमलयसह्यमन्दरविन्ध्यकाः ।
केचित् क्रूरदधिक्षीर-घृतेक्षुजलराशयः ॥ १५ ॥
केचिद्विशालाः ककुभः केचिन्नद्यो महारयाः ।
भुक्त्वा जन्मसहस्राणि भूयः संसारसङ्कटे ॥ १६ ॥

पतन्ति केचिदबुधाः सम्प्राप्यापि विवेकितामित्यादि ।

कान्ते ! । किमुक्तम् । पुरा त्वेक एव पूर्णरूपः श्रीपरमशिवः । स स्वोल्लासशक्त्या प्रागुक्ताव्यक्तविकारलक्षणानेकशरीरात्मसंसाररूपो भूत्वा तत्तच्छरीरविलक्षणोऽपि स्वात्मविवेकरहितः सन् जन्ममरणाद्यनेकदुःखसमूहं निवहति । शरीरेभ्यो विलक्षणः कथमितिचेदित्थं शृणु ।

इदं शरीरं नादृश्यं जडमनित्यममङ्गलं तदात्मा न भवति । कथमीदृक् । एतच्छरीरोत्पत्तेः प्रागेतच्छरीरन्नास्ति । वर्त्तमानमपीदं दृश्यं शरीरमसत् । अत एतच्छरीरन्नात्मा । आत्मा तु एतच्छरीराद्भिन्नः, ममेदं शरीरमिति प्रतीतेः । अत आत्मसकाशाद्भिन्नमिदं शरीरमात्मनो दृश्यमात्मा तु द्रष्टा । यथा, दाह्यप्रकाश्यकाष्ठाद्यतिरिक्तो दाहकः प्रकाशकश्चाग्निस्तथा दृश्याद्देहादात्मा पृथक् द्रष्टा । अन्यच्च । स्वप्नान्ते दिव्यशरीरभेदमास्थाय, तदुचितान् भोगान् भुञ्जान एव प्रतिबुद्धो मनुष्यशरीरमात्मानं पश्यन्नाहं देवो मनुष्य एवेति देवशरीरे बाध्यमानेऽप्यहमास्पदं न बाध्यमानम् । अतः शरीरात्पृथगेवात्मा । स्वप्नमरणादौ दर्शनात् । अपि च 'योऽहं कौमारे नानाक्रीडामनुभवं सोऽहं स्थविररूपेण मुनिवृत्तिमास्थितः' एव वदति तदा स्थविरकुमारशरीरद्वयं भिन्नं तस्य व्यवहारद्रष्टात्मा भिन्न एव । द्रष्टा दृश्यादन्यइति प्रसिद्धो न्यायो लोके दृश्यते, घटादिवत् । यथा । घटादयो रूपादिमन्तः, दृश्याः तद्वच्छरीर दृश्यम् ।

किञ्च जडत्वं प्रदर्शयामः ।

पञ्चीकृतपञ्चभूतान्यात्मैव जानाति । तानि तु स्वात्मानं न जानन्ति, परमपि न जानन्ति । अतोऽत्यन्तजडानि । तदंशोद्भवमिदं शरीरमत्यन्तजडमंशास्तु प्रागुक्ता एव ।

हंसी । स्वामिन् ! सुखदुःखे जानत् कथं शरीरं जडम् ।

हंसः । सुखदुःखे भूतानि न जानन्ति तर्हि तदंशभूतो देहः कथं जानीयात् । सुषुप्तौ चौरो गृहं प्रविश्य भूषणान्यपहृत्य यात इति देहः सन्नपि न जानाति । अतोऽत्यन्तजडो घटवत् ।

हंसी । ननु घटो जातस्तथैव तिष्ठति देहस्तु वर्द्धते । अतो घटवद्देहो जड इति कथं वक्तुं शक्यते ? ।

हंसः । वर्द्धमानोऽपि देहः किं चैतन्यं ? वृद्धित्वमपि चैतन्ये नास्त्येव । यथा तृणं गोमयश्च यत्र निक्षिप्यते स राशिः किं चैतन्यम् ? किंवा, घटीयन्त्रकूपे उद्गीर्यमाणा मृद्विवर्द्धमाना तीरे किं चैतन्यम् ? कुड्यादिमात्रा मुहुर्मुहुर्निक्षिप्यमाणा मृद्वर्द्धमाना वेदिका किं चैतन्यं भवति ? तद्वत् प्रतिदिनमन्नरूपेण पूर्य्यमाणो देहरूपो मृत्सञ्चयः सम्यग् वर्द्धमानोऽप्यत्यन्तजड एव । अतो देहो जडः आत्मा तु चेतनः ।

अनित्यत्वं दर्शयामः । आकाशमवकाशं भवितुमिच्छति, पवनो धावितुमेव यतते । अग्निर्ज्वलितुमेव ईहते । उदकं द्रवितुं जिगमिषति । पृथिवी विस्तीर्णा भवितुमिच्छति; एवं सर्वाणिभूतानि स्वस्वमार्गमभिगन्तुमिच्छन्ति । अतः शरीरस्याऽनित्यता निश्चिता । आत्मा तु नित्यः ।

अमङ्गलत्वं दर्शयामः । जन्मकाले परामृश्यमानो देहो मलादत्यन्ताशुद्ध एव । रक्तरेतः संयोगो मलभाजने निष्पन्नो देहो मलमयः । दशदोषदुष्टो देहोऽमङ्गलः । दोषास्तु । अशुद्धम- शौच्यं दुर्गन्धिस्थितं स्थूलं खण्डं दग्धं शिथिलं नानारोगग्रस्तमध्रुवमामिषञ्चेति । एतद्दोषदुष्टं शरीरममङ्गलमेव । आत्मा तु निर्मलः । किञ्च । आत्मज्ञे ! यथोक्तदृश्यजडानित्यामङ्गलरूपदेहात् द्रष्टृचेतननित्यमङ्गलरूपः स्वात्मा यदा तद्विलक्षणो ज्ञातः तदाऽनित्यजातिवर्णाश्रमाश्चात्मनि न भवन्ति ।

षड् भावविकारा अपि बाल्ययौवनवार्द्धकाद्यपि देहधर्मा एव, नात्मनि ।

॥ वासिष्ठेऽपि ॥

वर्णधर्माश्रमाचार-शास्त्रायन्त्रणयोज्झित । निर्गतोऽसि जगज्जालात्पञ्जरादिव केसरी ।

इति रामचन्द्रं प्रति वसिष्ठः ।

अन्यत्र च ।

वर्णाश्रमाभिमानेन श्रुतेर्दासो भवेन्नरः ।
वर्णाश्रमविहीनस्तु वर्त्तते श्रुतिमूर्द्धनि ॥ १ ॥

यावद्देहात्मविज्ञानं बाध्यते न प्रमाणतः । प्रामाण्य कर्मशास्त्राणां तावदेवोपपद्यते ।

इत्यादि ।

किमुक्तम् । यथोक्तदृष्ट्याऽस्मात् स्थूलशरीरात् भिन्न एवात्मा भवति तर्हि वर्णाश्रमकुल- गोत्रजातिस्त्रीपुरुषनपुंसकस्थूलह्रस्वदीर्घश्यामगौरादिनामरूपषड्भावविकारधर्माधर्मादिकमा- त्मनि नास्त्येव । ते तु सर्वे देहधर्माः । इत्थं स्थूलशरीरादात्मनो वैलक्षण्यञ्च ज्ञापयित्वा दशे- न्द्रियेभ्योप्यात्मनो वैलक्षण्यं दर्श्यते ।

इन्द्रियाण्यपि पञ्चभूतजातानि । प्राग् दर्शितानि भूतानि जडानि । तदंशसंयोगेन्द्रियाण्यपि जडान्येव । स्वविषयं जानन्त्यपि जडान्येव कथमिति चेत् श्रोत्रमात्मानं न जानाति, परमपि न जानाति, स्वविषयं शब्दं ज्ञातुं नेष्टे, अन्यविषयमपिज्ञातुं न समर्थं, उभयथापि जडम् । किन्तु, शब्दज्ञानकरणं, साधनमित्यर्थप्रदीपवत् । यथा दीपो रूपादिज्ञानसाधनं, दीपेन रूपादि गृह्यते तद्वत् श्रोत्रादिभिः शब्दादय इति । एवमितराण्यपि करणानि । कर्मेन्द्रियाणि च क्रियासाधना- न्येव दर्वीवत्, इत्थं सर्वेन्द्रियाणि सर्वथा जडान्येव । आत्मा तु ज्ञानरूपः ।

हंसी । भोःस्वामिन् ! प्राणे सति देहश्चेष्टते । इन्द्रियाण्यपि चेष्टन्ते, प्राणे गते देहश्चेष्टा- हीनो भवति । इन्द्रियाण्यपि तादृशानि भवन्ति । अतःप्राण एवात्मा ।

हंसः । मैवं, कुतः ? चैतन्याभावात्, सुषुप्तौ स्वप्ने वा उच्छ्वासनिःश्वासरूपेण प्रवर्त्तमानोऽन्त- र्वहिश्चरन्नपि, चौरो गृहं प्रविश्यापहृत्य भूषणानि गच्छति स इति न जानाति, अतोऽत्यन्तजडा एव प्राणादयो देहवदेव । अपि च । एकस्मिन् पर्यङ्कशयने स्वस्त्रिया स्वपुरुषे स्थिते सति, कस्मिंश्चिज्जारे आगत्य स्त्रिया सह विहृत्य भूषणानि च परिगृह्य गच्छति सति, "इत्थन्नकर्तव्यम्" इति यतो न निवारयति अतोऽत्यन्तजड एव । प्रबुद्धो जानातीति चेन्न । सर्वावस्थासु उच्छ्वास- निःश्वासरूपेणास्योपरतिर्नास्त्येव, स्थित्वाप्यसौ न जानाति । कथम् ? इत्थम् । इदानीं कस्मिन् भागेत्वं श्वास वर्त्तसे, इति पृष्टोप्यस्मिन् भागेऽहं वर्त्ते इति प्रतिवक्तुं न जानाति । अतः स्थित्वा- ऽपि न जानातीत्यस्यार्थः ।

ननु जडश्चेत् प्राणःकथं जडं शरीरं चेष्टयतीत्यत्रोच्यते। जडोऽपि जडं चेष्टयन् लोके दृश्यते, क्व, प्रचण्डमारुतः गृहाच्छादनपर्णशाखा वक्षमन्यत्र पातयति जडस्याप्ययमेव स्वभावः। नैतावताऽऽत्मा भवति। प्राणस्य स्वचेष्टा न स्वतंत्रा, कर्माधीनैव। कथम्? इत्थम्, जाग्रत्स्थिति-निमित्तकर्मोद्भूतं भवति तदुपलक्ष्य सर्वाणि करणानि गृहीत्वा, बुद्ध्युपाधिसम्पर्कजनितविज्ञानेन सह स्वप्नं सुषुप्तं वा गच्छेत्, एवं स्थानत्रयमनुचरन् गच्छति। कर्मनिमित्तं चेदं गमनागमनम्। प्राणोऽपि तत्कर्मवशादेव शरीरं परिपालयन् वर्तते। अन्यस्यापि व्यानादेर्व्यापारचेष्टां कर्तुं न समर्थः। अतो जडा एव प्राणादयः। अत एव प्राणो नात्मा। स तु चेतनः।

किञ्च, मन आत्मेति चेन्न, यद्यपि, मनसि स्वस्थे पश्यति शृणोति च। मनसि व्यग्रे न पश्यति च न शृणोति। अहं संकल्पवान् विकल्पवानित्यनुभवाच्च मन एवात्मेति शङ्क्यते। तथापि न तदात्मा, कुतः, जाड्यात्, तदानी मे मनोऽन्यत्र, इदानी स्थिरीभूतमित्युभयवृत्ति यो वेत्ति स मनो न भवति।

अपि च। तन्मनः सा बुद्धिरित्युच्यमाने प्रतिक्षणं विलक्षणे युगपद्भावनीये तयोरेकस्य नाशोऽन्योत्पत्तिः। मनःउत्पत्तिमत् विनाशवच्च, सुषुप्तेऽभानादिति सर्वेषामप्यनुभवः। **श्रुति**-रपि। 'आत्मनो मनो जातं, तत्रैव विलीयत इति'। अतो जडमेव मनः आत्मा न भवति। इत्थम्, इन्द्रियसमूहात्मकं सप्तदशावयवं लिङ्गशरीरम् आत्मा न भवति।

किमुक्तं? सूक्ष्मशरीरादप्यात्मा विलक्षणः भिन्न एवेति सिद्धम्। प्रिये! यदा लिङ्गदेहाद-प्यात्मा भिन्नः, तर्हि गमनागमने स्वर्गनरकादिभोगोऽप्यात्मनि नास्त्येव, यथा, जानुनि भग्ने पङ्गो-रिव; तथा लिङ्गशरीरनाशे गमनागमने आत्मनो न स्तः। अपि च प्रारब्धफलभोगोऽपि नास्त्ये-वात्मनः। कथम्, ? इत्थ, स्थूलदेहो भोगायतनं, विषयाणि भोग्यानि, इन्द्रियाणि भोगसाध-नानि, मनो बुद्धिर्वा भोक्ता, एवं भोक्ता भोग्यानि भोगसाधनानि भोगायतनं, एतच्चतुष्टयाद्भिन्न एवात्मा, तस्मादारम्भकर्मफलभोगश्चात्मनो नास्त्येव।

ननु, जाग्रत्स्वप्नसुखदुःखमात्मानुभवति, कथमात्मन सुखदुःखं न। अरे, शरीरगतचक्षुः शूलोदरवेदनादयः, सुषुप्तावस्थामापन्नस्य बुद्धिरहितस्यात्मनो न प्रतीयन्ते। अतस्ते न भव-न्त्यात्मनो धर्माः। क्षेत्रस्यैव। त्वं त्वात्मनि वृथा मन्यसे मूढो यथा जलस्थं चन्द्रं मन्यते तद्वत्।

**श्रुतिश्च**। 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः। सशरीर वा व सन्तं न प्रियाप्रिय-योरपहतिरस्तीति'। 'कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येत् सर्व मन एवेति'।

### । भगवद्वचनञ्च ।

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम्॥ १॥
रागेच्छासुखदुःखादि सत्यां बुद्धौ प्रवर्तते।
सुषुप्तौ नास्ति तन्नाशे तस्माद्बुद्धेस्तु नात्मनः॥ २॥

अन्तःकरणधर्ममित्यर्थः। आत्मा तु नवगुणरहितः। **गुणा**स्तु। बुद्धिरागप्रयत्नद्वेष-संस्कारधर्माऽधर्मसुखदुःखलक्षणाः।

हंसी । अन्तःकरणेषु बाह्यकरणेष्वप्यनुसन्धाता देहो नात्मा, इन्द्रियाण्यपि नात्मा, प्राणोप्यात्मा न, मनो बुद्धिरप्यात्मा न भवति । एतत्सर्वस्यानुसन्धातात्माऽऽत्मानं न जानातीति भ्रमश्चेत् । अत क आत्मेति नि सन्देहं भ्रान्तिनिरासं कुरु ममेति ।

श्रीहंसः । किं न जानासि? आत्मनः कारणशरीरमव्याकृतमज्ञानसंज्ञकमस्ति । इदं दृश्यं सर्वं पृथक्पृथग्रूपमात्मा जानाति, आत्मानमेव न जानामीति वदति, एतदेवात्माऽज्ञानमिदमेव **कारणशरीरम्**। अस्याश्रय एवात्मा। कथम्? आत्मनोऽन्यःकोऽपि न जानाति. मामहं न जानामीति वदति, अतोऽस्याज्ञानस्यात्मैवाश्रय । अज्ञानं भ्रमं चात्मा सम्यक् वेत्ति । वेद्यं जड, आत्मातु वेत्ता चेतन इत्यर्थ । अज्ञानाश्रयज्ञानमे**वात्मा** । आत्मनि स्थितमज्ञानं यतो न जानाति अतस्तस्य पृथक् साक्षी, आत्मनो दृश्यमानमात्मा न, स्थूलसूक्ष्मशरीरवत् । अतःकारणशरीराद्विलक्षणो भिन्न एवात्मा । सर्वाश्रयविलक्षणज्ञानमात्रसाक्ष्यनवच्छिन्नाखण्डदण्डायमान ज्ञानमात्रस्वरूपः । इत्थ कारणशरीरादात्मनो वैलक्षण्यं, तद्वदेव महाकारणशरीरादप्यात्मा भिन्न एव ज्ञानमात्रत्वात् ज्ञेयात् ज्ञानं नापेक्ष्यम् ।

**श्रुतिश्च** । 'यो वेत्ति वेद्यं न च तस्य वेत्ता ।

तमाहुरग्र्यं पुरुषं पुराणम्' ।

'यस्य भासा सर्वमिद विभातीति' ।

किञ्च । जाग्रदाद्यवस्थाभ्यश्चात्मा भिन्न साक्षित्वेन वर्त्तते, मनोधर्ममेवावस्थाचतुष्टयम् । किञ्च । विश्वादीनि नामान्यवस्थाकल्पितानि । एतत्सर्वमज्ञानकृतमात्मनि स्फुरति, अतस्तद्धर्मं सर्वम् । तस्मादज्ञानोद्भवौ बन्धमोक्षावप्यात्मनो न स्त ।

उक्तञ्च ।

अनात्मन्यात्मधीर्बन्धस्तन्नाशो मोक्ष उच्यते । बन्धमोक्षौ न विद्येते नित्यमुक्तस्य चात्मन इति ।

प्रिये! किमुक्तम्? आत्मविवेको दुर्लभः, कुत , यत , अतिप्राकृतास्तु, **आत्मा वै पुत्र इति श्रुतेः** स्वस्मिन्निव स्वपुत्रेऽपि प्रियदर्शनात् पुत्रे नष्टे पुष्टे चाहमेव नष्ट पुष्टश्चेत्यनुभवाच्च पुत्र आत्मेति वदन्ति १, कश्चित्तु, 'स वा एष पुरुषोऽन्नरसमय'इति **श्रुतेः** प्रदीप्तगृहात् स्वपुत्रं परित्यज्यापि स्वस्य निर्गमनदर्शनात्, स्थूलोऽहं कृशोऽहमित्याद्यनुभवाच्च, स्थूलशरीरमात्मेति वदति २, अपरश्च–'इह प्राणाः प्रजापतिमेत्य ब्रूयुरि'ति**श्रुतेः** इन्द्रियाणामभावे शरीरचलनाभावात् काणोऽहं बधिरोऽहमित्याद्यनुभवाच्च इन्द्रियाण्यात्मेति वदति ३, अन्यस्तु- 'अन्योऽन्तरात्मा प्राणमय'इति **श्रुतेः** प्राणाभावे इन्द्रियादिचलनाभावात्, अहमशनायावान् अहं पिपासावानित्याद्यनुभवाच्च प्राण आत्मेति वदति ४, इतरश्च, 'अन्योऽन्तरात्मा मनोमय'- इति **श्रुतेः** मनसि सुप्ते प्राणापानादेरभावात्, अहं सङ्कल्पवानहं विकल्पवानित्यनुभवाच्च, मन आत्मेति वदति ५, अपरस्तु–'अन्योऽन्तरात्मा विज्ञानमय'इति **श्रुतेः** कर्त्रभावे करणशक्त्यभावात्, अहं कर्त्ताऽह भोक्ता इत्याद्यनुभवाच्च, बुद्धिरात्मेति वदति ६, कश्चिच्च, 'अन्योऽन्तरात्माऽज्ञानमय'इति श्रुते । बुद्ध्यादीनामज्ञाने लयदर्शनात्, अहमज्ञोऽहं ज्ञानीत्याद्यनुभवाच्च, अज्ञानमात्मेति वदति ७, अन्यस्तु, 'प्रज्ञानघन एवानन्दमय'इति **श्रुतेः**, सुषुप्तौ प्रकाशाप्रकाशसद्भावात्, अज्ञोऽहं मां न जानामीत्यनुभवाच्च अज्ञानोपहितं चैतन्यमात्मेति वदति ८,

अन्योऽपि–'असदेवेदमग्रआसीदिति'श्रुतेः सुषुप्तौ स सर्वाभाव, अहं सुषुप्तौ नासमित्युत्थितस्य स्वाभावपरामर्शविषयानुभवाच्च, शून्यमात्मेति वदति ॥ ९ ॥

प्रिये ! एतैरप्यतिप्राकृतादिवादिभिरुक्तेषु श्रुतियुक्त्यनुभवाभासेषु पूर्व-पूर्वोक्तश्रुतियुक्त्यनुभवाभासानामुत्तरोत्तरोक्तश्रुतियुक्त्यनुभवाभासैर्बाधदर्शनात् पुत्रादीनामनात्मत्वं स्पष्टमेव । किञ्च–प्रत्यगस्थूलोऽचक्षुरप्राणोऽमना अकर्त्ता चैतन्यं चिन्मात्रं सदित्यादिप्रबलश्रुतिविरोधात् अस्य पुत्रादि–शून्यपर्यन्तस्य जडस्य चैतन्यभास्यत्वेन घटादिवदनित्यत्वात् 'अहं ब्रह्माऽस्मी'ति विद्वदनुभवप्राबल्याच्च पुत्रादिशून्यपर्यन्तमखिलमनात्मैव । अतस्तत्तद्भासक नित्यशुद्धबुद्धमुक्तसत्यस्वभावं प्रत्यक् चैतन्यमेवात्मतत्त्वविद्वदति । अतो वादबाहुल्याद्दौर्लभ्यमात्मनः ।

## इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे आत्मविवेकदर्शनं नाम सप्तदशोल्लासः ॥ १७ ॥

### । इति ज्ञानयोगः ।

अथ हंसी-(सहर्षम्) । भोःपरमहंस ! मत्प्राणः प्रोक्तोपदेशविशेषविधिश्रवणाय स्फुरत्यतो दीक्षाविशेषकथया देहगेहादि तु खजालमिदानीं दीनदयालो ! दवयेत्युदीर्य प्रणमति स्म ।

श्रीहंस –शृणु ललने ! जगज्जङ्गलं गतः कश्चिज्जीवो जन्मान्तरीयसंस्कारबलान्मुमुक्षुश्चेज्जातुचिज्जातः तदा तु तेन तर्हि सम्यक् परीक्षितसद्गुरोराश्रयः कार्यः । **श्रुतिश्च** । 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं' गुरुमुपतिष्ठेदिति ।

हंसी–भोभोः स्वामिन् ! शिष्यो यथा श्रीगुरुणा प्राणद्रव्यप्रदानाद्यैरित्याद्युक्तपरीक्षालक्षणैः परीक्ष्यते किमेवं श्रीगुरुरपि शिष्येण पूर्वं परीक्षणीय ?; श्रीहंस.-सत्यं, यथा तन्मर्मसूचकैर्वाक्यैरित्याद्यनेकच्छद्मकर्मभिः शिष्य पुरा श्रीगुरु परीक्षते न तथा तु श्रीगुरुस्तेनपरीक्षितव्य किन्तु श्रीगुरोर्निकटं शिष्येण न्युष्य, यावत्स्वयं श्रीगुरुणा शिष्यः परीक्ष्येत, तावत्पूर्वदर्शिते 'श्रीगुरुः परमेशानि शुद्धवेशो मनोहर ' इत्यादिलक्षणैरशेषैरेव श्रीगुरो परीक्षा कार्या । किञ्च प्राग्दर्शितसकलसल्लक्षणैरन्वितश्चेत्स्यात् स गुरु श्रेयान् , ईषन्न्यूनै साधारण , अल्पलक्षणाङ्कितः कनीयान् । यदा दैवादादौ कनिष्ठाश्रयो जातस्ततस्तदासाधारण आश्रयितव्य पश्चात् श्रेष्ठाश्रयेण सम्पूर्णात्मरूपमासाद्य कृतकृत्य स्यात् । एवमाचरितेऽपि कनिष्ठसाधारणयोरवधीरणा तु न कदाचन कर्त्तव्या 'मन्तव्यास्ते यथा गुरु' रित्याद्युक्तेः ।

प्रिये ! परस्परमपरीक्षणात् प्रत्यवायोप्यागमे प्रदर्शितः ।

यथा

गुरुशिष्यावुभौ तौ द्वावपरीक्ष्य परस्परम् ।
उपदेशं ददन् गृह्णन् प्राप्नुयातां पिशाचताम् ॥ १ ॥

इत्यादि ।

हंसी-भो,वल्लभ ! कपटकोटिकुलोल्लासिन्यस्मिन् कलौ तु सकलललितलक्षणलक्षिताः श्रीगुरव शिष्या अपि विरलतरा एव सन्तः खलु यत्र तत्र बहव श्रूयन्ते परन्तु सर्वे स्वप्रयोजनलोलुपा वाङ्नैपुण्येन मन्त्रयन्त्रौषधिसिद्ध्यादिना च वेषवैचित्र्येण चाप्यपारयुक्त्या

पारमार्थिकसुखं निरूपयन्तो दिवा धूर्ता इव जनतान्तरं वञ्चयित्वा बहुशो बालिशानुपदिशन्तीत्यावयोर्दृष्टिपथमुपगता कनिचन दृष्टाः श्रुताश्च। किञ्च तादृग्गुरूपदिष्टाः शिष्या अपि गुरुमुपदेष्टुमनस्का, यदहं जाने न तद्गुरुरित्यालपन्तो यत्र तत्र किमेतेन गृध्नुना गुरुणेति च; स्वैरिणश्च तत्कलत्रवित्तादीनि स्पृहयन्तः पातकिन 'कानरा गुरव' इत्युपदिशन्ति। किमन्यत् कथनीयम्। एतादृशमहिम्न्यस्मिन् कलियुगे तु सच्छास्त्रदर्शिता सन्तस्तस्मिन्नेव न तु लोके, शिष्या अपि शास्त्र एव यथोदिता अतः किं कर्तव्यम्। कलिना कृत्स्नं जगत्तिरस्कृतम्। नात्र क्वचिन्मर्त्यलोके सद्गुरुस्तादृशः शिष्यश्च। अन्धगोलाङ्गूल-न्यायवदितस्ततोऽन्धपरम्परैव प्रेक्ष्यते। स्वामिन्नेव वर्तमानेऽपि सञ्चितवशात् क्वचित् कश्चित्सल्लक्षणसम्पन्नः शिष्यश्चेत् सम्भूतस्तस्य तु तादृग्लक्षणो गुरुरसुलभः। बुद्धिरपि द्विक्षणावस्थायिनी, तडिच्चपलमायु., न खलु सद्गतिरन्तरेण गुरुमिति श्रुतत्वात्। शिष्यस्य सद्गुरोराकाङ्क्षा, गुरोस्तु सा नास्त्येव कृतकृत्यत्वात्। अत का गतिस्तस्य किं कर्तव्यं तेनेत्युद्यतां तत्प्रकारः कारुणिकैरुपकाराय तथ्यमेवेत्युक्त्वा सा विरराम!

अथेत्थं प्रियाया वल्गुवचनचातुर्यमभ्युपेत्य, पतिरिदमाह।

श्रीहंसः। भो प्रेयसि! किमिति ग्लायसे, ससम्भ्रमं गृह्यतामेतदस्मद्वच पीयूषं श्रवणपुटकाभ्याम्। प्रियतमे! प्रकृतिपुरुषप्रपञ्चितेऽस्मिन्संसारे नामरूपात्मकं कलेवरं कञ्चिदधिष्ठाय परमशिवपारम्पर्यपालनाय क्वचित् प्रादुर्भूय प्रतिश्रुतवर्णाश्रमधर्मोऽनधिकारिभिरनुपलभ्यस्वभावः स्वरहस्यं सच्छिष्याय विश्राण्य कृतार्थं स्पर्शमात्रेण करोत्येवात्र न संशयः-कश्चित्। उक्तमेतत् प्रथममेव।

मनुष्यचर्मणा बद्ध साक्षात् परतर शिवः।
सच्छिष्यानुग्रहार्थाय गुरुरूप्यटति क्षितौ॥ १॥
सद्भक्तरक्षणायैव निराकारोऽपि साकृति।
शिवः कृपानिधिर्लोके संसारीव हि चेष्टते॥ २॥
नरवद् दृश्यते लोके श्रीगुरु पापकर्मिणाम्।
शिववद् दृश्यते साक्षान्नराणां पुण्यकर्मिणाम्॥ ३॥

इत्यादि।

किञ्च।

इहैव हि मानुषजातौ क्वचिदुत्पद्य विषयीव कुटुम्बव्यापृतोऽपि स्फटिकरङ्गवज्जलजदलवन्मेघमण्डलदिवामणिवदादर्शप्रतिबिम्बवदत्यर्थं निर्लिप्तः सहसैव श्रीगुरुरूपी साकारः शिवः स्वरूपे विलसति। तादृशलक्षण सद्गुरु सपद्येव स्पर्शेक्षणध्यानैः सच्छिष्यान् पारम्पर्य पालनायानुगृह्णात्येव।

उक्तञ्चागमे।

गुरुः शिष्याधिकारार्थं विरक्तोऽपि शिवाज्ञया।
कियत् कालं विधायैतत् सच्छिष्याय समर्पयेत्॥ १॥
तस्यार्पिताधिकारस्य योगी साक्षात् कृत शिव।
तदन्ते शाश्वती मुक्ति-रिति शङ्करभाषितम्॥ २॥
तस्मात् सर्वप्रयत्नेन साक्षात् परशिवोदितम्।
सम्प्रदायमविच्छिन्नं सदा कुर्याद्गुरु प्रिये!॥ ३॥

सस्कृतै प्राकृतैश्चैव गद्यपद्याक्षरैस्तथा। देशभाषादिभि शिष्यं बोधयेत् कृपया-गुरुः ।

गुरुणाऽपि कृतकृत्याः कृताः श्रुताः ।

आत्मैव ह्यात्मनो गुरु उपदेशो निरर्थकः ।

सुप्तोत्थितप्रत्ययवदुपदेशादिकं विना ।

इत्यागमेऽप्युक्तत्वात् किमावश्यकं गुरोः, शास्त्रज्ञेन सच्छिष्येण स्वयमेव स्वात्मरूप-मनुभूय मुक्ततया भवितव्यम् ।

श्रीहंसः। मा,मा,मनीषिणि !। न हि गुरुमन्तरा शास्त्रीयज्ञानेन सच्छिष्यः स्वयमेव स्वात्मानमध्यक्षीकृत्य शिव. स्यादिति युक्तं वक्तुम् । कुतः। पारम्पर्य्यभङ्गापत्तेः ।

आगमेऽपि

विना दीक्षां न मोक्षः स्यात्प्राणिना शिवशासनम् ।
सा च न स्याद्विनाचार्य-मित्याचार्यपरम्परेति ॥ १ ॥

किञ्च, श्रीमहेश्वरेण पार्वत्युपदिष्टा, राधा च कृष्णेन, श्रीनरनारायणमूर्त्या नारदश्चोपदिष्टः, वसिष्ठेन च दाशरथिः, श्रीकपिलमुनिना निजजनयित्री देवहूतिः प्रबोधिता, एवमन्यदपि श्रुतिस्मृतिपुराणोपपुराणादिषु गुरुशिष्याणां पारम्पर्यमावश्यकमालोकितम् ।

पारम्पर्यार्थश्च ।

पाशच्छेदकराद्देवि ! रञ्जनात्परतेजसः ।
यन्निमिश्चिन्त्यमानाच्च पारम्पर्यमिति स्मृतम् ॥ १ ॥

इत्यागमे ।

किञ्च ।

यदुक्तम् ।

जन्मान्तरसहस्रेषु या बुद्धिर्भवति नृणाम् ।
तामेव लभते जन्तु-रुपदेशो निरर्थकः ॥ १ ॥
पूर्वजन्मकृताभ्यासात्तत्त्वज्ञानं प्रकाशते ।
सुप्तोत्थितप्रत्ययव-दुपदेशादिकं विना ॥ २ ॥

इत्यादि ।

अत्रोच्यते। जन्मान्तरेषु केनचिन्मुमुक्षुणा पारम्पर्यं प्रतिज्ञाय कर्मयोगोऽभ्यस्तः। ततो मध्यमाधिकारी भूत्वा भक्तियोगश्च साधितः। पुनरुत्तमाधिकारमासाद्य पारम्पर्येणैव ज्ञान-योगोऽप्यवाप्तः। तदनु किञ्चिन्न्यूनत्वमङ्गीकृत्यात्र क्वचिदाविर्भूय केनचित् कृतकृत्येन स्पृष्टो दृष्टो वा ध्यातस्तन्मात्रेणैवानुभूतात्मरूप स्वमहिम्न्युल्लसति, न त्वेवमेव। ब्रह्मविष्णुरुद्रा अपि पारम्पर्येणैव स्वस्वरूपे विलसन्ति, इतरेषां तु का कथा। अन्येऽपि सनत्कुमारनारदवसिष्ठव्यासादयोऽनेकशः श्रुतिस्मृतिपुराणेतिहासादिदर्शिनोऽपि पारम्पर्येणै-

वाध्यक्षीकृतात्मतत्त्वाः श्रूयन्ते अतो मन्दमतिभिर्मनुष्यैः किञ्चिच्छास्त्रं ज्ञातमपि पारम्पर्यमुलङ्घ्य स्वयमेव शास्त्रज्ञानेन मुक्ततया भवितव्यमिति तु कालत्रयेऽप्ययुक्तमेव। येऽत्र तु सद्गुर्वनुपदिष्टाश्चातिचरितपारम्पर्याचारा पाखण्डा शास्त्रीयज्ञानात्मतत्त्वेन मुक्तोऽहमित्यात्मनि मन्यन्ते ते तूभयतो भ्रष्टाः। न च तेषामिहामुत्र समञ्जस किञ्चित्। पतन्ति च तेषामुपरि सर्वेषां शापा।

अशिष्येष्वपि भक्तेषु यद् ज्ञानमुपदश्यते। तत् प्रयात्यपवित्रत्वं गोक्षीरं श्वदृताविव।

इत्यागमे।

अत एव **सद्गुरोरधीन उपदेशः, उपदेशाधीनो मोक्ष** इति **सच्छास्त्रराद्धान्तः**। यत्तु, त्वयोदीरितं, बुद्धिर्द्विक्षणावस्थायिनी, आयुरप्यनिश्चितं, सद्गुरुस्तु परमदुर्लभः, बहुलदोषालयः कलिरेष इत्यत्र तदुपायोऽप्यस्ति। शृणु। कृत्स्नसल्लक्षणसम्पन्न सन्मुमुक्षुश्चेत् कश्चित्कथञ्चिज्जात, तेन तादृशो गुरु प्रयत्नेन गवेषितोऽपि न प्राप्तस्तर्हि तेनेत्थमप्युपदेशो ग्राह्य। कथम्? । श्रीपरमशिवमूर्तिभेद एव श्रीदक्षिणामूर्तिर्नाम शिवोऽस्ति, स तु सर्वेषां ब्रह्माण्डोदरवर्तिनां प्राणिनां गुरुत्वेन वर्त्तते अतस्तमागमोक्तमार्गेण तन्मन्त्राभिमन्त्रिते सर्वोपचारैः पुरा समर्च्य, साष्टाङ्गं च नमस्कृत्य, शिरसा तदादेशमादाय, सच्छास्त्रदर्शितश्चोपदेशः सुखेन ग्राह्यः, न काचन पारम्पर्यभङ्गाशङ्का।

## श्रीपद्मपुराणेऽपि।

गुरौ सम्भाविता दोषा प्रायेण तु कलौ युगे।
इत्युक्त्वा।
गुरोरभावे विप्रेन्द्र! मन्त्रग्रहणमुच्यते ॥ १ ॥
सम्पूज्यदक्षिणामूर्त्तिमुपचारैः प्रयत्नत ।
पायसं विनिवेद्याथ प्रणमेद्दण्डवत्तत ॥ २ ॥
तालपत्रे विलिख्याणुं स्थापयेच्च तदग्रतः।
तालपत्रं समालोक्य पठेदष्टोत्तरं शतम् ॥ ३ ॥
एवं गृहीतो मन्त्रःस्याद्गुरोरपि विशेषत ।
कृष्णपक्षे चतुर्दश्यां दक्षिणामूर्त्तिसन्निधाविति ॥ ४ ॥

यत्तु

पुस्तके लिखितान्मन्त्रानालोक्य प्रजपन्ति ये।
ब्रह्महत्यासमं तेषां पातकं परिकीर्तितम् ॥ ५ ॥
यदृच्छया श्रुतं मन्त्रं छद्मनाऽपि छलेन वा।
पत्रे स्थितां वा गाथां वा तज्जपेद्यद्यनर्थकृत् ॥ ६ ॥

इति निषिद्धं तद्गुरुविषयम्।

अथहंसी। भो, भो, नाथ!। सम्यगेतच्छ्रीमतां वचः। गत एव मत्त खल्विदानी खेद, यद्भवादृशो महाभाग्येन भर्त्ता मया लब्ध। किञ्च यदुदित सद्गुरुः क्रियायासादिरहितेन स्पर्शाद्युपदेशेन सच्छिष्यं कृतार्थं करोतीति, तत् कथम्?

स्वामी-मनस्विनि, ! तदपीत्थं शृणु। कश्चन पाश्चात्यजन्मी प्रारब्धबलेन सल्लक्षण-सम्पन्नो महामुमुक्षुः सद्गुरुणा चैकस्मिन्नवसरेऽसौ मुक्त इति मनसा स्मृतश्चेत्, स तर्हि तन्मात्रेणैव कृतार्थ स्यात्; न पुनः कर्मदीक्षापेक्षा। एवमेव कस्यांचिद्वेलायां सद्गुरुणा दयार्द्रदृष्ट्या निरीक्षितोऽपि विपाशः स्यात्। तद्वदेव पूर्णरसिकेन सदाचार्येणानुकम्पया स्वकीयकरकिसलयेन कदाचित्स्पृष्टश्चेत्तदानीमेव कृतकृत्यतया वर्त्तेत। श्रीपरमेश्वरसरस्वती न जातुचिन्मृषेत्यूह्यम्।

उक्तमेतदागमरहस्ये सदृष्टान्तम्।

यथा,

यथा कूर्मः स्वतनयान् ध्यानमात्रेण पोषयेत्। देवि दीक्षोपदेशस्तु मानसः स्यात्तथाविधः।

स्वपक्षाणि यथा मत्स्यो वीक्षणेनैव पोषयेत्।
दृग्दीक्षाख्योपदेशस्तु तादृशः कथितः प्रिये! ॥ २ ॥
यथा पक्षी स्वपक्षाभ्यां शिशुं सम्वर्द्धयेच्छनैः।
स्पर्शदीक्षोपदेशः स कथितः कुलनायिके! ॥ ३ ॥

इति।

प्रिया-प्रोक्तप्रभावाः सन्तु खलु, भो प्राणजीवन! नात्र पुनः सन्देहः। किन्तु कलेः प्राबल्यादिह केचन सज्जनाभिमानिनः सद्भिः साकं मिथ्याभियोगेन विद्विषन्तः सद्दर्शनं न्यक्कृत्य कुतर्कैः स्वकपोलकल्पितं किञ्चित्तत्त्वज्ञानमुपदिशन्ति तादृशाः शिष्या अपि तत्तद्युक्ति-चातुर्येण विचेतीभूताः सन्तस्तत्तत्त्वज्ञानाभासानुपाददते। श्रीपरमशिवः क्वास्ति, केन स प्रेक्षितः।

परोक्षे कोऽनुजानीते कस्य किन्नु भविष्यति।
यद्वा, प्रत्यक्षफलदं तदेवोत्तमदर्शनम्।

इत्यागमेऽपि।

आम्नायादिषु यद्यद्दर्शितं तत्तदखिलं तेष्वेव तथ्यं न त्वत्र किमपि प्रत्यक्षम्।

किञ्च।

नाश्रमः कारणं मुक्तेः दर्शनानि न कारणम्। मुक्तिदा गुरुवागेका विद्याः सर्वा विडम्बकाः।

इत्युक्ते श्रीगुरुणा यदुच्येत तदृतमेव, नानृतमिति मन्तव्यं, प्रत्यवायत्वात्। 'भाव एव हि कारणमित्युक्ते। न चात्रैकमेव दैवतम्, एक एव मन्त्रः, एकमेव कर्म, एक एव मार्गः, एकैव विद्या, किन्तु, केचन शैवाः, एकेतु शाक्ताः, वैष्णवा अप्यपरे, ब्रह्मानुभविनश्चान्ये, बौद्धाश्च, इतरे तु पञ्चायतनपूजकाः। एवं प्रायो वतात्र शतशः सहस्रशः श्रुतिस्मृतिपुराणेतिहासादिषु श्रूयन्ते च दृश्यन्ते।

कैश्चित् कल्पिताः पन्थानः, सर्वत्र च विरोधः। न हि क्वचित् कश्चन सज्जनः। अखिलमफलमेव। अतोऽस्माभिर्निर्वर्णितं यत्तत्त्वज्ञानं, तदेव सम्यगिति जल्पकाः सज्जनानभ्याख्यानेन धिक्कुर्वन्तो बालिशानुपदिशन्ति तेषां का गतिः? सद्भावत्वात्तेषामपि मोक्षः किमु वक्तव्यः?।

श्रीहंसः–नहि नहि निपुणे! नास्तिकास्तु त एव येषामेतादृग्लक्षणाः कुतर्काः कुत्सितं तत्त्वज्ञानं यत् स्वतर्ककल्पितम्। आस्तिके! सज्जनानां श्रीपरमशिवः खलु प्रत्यक्षमेव

उज्ज्वलत्वात्परत्वाच्च देवताभावदानतः ।
शक्तिपातनिपातित्वा-दुपदेश इतीरितः ॥ ३ ॥

हंसी-शक्तिपात इति किम् ?

हंसः-आगमे

शक्तिपातानुसारेण शिष्योऽनुग्रहमर्हति ।
यत्र शक्तिर्न पतति तत्र सिद्धिर्न जायते ॥ १ ॥

आदिमध्यावसानेषु योग्याः शक्तिनिपातत । इति ।

किमुक्तं ? केषांचित्कर्मयोगाभ्यासे सामर्थ्य, केषान्तु भक्तियोगे, मुख्यानान्तु ज्ञानयोगे इति यत्र यत्र येषां सामर्थ्यं तत्र तत्र ते ते योग्या इति प्रकटार्थः ।

अथ हंसी-सम्यक् स्वामिन् ! । दीक्षामाहात्म्यमीषदुच्यताम् ।

श्रीहंसः-श्रीशिवागमे

यथैवोन्मीलितात्मानो भवन्ति पशवः शिवा ।
सा दीक्षेत्युदिता देवि ! पशुपाशविमोचनी ॥ १ ॥
उपासनाशतेनापि यां विना नैव सिध्यति ।
तां दीक्षामाश्रयेद्यत्नाच्छ्रीगुरोर्मन्त्रसिद्धये ॥ २ ॥
रसेन्द्रेण यथा सिद्धमय सौवर्णतां व्रजेत् ।
दीक्षाविद्धस्तथा स्वात्मा, शिवत्वं लभते प्रिये ! ॥ ३ ॥
दीक्षाग्निदग्धकर्माऽसौ छिन्नमायानिबन्धनः ।
गतः परं ज्ञानकाष्ठां निर्बीजः सन् शिवो भवेत् ॥ ४ ॥
अस्मात् प्रविततादृन्धात् परसंस्थानरोधकात् ।
दीक्षा विमोक्षयेदूर्ध्वं दिव्यन्धाम नयत्यपि ॥ ५ ॥
उपपातकलक्षाणि महापातककोटयः ।
क्षणाद्दहति देवेशि ! दीक्षा हि विधिना कृता ॥ ६ ॥
यया दीक्षितमात्रेण जायन्ते प्रत्ययाः प्रिये ! ।
सा दीक्षा फलदा ज्ञेया शेषास्तु जलसेचकाः ॥ ७ ॥
शरीरस्य न संस्कारो न जातेर्न च कर्मणः ।
आत्मनः कारयेद्दीक्षा-मनादिमलगुम्फिनः ॥ ८ ॥
गतं शूद्रस्य शूद्रत्वं विप्रस्यापि च विप्रता ।
दीक्षासंस्कारसंपन्ने जातिभेदो न विद्यते ॥ ९ ॥
शिवलिङ्गे शिलाबुद्धिं कुर्वन्यत् पापमाप्नुयात् ।
दीक्षितस्यापि पूर्वत्वं श्रुत्वा तत्पापमश्नुते ॥ १० ॥
दार्वश्मलोहमत्तूल-जातिलिङ्गं प्रतिष्ठितम् ।
यथोच्यते तथा शुद्धाः सर्वे वर्णा हि दीक्षिताः ॥ ११ ॥

येन पूजितमात्रेण ह्याब्रह्मभुवनान्तिकम् ।
पूँजितं स्याद्धि सकलं दीक्षितेन न संशयः ॥ १२ ॥
देवि ! दीक्षोपदेशेन चाण्डालोऽपि विमुच्यते ।
किमुत ब्राह्मणादीनां दीक्षा मोक्षप्रदायिनी ॥ १३ ॥
दीक्षितस्य न कार्यं स्यात्तपोभिर्नियमैर्व्रतैः ।
न तीर्थक्षेत्रगमनै-र्न च शारीरयन्त्रजैः ॥ १४ ॥
विना दीक्षां महेशानि ! जपपूजादिकाः क्रियाः ।
न फलन्ति प्रिये ! तेषां शिलायामुप्तबीजवत् ॥ १५ ॥
देवि ! दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः ।
तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत् ॥ १६ ॥
दर्शनेषु च सर्वेषु गुरुणा ज्ञानशालिना ।
दीक्षितो यः सुविधिना स मुक्तो नापरः प्रिये ! ॥ १७ ॥
द्विजो वा दीक्षितः पश्चादन्त्यजः पूर्वदीक्षित. ।
गुरुवत्तेन पूज्यः स नावमान्यः कदाचन ॥ १८ ॥
स्याद्वेदाध्ययने शूद्रो नाधिकारी यथा प्रिये !
तथैवाऽदीक्षितश्चापि नाधिकारी कदाचन ॥ १९ ॥

किञ्च, कालोऽपि ।

एकाब्देन द्विजो योग्य क्षत्रियो वत्सरद्वयात् ।
वैश्यो योग्यस्त्रिभिर्वर्षै-श्चतुर्भिः शूद्र उच्यते ॥ १ ॥

इति ।

अधिकारश्च ।

शूद्रसङ्करजातीनां नाध्वशुद्धिर्विधीयते ।
पादोदकप्रदानाद्यैः कुर्यात्पाशविमोचनम् ॥ २ ॥
विधवाया, सुतादेशात् कन्यायाः पितुराज्ञया ।
नाधिकार स्वतो नार्या भार्याया भर्तुराज्ञया ॥ ३ ॥

निषेधोऽपि । **योगिनीतन्त्रे गणेशविमर्षिण्यादौ ।**

पितुर्मन्त्रं न गृह्णीयात्तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य वैरिपक्षाश्रितस्य च ॥ १ ॥
यतेर्दीक्षा पितुर्दीक्षा दीक्षा च वनवासिनः ।
विविक्ताश्रमिणो दीक्षा न सा कल्याणदायिका ॥ २ ॥
न पत्नी दीक्षयेद्भर्त्ता न पिता दीक्षयेत्सुताम् ।
न च पुत्रं तथा भ्राता भ्रातरं नापि दीक्षयेत् ॥ ३ ॥

किञ्च ।

सिद्धमन्त्रो यदि पतिस्तदा पत्नी स दीक्षयेत् । शक्तित्वेन वरारोहे ! न हि सा पुत्रिका भवेत् ।

इति सिद्धमन्त्रे तु न दोष । पूर्वं तु दोषः ।

इति दीक्षामहिमा ।

किञ्च । भामिनि ! श्रूयतामिदानीं दीक्षाभेदः । दीक्षा नाम आत्मनि कश्चित्संस्कारविशेष । यस्मिन् कृते कर्माद्युपदेशविशेषास्तस्मिन् प्रस्फुरन्ति । असंस्कृते आत्मनि तु न कश्चनोपदेशो निष्पद्यते । दूषणञ्च ।

आगमे ।

असंस्कृत्योपदेशं तु यः करोति विमूढधीः । विनश्यत्येव तत्सर्वं सैकते शालिबीजवत् ।

इति ।

असंस्कृतक्षेत्रे यथोप्तं बीजं न सम्यग्विरोहति न च निर्वर्तते तद्वत् ।

हंसी । भो हंस ! विषमोऽयं दृष्टान्तः । क्षेत्रक्षेत्रज्ञयोर्महदन्तरं, तत्संस्कारेण स कथं संस्कृतः स्यात् । 'आत्मनः कारयेद्दीक्षा'मित्युक्तत्वाच्च ।

हंसः । सत्यं, यद्यपि क्षेत्रतः क्षेत्रज्ञो भिन्नः तदपि तत्कृतसंस्कारास्तस्मिन्न् श्रयन्ति, यथा, कश्चित् प्रेतं कस्य च शरीरे प्रविष्टं मन्त्रयन्त्रौषधिताडनादयः संस्कारा लगन्ति तदभिमानित्वात् । तत्कृत सर्वं तस्मिन्नेवेत्यवेहि । निर्मलं मुखं मलिनमुकुरे मलिनमिव क्षेत्रज्ञं मलिनक्षेत्रगत तत्संस्कृत्या निर्मलं कुर्यात् ।

किञ्च, प्रियतमे, ! दीक्षा त्रिधा, भोगदीक्षा मोक्षदीक्षोभयात्मिका च । ज्योतिष्टोमादिषु क्रतुषु या कर्मदीक्षा सा भोगदीक्षेत्युच्यते, वेदान्तादिदर्शिता संन्यासलक्षणा मोक्षदीक्षा, कर्मसंन्यासोभयलक्षणा भोगमोक्षदीक्षेति ।

हंसी । भो,प्राणनाथ, ! भोगमोक्षयोरन्धकारप्रकाशवन्महाविरोधः ।

हंसः । तथ्यं, भोगमोक्षयोर्यद्यप्येकत्रायोग्यता, कुतः ।

भोगी चेन्नैव योगी स्याद्योगी चेन्नैव भोगवित् ।

इति शिवोक्तेः ।

कौलरहस्येऽपि ।

यत्रास्ति भोगो न हि तत्र मोक्षो यत्रास्ति मोक्षो न हि तत्र भोग,

इत्यपि । तथापि तत्रैव ।

भोगयोगात्मकं कौलं तस्मात्सर्वाधिकं प्रिये ! ।

इत्युक्तत्वात् ।

श्रीसुन्दरीतर्पणतत्पराणां भोगश्च मोक्षश्च करस्थ एव ।

इति च ।

अन्यत्र ।

कृष्णो भोगी शुको योगी वसिष्ठ कर्मकारकः । राजानौ रामजनकौ पञ्चैते तत्त्वदर्शिनः ।

इत्यतत्तत्त्ववित्सु तयोर्न विरोधः । उक्तञ्चागमे ।

सर्वयायी यथा सूर्यः सर्वभक्षी यथानलः । योगी भुक्त्वाऽखिलान्भोगाँस्तथा पापैर्न लिप्यते ।

उभयदीक्षैषा । दीक्षितश्चोभावप्यनुभवन् तटस्थ एवेति ।

किञ्च, कान्ते ! उभयदीक्षा तु सर्वोपनिषदर्थात्मकागमशास्त्रे एव प्रसिद्धा न बहिर्मुख-सम्मते धर्मशास्त्रादौ ।

हंसी । भोः स्वामिन् ! कुतश्चागमस्योपनिषदर्थत्वम् ।

हस. । आगम इत्यत्र मकारार्थे 'महावाक्यार्थकथनादि'त्युक्तत्वात् । रुद्रयामलेऽपि वेदार्थत्वमागमस्य प्रसिद्धम् ।

निगमो निष्कलः शब्दश्चागमो ह्यर्थ उच्यते ।

इत्युक्तेः ।

किञ्च ।

प्रिये ! भोगदीक्षया तु पाशा दृढीभवन्ति । यावत् पाश्या बद्धत्वं तावत् पशुत्वम् ।

पाशबद्धः पशुः प्रोक्तः पाशमुक्तः सदाशिवः ।

इत्युक्तत्वात् ।

स्त्री । स्वामिन् ! का सा पाश्या येन पशुत्वम् ।

हंसः ।

घृणा, शङ्का, भयं, लज्जा, जुगुप्सा, चेति पञ्चमः । कुलं, शीलन्तथा जाति-रष्टौ पाशाः प्रकीर्तिताः ।

इत्यागमे ।

केवलमुपनिषत्सु मोक्षदीक्षा, तत्र यावद्देहं प्रारब्धोत्थितान् नानाविधान् भोगान् भुञ्जाना अपि तान् धिक्कुर्वन्ति तज्ज्ञाः । श्रीराजयोगोल्लसितेऽस्मिन् रसशास्त्रे तु पूर्वं सद्दीक्षया सन्मन्त्रेण च शिवो भूत्वा तत्तत्कर्मोचितान् नानाविधान् भोगानविषादेन भुञ्जन्नप्यलिप्तः । 'तत् कर्म यन्न बन्धाये'त्युक्तत्वात् । कर्म कुर्वन् भोगानपि भुञ्जानः शिव एव नात्मरूपक्षतिः । अतः सर्वाभ्यो दीक्षाभ्यः श्रेष्ठाऽस्मदादीनां सम्मतोभयदीक्षेत्यवैतु भवती । वस्तुतस्तौ भोग-मोक्षौ न स्तः । तावप्यात्माविवेकवैवश्येन प्रतिभासेते । किञ्च । शिवागमरहस्येऽपि दीक्षाभेदा भूरिशः सन्ति । किन्तु, शास्त्रबाहुल्यभयादनावश्यकत्वाच्च नोल्लिख्यन्ते । कर्म-भक्तिज्ञानोपदेशयोग्यास्तिस्त्रो दीक्षा व्याचक्ष्महे । ताश्च क्रियावती, कलावती, वेधमयी चेति क्रमेणाधममध्यमोत्तमेषु मुमुक्षुषु ज्ञातव्याः ।

कालश्च ।

सुदिने शुभनक्षत्रे सङ्क्रान्तावयनद्वये । नवरात्रदिने पित्रोः श्राद्धे स्वजनिवासरे ॥ नववर्षदिने देवि ! चन्द्रसूर्योपरागके । तिष्ये स्वजन्मनक्षत्रे ।

इत्यादि देवीरहस्ये ।

तत्रादौ क्रियावती शारदातिलके । मण्डपादिसकलहोमक्रियां विधाय, तदनन्तरम् ।

तत: सुधौतदन्तास्यं स्नातं शिष्यं समाहितम् ।
पाययित्वा पञ्चगव्यं कुण्डस्यान्तिकमानयेत् ॥ १ ॥
विलोक्य दिव्यदृष्ट्या तं तच्चैतन्यं हृदंबुजात् ।
गुरुरात्मनि संयोज्य कुर्यादध्वविशोधनम् ॥ २ ॥
उक्तं कलाध्वा १ तत्त्वाध्वा २ भुवनाध्वे ३ ति च त्रयम् ।
वर्णाध्वा ४ च पदाध्वा च ५ मन्त्राध्वे ६ त्यपरं त्रयम् ॥ ३ ॥
निवृत्याद्या: कला: पञ्च कलाध्वेति प्रकीर्तित: ।
तत्त्वाध्वा बहुधाभिन्न: शैवाद्यागमभेदत: ॥ ४ ॥
षट्त्रिंशत् शैवतत्त्वानि ३६ द्वात्रिंशद्वैष्णवानि तु ३२ ॥ ५ ॥
चतुर्विंशति २४ तत्त्वानि मैत्राणि प्रकृते: पुन: ।
उक्तानि दश तत्त्वानि सप्त च त्रिपुरात्मन: ॥ ६ ॥
तत्त्वानि शैवान्युच्यन्ते शिव: १ शक्ति: २ सदाशिव: ३ ।
ईश्वरो ४ विद्यया ५ सार्द्धं पञ्च शुद्धान्यमूनि हि ॥ ७ ॥
माया ६ कालश्च ७ नियति: ८ कला ९ ऽविद्या १० पुन: स्मृत: ।
राग: ११ पुरुष १२ एतानि शुद्धाशुद्धानि सप्त च ॥ ८ ॥
प्रकृति १३ र्बुद्ध्य १४ हङ्कारौ १५ मनो १६ ज्ञानेन्द्रियाण्यथ २१ ।
कर्मेन्द्रियाणि २६ तन्मात्रा: ३१ पञ्च भूतानि ३६ देशिका: ॥ ९ ॥
एतान्याहुरशुद्धानि चतुर्विंशतिरागमे ।
शैवानामिति तत्त्वानां विभागोऽत्र प्रदर्शित: ॥ १० ॥
जीव १ प्राण २ धिय ३ श्चित्तं ४ ज्ञान ९ कर्मेन्द्रियाण्यथ १४ ।
तन्मात्रा: १९ पञ्च भूतानि २४ हृत्पद्मं २५ तेजसां त्रयम् २८ ॥ ११ ॥
वासुदेवादय ३२ श्चेति तत्त्वान्येतानि शार्ङ्गिण: ।
पञ्च भूतानि ५ तन्मात्रा १० इन्द्रियाणि १० मनस्तथा २१ ॥ १२ ॥
गर्वो २२ बुद्धि: २३ प्रधानं २४ च मैत्राणीति विदुर्बुधा: ।
निवृत्त्याद्या: कला: पञ्च ५ ततो बिन्दु: ६ कला ७ पुन: ॥ १३ ॥
नाद: ८ शक्ति: ९ सदापूर्व: शिवश्च १० प्रकृतेर्विदु: ।
आत्मा १ विद्या २ शिव: ३ पश्चाच्छिवो ४ विद्या ५ स्वयं ६ पुन: ॥ १४ ॥
सर्वतत्त्वं च तत्त्वानि प्रोक्तानि त्रिपुरात्मन: ।
तत्त्वाध्वा कथितो ह्येवं तत्तदागमवेदिभि: ॥ १५ ॥
ईरितो भुवनाध्वेति भुवनानि मनीषिभि: ।
वर्णाध्वेति वदन्त्यर्णानादिक्षान्तान् मनीषिण: ॥ १६ ॥
वर्णसङ्घ: पदाध्वा स्यान्मन्त्राध्वा मन्त्रराशय: ।
क्रमादेतानध्वन: षट् शोधयेद्गुरुसत्तम: ॥ १७ ॥

पादान्धुनाभिहृद्भाल-मूर्द्धस्वपि शिशोः स्मरेत् ।
ततः कूर्चेन विधिवत्तं स्पृशन् जुहुयाद् गुरुः ॥ १८ ॥
आचार्यकुण्डे संशुद्धै-स्तिलैराज्यपरिप्लुतैः ।
शोधयाम्यमुमध्वानं स्वाहेति पृथगध्वनाम् ॥ १९ ॥
ताराद्यमाहुतीरष्टौ क्रमात्तान् विलयन्नयेत् ।
शिवे शिवात्तान् संलीनान् जनयेत्सृष्टिमार्गतः ॥ २० ॥
विलोकयेद्दिव्यदृष्ट्या तं शिशुं देशिकोत्तमः ।
आत्मस्थितं तच्चैतन्यं पुनः शिष्ये नियोजयेत् ॥ २१ ॥
पूर्णाहुत्यादिकञ्चान्यत् कर्मतन्त्रं समापयेत् ।
नेत्रे शिष्यस्य बध्नीयान्नेत्रमन्त्रेण वाससा ॥ २२ ॥
करे गृहीत्वा तं शिष्यं कुण्डतो मण्डलन्नयेत् ।
तस्याञ्जलि पुनः पुष्पैः पूरयित्वा यथाविधि ॥ २३ ॥
कलशे देवताप्रीत्यै क्षेपयेन्मूलमुच्चरन् ।
व्यपोह्य तं नेत्रबन्धमासीनं दर्भसंस्तरे ॥ २४ ॥
आत्मयागक्रमाद्भूयः संहृत्योत्पाद्य देशिकः ।
तत्तन्मन्त्रोदितान् न्यासान् कुर्याद्देहे शिशोस्तदा ॥ २५ ॥
पञ्चोपचारैः कुम्भस्थां पूजयित्वेष्टदेवताम् ।
तस्यास्तन्त्रोक्तमार्गेण विदध्यात्सकलीकृतिम् ॥ २६ ॥
मण्डलेऽलङ्कृते शिष्यमन्यस्मिन्नुपवेशयेत् ।
नदत्सु पञ्चवाद्येषु सार्द्धं विप्राशिषा गुरुः ॥ २७ ॥
विधिवत्कुम्भमुद्धृत्य तन्मुखस्थान्सुरद्रुमान् ।
शिशोः शिरसि विन्यस्य मातृकां मनसा जपन् ॥ २८ ॥
मूलेन साधितैस्तोयैरभिषिञ्चेत्तमात्मवित् ।
पूजितां पुनरादाय वर्द्धनीमस्त्ररूपिणीम् ॥ २९ ॥
तस्यां सुसाधितैस्तोयैः सिञ्चेद्रक्षार्थमञ्जसा ।
अवशिष्टेन तोयेन शिष्यमाचामयेद्गुरुः ॥ ३० ॥
ततस्तं सकलीकुर्यात् देवतात्मानमात्मवित् ।
उत्थाय शिष्यो विमले वाससी परिधाय च ॥ ३१ ॥
आचम्य वाग्यतो भूत्वा निषीदेत्सन्निधौ गुरोः ।
देवतामात्मनः शिष्ये सङ्क्रान्तां देशिकोत्तमः ॥ ३२ ॥
पूजयेद्गन्धपुष्पाद्यै-रैक्यं सम्भावयँस्तयोः ।
दद्याद्विद्यां ततस्तस्मै विनीतायाम्बुपूर्वकम् ॥ ३३ ॥
गुरोर्लब्धां पुनर्विद्यामष्टकृत्वो जपेत्सुधीः ।
गुरुविद्यादेवतानामैक्यं सम्भावयन् धिया ॥ ३४ ॥

प्रणमेद्दण्डवद्भूमौ गुरुं तं देवतात्मकम् ।
तस्य पादाम्बुजद्वन्द्वं निजमूर्द्धनि योजयेत् ॥ ३५ ॥
शरीरमर्थं प्राणांश्च सर्वं तस्मै निवेदयेत् ।
ततः प्रभृति कुर्वीत गुरोः प्रियमनन्यधीः ॥ ३६ ॥
एषा क्रियावती दीक्षा प्रोक्ता सर्वसमृद्धिदा ।

## । इति क्रियावती दीक्षा ।

## । अथ कलावती ।

निवृत्याद्याः कलाः पञ्च भूतानां शक्तयो यतः ।
तस्माद्भूतमये देहे ध्यात्वा ता वेधयेच्छिशोः ॥ १ ॥
निवृत्तिर्जानुपर्यन्तं तलादारभ्य संस्थिता ।
जानुनोर्नाभिपर्यन्तं प्रतिष्ठा व्याप्य तिष्ठति ॥ २ ॥
नाभेः कण्ठावधि व्याप्ता विद्या शान्तिस्ततः परम् ।
कण्ठाल्ललाटपर्यन्तं व्याप्ता तस्माच्छिरोवधि ॥ ३ ॥
शान्त्यतीता कला ज्ञेया कलाव्याप्तिरितीरिता ।
संहारक्रमयोगेन स्थानात् स्थानान्तरे गुरुः ॥ ४ ॥
संयोज्य वेधयेद्विद्वा-नाज्ञया ताः शिवावधि ।
इयं प्रोक्ता कलादीक्षा दिव्यभावप्रदायिनी ॥ ५ ॥

## । इति कलावती दीक्षा ।

## । अथ वेधमयी ।

अथ वेधमयी वक्ष्ये दीक्षां संसारमोचनीम् ।
ध्यायेच्छिष्यतनोर्मध्ये मूलाधारे चतुर्दले ॥ १ ॥
त्रिकोणमध्ये विमले तेजस्त्रयविजृम्भिते ।
वलयत्रयसंयुक्तां तडित्कोटिसमप्रभाम् ॥ २ ॥
शिवशक्तिमयीं देवीं चेतनामात्रविग्रहाम् ।
सूक्ष्मात्सूक्ष्मतरां शक्तिं भित्त्वा षट्चक्रमञ्जसा ॥ ३ ॥
गच्छन्ती मध्यमार्गेण दिव्यां परशिवावधि ।
वादिसान्तदलस्थार्णान् संहरेत् कमलासने ॥ ४ ॥
तं षट्पत्रमये पद्मे वादिलान्ताक्षरान्विते ।
स्वाधिष्ठाने समायोज्य वेधयेदाज्ञया गुरुः ॥ ५ ॥
तान्वर्णान्संहरेद्विष्णौ तं पुनर्नाभिपङ्कजे ।
दशपत्रे डादिफान्तवर्णाढ्यं योजयेद्गुरुः ॥ ६ ॥
तान् वर्णान् संहरेद्रुद्रे तं पुनर्हृदयाम्बुजे ।
कादिठान्तार्कपत्राढ्ये योजयेदीश्वरे गुरुः ॥ ७ ॥

तान् वर्णान् संहरेत्तस्मिँस्तं भूयः कण्ठपङ्कजे ।
स्वराढ्ये षोडशदले योजयित्वा स्वरान् पुनः ॥ ८ ॥
सदाशिवे तान् संहृत्य तं पुनर्भ्रूसरोरुहे ।
द्विपत्रे हक्षलसिते योजयित्वा ततो गुरुः ॥ ९ ॥
तदर्णौ संहरेद्बिन्दौ कलायां तन्नियोजयेत् ।
तां नादेऽनन्तरन्नादं नादान्ते योजयेद्गुरुः ॥ १० ॥
तमुन्मन्यां समायोज्य विषुवक्त्रान्तरे च तां ।
तं पुनर्गुरुवक्त्रे तु योजयेद्देशिकोत्तम. ॥ ११ ॥
सहैवमात्मना शक्तिं वेधयेत् परमे शिवे ।
गुर्वाज्ञया चिछन्नपाशस्तदा शिष्यः पतेद्भुवि ॥ १२ ॥
सञ्जातदिव्यबोधोऽसौ सर्वं वदति तत्क्षणात् ।
साक्षाच्छिवो भवत्येष नात्र कार्या विचारणा ॥ १३ ॥
एषा वेधमयी दीक्षा प्रोक्ता संवित्प्रदर्शिनी ।

। श्रीमदागमरहस्येऽपि ।

यदस्ति वेधकाले तत् स्वयमेवानुभूयते ।
प्रबुद्धस्तु न शक्नोति तत्साख्यं वक्तुमीश्वरि ! ॥ १ ॥
वेधविद्धः शिवः साक्षान्न पुनर्जन्मतां व्रजेत् ।
एषा तीव्रतरा दीक्षा भवेद्बन्धविमोचनी ॥ २ ॥
शिवभावप्रदा साक्षाद्दीक्षा सा कुलनायिके ! ।
आनन्दश्चैव कम्पश्च भवेद् घूर्णिः कुलेश्वरि ! ॥ ३ ॥
निद्रा मूर्च्छा च वेधश्च षडवस्थाः प्रकीर्तिताः ।
दृश्यन्ते षड् गुणा ह्येते वेधकाले कुलेश्वरि ! ॥ ४ ॥
वेधको यत्र कुत्रापि तिष्ठन्मुक्तो न संशयः ।
वेधदीक्षाकरो लोके श्रीगुरुर्दुर्लभः प्रिये ! ॥ ५ ॥
शिष्योऽपि दुर्लभस्तादृक् पूर्णयोगेन लभ्यते ।
न दद्याद्यस्य कस्यापि त्वित्याज्ञा पारमेश्वरी ॥ ६ ॥

**इति वेधमयी ।**

किञ्च, मुमुक्षौ तु विशेषः ।

**स्पर्शदीक्षा वाग्दीक्षा दृग्दीक्षा वा मानसी चेति ।** उक्तञ्च **आगमरहस्ये ।**

हस्ते गुरुः शिवं ध्यात्वा जपन्मूलाङ्गमालिनीम् ।
सम्यक् स्पृशेच्छिष्यतनुं **स्पर्शदीक्षा** भवेदियम् ॥ १ ॥

चित्ते तत्त्वं समाधाय परतत्त्वोपबृंहितान् ।
उच्चरेत् संहितान् मन्त्रान् **वाग्दीक्षा** सा भवेत्प्रिये ! ॥ २ ॥
विलोक्य दिव्यदृष्ट्या तु गुरुर्मन्त्रं वदन् शिशुम् ।
गुरोरालोकमात्रेण **दृग्दीक्षा** सा भवेत्प्रिये ! ॥ ३ ॥
निमील्य नयने ध्यानात्परतत्त्वं प्रसन्नधीः ।
सम्यक् पश्येद्गुरुः शिष्ये दीक्षा सा **मानसी** स्मृता ॥ ४ ॥

किञ्च अधमाधमादिषु तु उपदेशमात्रम् ।

**विश्वसारे ।**

**दीक्षा** चैव **महादीक्षा ह्युपदेश**-स्तत परः ।
युगे युगे च कर्त्तव्या चोपदेशः कलौ युगे ॥ १ ॥
चन्द्रसूर्यग्रहे तीर्थे सिद्धक्षेत्रे शिवालये ।
मन्त्रमात्रप्रकथन-**मुपदेशः** स उच्यते ॥ २ ॥

शूद्रसङ्करजातीनां नाध्वशुद्धिर्विधीयते
इत्युक्तत्वादेतच्छूद्रादिपरम् ॥

**इति श्रीहंसविलासे श्रीहंसमिट्ठुपठिते दीक्षाविधानं नामैकोनविंशोल्लासः ॥ १९ ॥**

अत्राह हंसी-भोः श्रीहंस ! कलौ तु शूद्रसङ्करकर्माचरणशीला एव सर्वे इति दृश्यते ।

श्रीहंस.-'सत्यं, तथापि **गायत्री**मन्त्रसंस्कारेण संस्कृता ये शरीरिणस्ते तु द्विजातय एव' तदतिरिक्ताः **शूद्रादयः ।**

हंसी । भवतु, श्रीकुलाचार्येणानेकैः संस्कारैः श्रुतिस्मृतिप्रदर्शितैः संस्कृत्य द्विजातिषु श्रीगायत्र्युपदिश्यते किंपुनस्तेषामितरयाऽऽगमदर्शितया **दीक्षया ?**

हंसः । प्रिये, श्रौतस्मार्तधर्मकर्मसाधनायैव सा तेनोपदिश्यते, नतु मोक्षाय । किञ्च क्षेत्र-संस्कारोऽपि न तद्दर्शितो मोक्षयोग्यः; यथाऽसत्संस्कारसंस्कृते क्षेत्रे सद्बीजं केनचिदतज्ज्ञेन निक्षिप्तं प्ररूढमपि न यथार्थन्निष्पद्यते यथा सुदेशोद्भवं सद्वृक्षबीजं कुदेशे न तथाविधं फलति; पामरे च महामणिरिव ।

किञ्च वस्तुतो विचार्यमाणे ब्रह्मचर्याश्रमात् प्रभृति संन्यासाश्रमान्तं गायत्र्या वलम् । न तु तुर्याश्रमे । चतुर्थाश्रमे तु, तां तदुपयोगिसूत्रादिकञ्च त्यक्त्वा दीक्षान्तरेण मोक्षाय तस्मिन् प्रवेशः ।

तत्र मोक्षदीक्षासंस्कारैः संस्कृते चात्मनि प्रणवाद्युपदिश्यते । तदौपयोगिकं कर्मादि च । शिखां सूत्रञ्च गायत्री परित्यजेदित्**युक्तेः ।**

किञ्च-श्रुतिस्मृतिदर्शितं यद्धर्मकर्मसाधनार्थं मन्त्रतन्त्रादिकं तत्सर्वमामोक्षाधिकारं सत्यम्। मोक्षविषये तु तत्त्वतो न तस्य किञ्चित् प्रयोजनम्। अतो द्विजातीनामप्यवश्यं यथाधिकारं पुनर्दीक्षाऽपेक्ष्या।

हंसी। स्वामिन्! विषम इव तुर्याश्रमदृष्टान्तः। कस्मात्, वैलक्षण्यात्। यथा श्रुतिदर्शित-चतुर्थाश्रमप्रवेशाय तु शिखासूत्रगायत्र्यादीनां त्यागेन दीक्षान्तरमपेक्ष्यं नात्र तथाविध-मुक्तमिति।

हंसः। वराङ्गने! यथाम्नायनिर्मिततुर्याश्रमस्तथैवागमगदितोऽयमपि तुरीयाश्रमः। विधि-वैलक्षण्येऽपि न वस्तुवैलक्षण्यम्। यद्यपि गायत्र्यादीनां त्यागो नोक्तस्तथापि न पुनरुपदेशो दोष इति शङ्क्यम्। विहितत्वात्। किञ्च। पशुशास्त्रवर्त्मना यद्यपि केनचित्कश्चिदुपदिष्टः। तदपि स पशुरेव। तस्य तत्पशुत्वविनिवृत्तये पुनरुपदेशोऽवश्यमेवापेक्ष्य.। धर्मकर्मलक्षणानि निखिलानि शास्त्राणि पशुशास्त्राणि, तेषामुपदेष्टा चोपदेश्योऽपि पशुरेव। पाशवविषये प्रवृत्ते प्राणिनि मुहुर्मुहुरुपदिष्टे न काचन हानिः।

किञ्च। यथा कुटीचक-बहूदक-हंस-परमहंसभेदेन चतुर्विधं यतित्वम्; तद्वदत्रापि कर्मयोगी, भक्तियोगी, ज्ञानयोगी, राजयोगीति चतुर्विधं रसिकत्वम्।

किञ्च। चतुर्थाश्रम एव मोक्ष इति तु नियमो नास्ति। 'नाश्रमः कारणं मुक्ते' रित्युक्तत्वात्। 'यत्र कुत्राश्रमे तिष्ठन् मुक्त एव न सशय' इति च। 'तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदे' त्युक्तेरपि। तदाश्रमस्तु विशेषतो वार्द्धक्ये दर्शितः। किञ्च। दण्ड-करक-काषायाम्बरादिवेषविशेषस्तु तदाश्रमप्रकाशकः। ईश्वरप्रदर्शिततुरीयाश्रमेऽपि वेषवि-शेषाद्यनेकविधं लिङ्ग वर्तते। किमेतावता तेनैव मोक्षः?।

उक्तञ्च। **परमहंसोपनिषदि।**

'कौपीनं दण्डमाच्छादनञ्च स्वशरीरस्योपभोगार्थाय च लोकस्योपकारार्थाय च परिग्रहे त्तच्च न मुख्योऽस्ति। कोऽयं मुख्य इति चेदयं मुख्यो-न दण्डं न कमण्डलुं, न शिखां, न यज्ञो-पवीतं नाच्छादनञ्चेति'।

केवलं **वेषधारणे प्रत्यवायोऽपि तत्रैव।**

काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जित.।
स याति नरकान् घोरान् महारौरवमेव च ॥ १ ॥
तितिक्षाज्ञानवैराग्य-शमादिगुणवर्जितः।
भिक्षामात्रेण यो जीवेत् स पापी यतिवृत्तिहा ॥ २ ॥

इत्यादि।

'नानाचित्रविचित्रवेषरचिता'

**इति कपिलगीतायामपि।**

कान्ते! किमीरितं, स्वस्वसम्प्रदायानुसारेण सकलेष्वपि दर्शनेषु वेषवैचित्र्यं तूक्तमेव। किन्तु, तेनैव मुक्तिरिति मनसाऽपि न मन्तव्यं 'ज्ञानादेव हि कैवल्यमि' त्युक्तेः।

हंसी । भोः पते ! यदि कस्यचिद्दिष्ट्या ब्रह्मचर्याश्रमे गृहाश्रमे वा वनाश्रमे, विद्यमानायां स्त्रियि, अकृतपाणिग्रहणस्य वा साधनचतुष्टयसम्पत्तिरुज्जृम्भिता, वृद्धत्वं तु दूरे स्थितं; तत्समयपर्यन्तमायुषो निश्चयः कः ? तस्य तु मोक्षे बत नैराश्यम् ॥

हंसः । ऋतं, रमणि ! यद्यपि श्रुत्याश्रमत्रयानन्तरं तुर्याश्रमः सूचितः तथापि यत्र कुत्राश्रमे विरक्तिराविर्भूता चेत्तर्हि तेन तु तदैव तदाश्रमधर्ममुत्सृज्य चतुर्थाश्रमः संश्रयितव्यः । 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति **श्रुतेः** ।

किञ्च । अत एव दयालुना श्रीपरमेश्वरेणेह व्याहृतम् । श्रुत्या तु केवलं समाश्रिताश्रमधर्मोत्सर्जनेनैवान्त्याश्रमप्रवेशो दर्शितः ।

**श्रीपरमेश्वरेण** तु । 'अनुत्सृष्टस्वीकृताश्रमधर्म एव तुरीयाश्रमरसमास्वादये'दित्युक्तत्वात् । सामरस्यास्वादनोत्सुकानामस्मत्प्रभृति-**रसिकानां** तु श्रीपारमेश्वरी सरस्वत्येव सम्मता । धन्योऽहमनया शब्दब्रह्मब्राह्मया यत् सहजसरलयाऽविधुतवर्णाश्रमधर्मे मयि तुरीयाश्रमरसः समर्पितः ।

किञ्च । शुष्कश्रुतिभिस्तु द्विजातिभ्य एव चतुर्थाश्रमरसः समर्प्यते न च स्त्रीशूद्रादिभ्यः । परमेश्वरगीर्भिस्तु सर्वेषामेव मनुष्याणां तुरीयसुखं दर्शितम् । 'सर्वे वर्णा द्विजातय' इत्युक्तेः । 'गतं शूद्रस्य शूद्रत्वं' 'शिवलिङ्गे शिलाबुद्धि' मित्**युक्त**त्वाच्च । अत एव सहजसरलत्वं यत् स्त्रीशूद्रादिष्वपि चतुर्थाश्रमस्फुरितं सामरस्यसुखं समर्पितम् ।

प्रिये ! । श्रीपरमेश्वरमन्तरेण कृपणेभ्यः केन कल्पतरुः प्रतिपाद्येत । श्रुतिस्मृतिदर्शिभिः श्रीमहर्षिभिस्तु ब्राह्मणेभ्य एव बहुधा तुर्यरसो विश्राणित । न स्त्र्यादिभ्यः ।

हंसी । साह्लादम् । स्वीकृता खलु यद्बहिर्मुख्यामन्तर्मुखसुखं मयि प्रादुःकृतम् । किञ्च । मानुष्या किमहं प्रेक्षयोत्प्रेक्ष्य प्रश्नयेयं ? तथाप्यनिवार्यं मनो नोपतिष्ठते । अतः श्रूयतामेष ममानुयोगः ।

यदुक्तं पत्या-केवलश्रुतिदर्शितचतुर्थाश्रमतः श्रीपरमेश्वरवर्णिततुरीयाश्रमः श्रेयानित्यत्र-यत्तदाश्रमप्रविष्टानां मस्करिणामिह प्रेतोद्देशेनौर्ध्वदेहिकं क्रियते लोकैस्तन्नोदीरितम् । इतरेषां तूदितमेवेत्यत. किमप्यभिवक्तु भवान् !

श्रीहंसः । प्रतीपदर्शिनि ! प्रमाणमेतत् । यद्यपीश्वरप्रदर्शितं तुरीयाश्रमिणां पूर्णाभिषेकिणामपि तत् तत्पुत्रादिभिस्तदुद्देशेनौर्ध्वदेहिकं निष्पाद्यते न तु तत्कर्मन्दिनामित्यत्र; तदपि का शङ्का ।

यथा खल्विह शरीरस्थैरपि समुज्झिततदभिमानैः श्रीरसिकैस्तदाश्रमप्रवेशानन्तरं निष्पादितान्यनेकविधानि कर्माणि निष्फलीभवन्ति । न पुनरिहामुत्र च तेषां भोगः । तद्वत्तत्तनयादिभिः परपदप्राप्तानामुद्देशेनौर्ध्वदेहिकमनुष्ठितमपि मोघमेव । देहाभिमानिषु तु तत्सर्वं सम्यक् ।

'क्षीयन्ते चास्य कर्माणी'ति **श्रुतेः** । दीक्षितस्य न कार्यं स्यात्, 'दीक्षाग्निदग्धकर्मासावि'त्याद्युक्तत्वाच्च । स्वयं कृतमपि कर्मतन्त्रं निष्फलं भवति । शरलताफलवदिक्षुफलवच्च । तर्हि तन्मरणानन्तरं तदुद्देशेन तत्सुतादिभिर्भाविते किमाशङ्क्यम् । अत्र स्थिते परत्र च प्रस्थिते श्रीरसिके तु न वर्णाश्रमकर्मफललेपाशङ्का कालत्रयेऽपि । तदभिमतिराहित्यात् ।

किञ्च । परिव्राजामपि तदुद्देशेन पुत्राद्यैरेकादशाहे द्वादशाहे च श्राद्धादि विधाय भिक्षुभ्यो भोजनपूर्वकं कमण्डलु-बहिर्वासाद्यं विविधं वस्तु दीयते । किमेतावता जातम् । तद्वद्रसिकानामप्युत्तरकृत्येन न किञ्चन सुखं दुःखमप्यकृतेनेत्यवगन्तव्यम् ।

लोकमतियातानां जीवन्मुक्तानां श्रीराजयोगिनां लोकाचारो नोपकारायापकाराय चाशङ्कनीयः । प्रेतत्वाद्युद्देशेनापि तेषु यद्यन्निष्पादितं तत्तदखिलं लोकाचरणमेव नो किमपि तान्स्पृशतीत्यवैतु भवती ।

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे चतुर्थाश्रमनिर्णयो नाम विंशोल्लासः ॥ २० ॥**

अथ हंसी । अवसितमेतद्दीक्षासारस्यं श्रीमद्भिः श्रावितम् । इदानीं **मन्त्रोपदेश** आश्राव्यताम् ।

श्रीहंसः । शृणुष्वार्ये! । श्रीमन्त्रोपदेशश्रवणात्प्राग् **सम्प्रदायः** श्रोतव्यः ।

**उक्तञ्चागमे ।**

कृत्वा समयदीक्षाञ्च दत्त्वा समयपादुकाम् ।
संविधायात्मनः शिष्यं वदेन्मन्त्रं न चान्यथेति ॥ १ ॥

**। सम्प्रदायार्थस्तु ।**

संसारसारभूतत्वात् प्रसादानन्ददानतः ।
यशःसौभाग्यकरणात् सम्प्रदाय इति स्मृतः ॥

**इत्यागमे ।**

**। आचारोऽपि ।**

आत्मादितत्त्वरूपत्वाच्चातुर्यार्थनिरूपणात् ।
रागद्वेषादिशमनादाचारः कथितः प्रिये ! ॥

कामिनि ! । किमुक्तं. पूर्वोदितदीक्षाविषये श्रीमन्त्रोपदेशवेलायामादौ शिष्येभ्यः स्वसम्प्रदाय उपदेष्टव्यः ।

**। शिष्यार्थश्च ।**

शरीरमर्थं प्राणांश्च सद्गुरुभ्यो निवेदनात् ।
गुरुभिः शासितुं योग्यः शिष्य इत्यभिधीयते ॥ १ ॥

तदादौ मनुष्यशरीरान्तर्गतस्यापि श्रीपरमशिवस्वरूपस्य श्रीस्वगुरोः **श्रीपादुकाचार**स्तन्माहात्म्यपूर्वकं प्रतिश्रूयताम् ।

पादुकार्थश्च ।

पालनाद्दुरितच्छेदात् कामितार्थप्रबन्धनात् ।
पादुकेति समाख्याता मम तत्त्वं कुलेश्वरि ! ॥ १ ॥

**। श्रीमदागमरहस्ये ।**

कोटिकोटिमहायज्ञात् कोटिकोटिमहाव्रतात् ।
कोटिकोटिमहादानात् परा श्रीपादुका-स्मृतिः ॥ २ ॥

महारोगे महोत्पाते महादुःखे महाभये ।
महापदि महापापे स्मृता रक्षति पादुका ॥ ३ ॥
दुराचारे दुरालापे दुःसङ्गे दुःप्रतिग्रहे ।
दुःक्रियायाश्च दुर्बुद्धौ स्मृता रक्षति पादुका ॥ ४ ॥
तेनाधीतं श्रुतं ज्ञातमिष्टं दत्तञ्च पूजितम् ।
जिह्वाग्रे वर्त्तते यस्य सदा श्रीपादुका प्रिये ! ॥ ५ ॥
सकृच्छ्रीपादुकां देवि ! यो वा जपति भक्तितः ।
सर्वपापै स रहित प्राप्नोति परमां गतिम् ॥ ६ ॥
शुचिर्वाप्यशुचिर्वा यो भक्त्या स्मरति पादुकाम् ।
अनायासेन धर्मार्थकाममोक्षान् लभेत स ॥ ७ ॥
श्रीनाथचरणाम्भोजं यस्यां दिशि विराजते ।
तस्यै दिशे नमस्कुर्याद्भक्त्या प्रतिदिनं प्रिये ! ॥ ८ ॥
न पादुकापरो मन्त्रो न देवः श्रीगुरोः परः ।
न हि शाक्तात्परो मार्गो न पुण्यं कुलपूजनात् ॥ ९ ॥

अत्राह हंसी । भो, भो, वल्लभ, ! **शाक्तमार्गः कुलपूजन**मित्येतद् द्वयं तु संदिग्धम् ।
श्रीहंसः । **शक्तिः कुण्डलिनी**, तस्या मार्गः, षट्चक्रमध्यपदवी ।
उक्तञ्च **योगशास्त्रे** ।

कुटिलाङ्गी, कुण्डलिनी, भुजङ्गी, शक्तिरीश्वरी ।
कुण्डल्याः श्वेतरुद्रान्ति ! शब्दाः पर्यायवाचकाः ॥ १ ॥

इत्युक्तत्वात् तस्या षट्चक्रमध्यमार्गेण परशिवेन सह संयोग इत्यर्थः ।
**कुलपूजनञ्च** ।
कौ पृथिव्यां लीयते कुलं शरीरं तस्मिन् पूजनमन्तर्याग इत्यर्थः ।
अथवा

कुलं गोत्रं समाख्यातं तच्च शक्तिसमुद्भवम् ।
येन विश्वमिति ज्ञातं कौलिकः सोऽभिधीयते ॥ १ ॥
अकुलं शिव इत्युक्त कुलं शक्ति समीरितम् ।
कुलाकुलानुसन्धाननिपुणा कौलिका प्रिये ! ॥ २ ॥

इत्या**गमरहस्योक्तेः** कुलं शक्ति कुण्डलिनीत्यर्थ ।
तस्या. पूजनं शिवेन सहैकीकरणं **कुलपूजनम्** । द्वयोरप्येक एव **तात्पर्यार्थः** ।
अथारब्धं वच्म ।

ध्यानमूलं गुरोर्मूर्तिं पूजामूलं गुरो पदम् ।
मन्त्रमूलं गुरोर्नाम मोक्षमूलं गुरो कृपा ॥ १० ॥
गुरुमूला क्रिया. सर्वा लोकेऽस्मिन् कुलनायिके ! ।
तस्मात्सेव्यो गुरुर्नित्यं सिद्ध्यर्थं भक्तिसंयुत ॥ ११ ॥

तावदार्त्तिभयं दु खं मोहश्चाशुभमापद ।
यावन्नायाति शरणं श्रीगुरुं भक्तवत्सलम् ॥ १२ ॥
तावद्भ्रमन्ति संसारे सर्वदु खमलीमसे ।
न भवेत्सद्गुरोर्भक्त्या यावद्देवेशि ! दर्शनम् ॥ १३ ॥
सर्वसिद्धिफलोपेतो मन्त्रस्कन्धोऽतिशोभन ।
गुरुप्रसादमूलोऽयं परतत्त्वमयो द्रुम ॥ १४ ॥
यथा ददाति सन्तुष्ट प्रसन्नवदनो मनुम् ।
तथा भक्त्या धनै प्राणैर्गुरुं यत्नेन तोषयेत् ॥ १५ ॥
यदा दद्याच्छिवाय स्वमात्मानं देशिकात्मने ! ।
तदा मुक्तो भवेच्छिष्यो न ततोऽस्ति पुनर्भव. ॥ १६ ॥
तावदाराधयेच्छिष्यः सुप्रसन्नो यदा भवेत् ।
गुरौ प्रसन्ने शिष्यस्य सद्यः पाशक्षयो भवेत् ॥ १७ ॥
मनसाऽपि न काङ्क्षन्ते यान् कामाननुजीविनः ।
सम्पादयन्ति तान् सर्वान् स्वामिनो भक्तवत्सलाः ॥ १८ ॥
ब्रह्मविष्णुमहेशादि-देवता मुनियोगिनः ।
कुर्वन्त्यनुग्रहं तुष्टा गुरौ तुष्टे न संशयः ॥ १९ ॥
भक्त्या सन्तुष्टगुरुणा ह्युपदिष्टः कृपालुना ।
कर्ममुक्तो भवेच्छिष्यो भुक्तिमुक्त्योः स भाजनम् ॥ २० ॥
शिष्येणाऽपि तदा ग्राह्यं यदा सन्तोषितो गुरुः ।
तस्माद्गुरोः प्रियं कार्यं मनोवाक्कायकर्मभिः ॥ २१ ॥
यदि वा परितुष्टेन गुरुणा यत्र कुत्रचित् ।
मुक्तोऽसीति समादिष्ट. सोऽपि मुक्तो व्रजेत्प्रिये ! ॥ २२ ॥
अथवा निष्प्रपञ्चेन धाम्ना केन दिगीश्वरः ।
करोति गुरुरूपेण पशुपाशविमोचनम् ॥ २३ ॥
न मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचोऽपि वा ।
तस्मै देयं ततो ग्राह्यं स तु पूज्यो ह्यहं यथा ॥ २४ ॥
विप्रश्चेद्गुणयुक्तोऽपि ह्यभक्तो न प्रकाशते ।
म्लेच्छस्तु गुणहीनोऽपि भक्तिमान् शिष्य उच्यते ॥ २५ ॥
गुरुभक्तिविहीनस्य तपो विद्या व्रतं कुलम् ।
शवस्येव कुलेशानि ! भूषणं लोकरञ्जनम् ॥ २६ ॥
गुरुसद्भक्तिदहनाद्दग्धदुर्गतिकिल्बिषः ।
श्वपचोऽपि परं पूज्यो न विद्वानपि नास्तिकः ॥ २७ ॥
धर्मार्थकामैः किं तस्य मोक्षः साक्षात्करे स्थितः ।
सर्वार्थे श्रीगुरौ देवि ! यस्य भक्तिः स्थिरा सदा ॥ २८ ॥

स शिवो गुरुरूपेण भुक्तिमुक्तिप्रदो मम ।
इति भक्त्या स्मरेद्यस्तु तस्य सिद्धिरदूरतः ॥ २९ ॥
यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ।
तस्यैते सकला अर्थाः प्रकाशन्ते महात्मनः ॥ ३० ॥
नारायणे महादेवे मातापित्रोश्च राजनि ।
यथा भक्तिर्भवेद्देवि ! तथा कार्या निजे गुरौ ॥ ३१ ॥
लक्ष्मीनारायणौ वाणी-धातारौ गिरिजाशिवौ ।
श्रीगुरुं गुरुपत्नीञ्च पितराविति चिन्तयेत् ॥ ३२ ॥
गुरुभक्त्या यथा देवि ! प्राप्यन्ते सर्वसिद्धय ।
यज्ञदानतपस्तीर्थव्रताद्यैर्न तथा प्रिये ! ॥ ३३ ॥
श्रीगुरौ निश्चला भक्तिर्वर्धते हि यथा यथा ।
तथा तथास्य विज्ञानं वर्द्धते कुलनायिके ! ॥ ३४ ॥
कि तीर्थाद्यैर्महायासैः किं व्रतैः कायशोषणैः ।
निर्व्याजसेवा देवेशि ! भक्तिर्येषां हि सद्गुरौ ॥ ३५ ॥
कायक्लेशेन महता तपसा वाऽपि यत्फलम् ।
तत्फलं लभते देवि ! सुखेन गुरुसेवया ॥ ३६ ॥
भोगमोक्षार्थिनां ब्रह्म-विशिष्टपदकांक्षिणाम् ।
भक्तिरेव गुरौ देवि ! 'नान्यः पन्था' इति श्रुतिः ॥ ३७ ॥

## । भक्त्यर्थस्तु ।

भवदुःखप्रशमना-न्मोक्षज्ञानप्रदानतः ।
तीव्रार्थकरणाद्देवि ! भक्तिरित्यभिधीयते ॥ ३८ ॥
विश्वासाय नमस्तस्मै सर्वसिद्धिप्रदायिने ।
येन मृद्दारुदृषदो ददत्यविकलं फलम् ॥ ३९ ॥
न योगो न तपो नार्चाक्रमः कोऽपि प्रणीयते ।
आम्नायेऽस्मिन्महेशानि ! भक्तिरेका विशिष्यते ॥ ४० ॥
साक्षाद्गुरुमये देवि ! सर्वस्मिन् भुवनान्तरे ।
किन्न भक्तिमतां क्षेत्रं मन्त्रः केषां न सिद्ध्यति ॥ ४१ ॥
गुरौ मनुष्यबुद्धिञ्च मन्त्रे चाक्षरबुद्धिकाम् ।
प्रतिमासु शिलाबुद्धि कुर्वाणो नरकं व्रजेत् ॥ ४२ ॥
गुरुं मर्त्यन्न बुध्येत यदि बुध्येत तस्य तु ।
कदाचिन्न भवेत्सिद्धि-र्मन्त्रैर्वा देवतार्चनैः ॥ ४३ ॥
श्रीगुरुं प्राकृतैः सार्द्धं ये स्मरन्ति वदन्ति च ।
तेषां हि सुकृतं सर्वं पातकं भवति प्रिये! ॥ ४४ ॥

जन्महेतू ह पितरौ पूजनीयौ प्रयत्नतः ।
गुरुर्विशेषतः पूज्यो धर्माऽधर्मप्रदर्शकः ॥ ४५ ॥
गुरुः पिता गुरुर्माता गुरुर्देवो गुरुर्गतिः ।
देवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन ॥ ४६ ॥
अहितं न गुरोः कार्यं वाङ्मनःकायकर्मभिः ।
अहिताकरणाद्देवि ! विष्ठायाञ्जायते क्रिमिः ॥ ४७ ॥
शरीरवित्तप्राणांश्च श्रीगुरोर्वञ्चयन्ति ये ।
शरीरिणः पशुत्वं ते प्राप्नुवन्ति न संशयः ॥ ४८ ॥
गुरुत्यागाद्भवेन्मृत्यु-र्मन्त्रत्यागाद्दरिद्रता ।
गुरुमन्त्रपरित्यागाद्रौरवं नरकं व्रजेत् ॥ ४९ ॥
गुर्वर्थन्धारयेद्देहं तदर्थन्धनमर्जयेत् ।
धनप्राणान्परित्यज्य गुरुकार्याणि साधयेत् ॥ ५० ॥
गुर्वर्थे पारुषं वाक्य-माशिषश्चिन्तयेत्प्रिये ! ।
तेन सन्ताडितो वाऽपि प्रसादमिति संस्मरेत् ॥ ५१ ॥
भोगयोग्यानि वस्तूनि गुरवे सर्वथाऽर्पयेत् ।
तच्छेषमिति सञ्चिन्त्य चानुभूयात् कुलेश्वरि ! ॥ ५२ ॥
गुर्वग्रे न तपः कुर्यान्नोपवासादिक व्रतम् ।
तीर्थयात्रां न कुर्वीत न स्नायादात्मशुद्धये ॥ ५३ ॥
न नियोगं गुरोर्दद्यात् दृष्ट्वा वा नातिभाषयेत् ।
न कुर्यान्नास्तिक वादं सम्भाषणमपीश्वरि ! ५४ ॥
ऋणदानन्तथादान वस्तूनां क्रयविक्रयम् ।
न कुर्याद्गुरुभिः सार्द्धं शिष्यो भूत्वा कदाचन ॥ ५५ ॥
गुरौ सन्निहिते यस्तु पूजयेदन्यमम्बिके ! ।
स याति नरकं घोर सा पूजा निष्फला भवेत् ॥ ५६ ॥
शिरसा न वहेद्भारं गुरुपादानुशोभिना ।
तदाज्ञया तु कर्तव्यमाज्ञारूपो गुरुः स्मृतः ॥ ५७ ॥
मन्त्रागमादि चान्यत्र श्रुतं तस्मै निवेदयेत् ।
गुर्वाज्ञया तु गृह्णीयात्तदनिष्टं विवर्जयेत् ॥ ५८ ॥
स्वशास्त्रोक्तरहस्यार्थं न वदेद्यस्य कस्यचित् ।
यदि ब्रूयात्स समयाच्च्युत एव न संशयः ॥ ५९ ॥
अद्वैतं भावयेन्नित्यं द्वैतञ्च गुरुणा सह ।
आत्मवत्सर्वभूतेभ्यो हितं कुर्यात् कुलेश्वरि! ॥ ६० ॥
आत्मस्थानाञ्च सद्भावैः शुश्रूषा स्याच्चतुर्विधा ।
शुश्रूषयाऽनया देवि ! शिष्यः सन्तोषयेद्गुरुम् ॥ ६१ ॥

शुश्रूषणपरो यस्तु गुरुदेवमहात्मनाम् ।
सद्भक्तिसहिता सा चेत्सर्वकर्मफलप्रदा ॥ ६२ ॥
क्षीयन्ते सर्व पापानि वर्द्धन्ते पुण्यराशयः ।
सिद्ध्यन्ति सर्वकार्याणि गुरुशुश्रूषया प्रिये ! ॥ ६३ ॥
यद्यदात्महितं वस्तु तत्तद्वित्तमवञ्चयन् ।
गुरुदेवार्चको यस्तु तस्य पुण्यं न गण्यते ॥ ६४ ॥
भक्त्या वित्तानुसारेण गुरुमुद्दिश्य यत् कृतम् ।
अल्पे महति यत् पुण्यं तुल्यमाढ्यदरिद्रयो. ॥ ६५ ॥
सर्वस्वमपि यो दद्याद्गुरुभक्तिविवर्जितः ।
शिष्यो न फलमाप्नोति भक्तिरेव हि कारणम् ॥ ६६
यस्मिन् द्रव्ये गुरोरस्ति स्पृहा नानुभवेच्च तत् ।
अवश्यं यदि वाञ्छ्यं स्यादनुभूयात्तदाज्ञया ॥ ६७ ॥
यस्तिलार्धन्तदर्धं वा गुरुस्वमुपजीवति ।
मोहाल्लोभात्स पच्येत नरके च त्रिसप्तके ॥ ६८ ॥
अत्यल्पं हि गुरोर्द्रव्यमदत्त स्वीकरोति यः ।
तिरश्चां योनिमापन्नः क्रव्यादैर्भक्ष्यते प्रिये ! ॥ ६९ ॥
गुरुद्रव्याभिलाषी च गुरुस्त्रीगमनोत्सुकः ।
पतितस्य हि शिष्यस्य प्रायश्चित्तन्न विद्यते ॥ ७० ॥
आज्ञाभङ्गोऽर्थहरणं गुरोरप्रियदर्शनम् ।
गुरुद्रोहमिमं प्राहुर्यः कुर्यात्स तु पातकी ॥ ७१ ॥
स्वद्रव्यविनियोगञ्च निवेद्य स्वगुरौ चरेत् ।
अनिवेद्य तु यः कुर्यात् स भवेद्ब्रह्मघातकः ॥ ७२ ॥
गुरोः स्थानं सम्प्रदायं तद्धर्मं यो विनाशयेत् ।
गुरुभिः स बहिःकार्यो निन्द्यो वन्द्योऽपि पातकी ॥ ७३ ॥
गुरुकोपान्न चान्यायो गुरुद्रोहान्न पातकम् ।
न मृतिर्गुरुनिन्दाया गुरुनष्टान्न चापद. ॥ ७४ ॥
जीवेदग्निप्रविष्टो वा नरः पीतविषोऽपि वा ।
मृत्युहस्तगतो वाऽपि नापराधकरो गुरोः ॥ ७५ ॥
यत्र श्रीगुरुनिन्दा स्यात्पिधाय श्रवणे स्वके ।
सद्यस्तस्मादपक्रामेद्दूरन्न शृणुयाद्यथा ॥ ७६ ॥
गुरोर्नाम जपेत्पश्चात् प्रायश्चित्तं प्रतिक्रिया ।
गुरुमित्रसुहृद्दासदारान् वा नावमानयेत् ॥ ७७ ॥
न निन्देदन्यसमयान् वेदशास्त्रागमादिकान् ।
श्रीगुरोः स्मरण भूषा गुरुनामस्मृतिर्जपः ॥ ७८ ॥

गुर्वाज्ञाकरणं कृत्यं शुश्रूषा वचनं गुरोः ।
विविशुर्देशिकावासं शान्तचित्तोऽतिभक्तिमान् ॥ ७९ ॥
वाहनं पादुकां छत्रं चामरं व्यजनादिकम् ।
ताम्बूलमुज्वल वेष-मुत्सृज्य प्रविशेच्छनैः ॥ ८० ॥
पादुकां वसनं छत्रमासनं यानचामरे ।
दृष्ट्वा गुरोर्नमस्कुर्यान्नात्मभोगाय कामयेत् ॥ ८१ ॥
पादप्रक्षालनं स्नानमभ्यङ्ग दन्तधावनम् ।
मूत्रं निष्ठीवनं क्षौरसमयं स्त्रीनिषेवणम् ॥ ८२ ॥
वीरासनञ्च दुर्वाक्यमशनं हास्यरोदने ।
केशमोचनमुष्णीषं कञ्चुकं नग्नकन्तथा ॥ ८३ ॥
पादप्रसारणं वाद कलहं दूषणं प्रिये ! ।
अङ्गभङ्गञ्च वाद्यादि करास्फालनधूननम् ॥ ८४ ॥
धूर्तकुर्कुटकालापं गुह्यमित्यादिमम्बिके ! ।
गुरुयोगिमहासिद्धपीठक्षेत्रागमेषु च ॥
नाचरेदाचरेन्मोहाद्देवताशापमाप्नुयात् ॥ ८५ ॥
उपचारं विना तिष्ठेद्गुरोरग्रे कुलेश्वरि ! ।
मुखावलोकी सेवेत तदुक्तञ्च समाचरेत् ॥ ८६ ॥
गुरुणा प्रोक्तकार्येषु नोपेक्षां कारयेत् प्रिये ! ।
सदा यद्यद्गुरुर्ब्रूयात्तत्कार्यमविशंकया ॥ ८७ ॥
निग्रहेऽनुग्रहे वाऽपि गुरुः सर्वस्य कारणम् ।
निःसृतं यद्गुरोर्वक्त्रात् सर्वं शास्त्रन्तदुच्यते ॥ ८८ ॥
गुरोः कार्ये स्वयं शक्तो नापरं प्रेषयेच्छिवे ! ।
बहुकृत्यधरैर्भृत्यैः सहितोऽप्यतिभक्तिमान् ॥ ८९ ॥
गच्छँस्तिष्ठन् स्वपन् जाग्रत् क्षपन् गृहंश्च पूजयन् ।
गुर्वाज्ञामेव कुर्वीत तद्गतेनान्तरात्मना ॥ ९० ॥
अभिमानो न कर्तव्यो जातिविद्याधनादिभिः ।
दासवन्निवसेन्नित्यं शिष्यः श्रीगुरुसन्निधौ ॥ ९१ ॥
छायाभूतोऽपरित्यागी विनीतस्त्वतिशक्तिमान् ।
दिवि गृध्रासने तिष्ठेद्गुरुकार्ये समुत्सुकः ॥ ९२ ॥
स्वकार्यमन्यकार्यं वा शिष्यः श्रीगुरुचित्तवित् ।
गुरुपार्श्वगतो नम्रः प्रच्छन्नवदनो वदेत् ॥ ९३ ॥
सामान्यतो निषेधे च तद्गुरोर्यदि सन्निधौ ।
आचरेद्यदि मूढात्मा दोषः कोटिगुणो भवेत् ॥ ९४ ॥

अनादृत्य गुरोर्वाक्यं श्रृणुयाद्यः पराङ्मुखः ।
अहितं वा हितं वा स रौरवन्नरकं व्रजेत् ॥ ९५ ॥
यत् पापं समवाप्नोति गुर्वग्रेऽनृतभाषणात् ।
गोब्राह्मणवधङ्कृत्वा न तत्पापमवाप्नुयात् ॥ ९६ ॥
स्थानान्तरगतं वाऽपि व्यसने विषमस्थितम् ।
श्रीगुरुन्न त्यजेत् क्वापि तदादिष्टो व्रजेत् प्रिये ! ॥ ९७ ॥
अधःस्थे श्रीगुरावूर्ध्वे न हि तिष्ठेत् कदाचन ।
न गच्छेदग्रतस्तस्य न तिष्ठेदुत्थिते गुरौ ॥ ९८ ॥
शक्तिछायां गुरुछायां देवछायान्न लङ्घयेत् ।
स्वछायां तेषु नो कुर्यात् न स्वपेद्गुरुसन्निधौ ॥ ९९ ॥
भाषणं पठनं गानं भोजनं शयनादिकम् ।
अनादिष्टो न कुर्वीत न चावन्दनपूर्वकम् ॥ १०० ॥
विना गुर्वाज्ञया शिष्यो निःश्वसेदतिशासनात् ।
सर्वं गुर्वाज्ञया कुर्यान् नालिङ्गेत स्त्रियं प्रिये ! ॥ १०१ ॥
भक्त्या प्रणम्य चोत्तिष्ठेत्कृताञ्जलिपुटः प्रिये ! ।
पश्चात् पादेन निर्गच्छेन्नमस्कृत्य गुरोर्गृहात् ॥ १०२ ॥
एकासने नोपविशेद् गुरुणा तत्समैः सह ।
न विशेदासने देवि ! देवतागुरुसन्निधौ ॥ १०३ ॥
गुरौ सिंहासनं देयं ज्येष्ठानामुत्तमासनम् ।
देशासनं कनिष्ठानामितरेषां समाचरेत् ॥ १०४ ॥
जातिविद्याधनाढ्यो वा दूरे दृष्ट्वा गुरुं सदा ।
दण्डप्रणामं कृत्वैकं त्रिः प्रदक्षिणमाचरेत् ॥ १०५ ॥
ततस्त्रिः षट् द्वादश वा ज्येष्ठादिष्वेकमेव वा ।
गुरुं तद्गुरुनाथञ्च वन्देत प्रगुरुं प्रिये ! ॥ १०६ ॥
ततो नमेद्गुरुं सोऽपि गुर्वग्रे तन्निवारयेत् ।
प्रगुरौ सन्निधौ शिष्यः स्वगुरुं मनसा नमेत् ॥ १०७ ॥
गुरुबुद्ध्या नमेत्सर्वं दैवतं तृणमेव च ।
न नमेद्देवबुद्ध्या तु प्रतिमां लोहमृण्मयीम् ॥ १०८ ॥
गुरौ प्रणामत्रितयं ज्येष्ठानामेकमेव च ।
पूज्यानामञ्जलिस्तद्वदन्येषां वाक्यवन्दनम् ॥ १०९ ॥
देवान् गुरुन् रसाचारज्ञानवृद्धांस्तपोधनान् ।
विद्याधिकान् स्वधर्मस्थान्प्रणमेत् कुलनायिके ! ॥ ११० ॥

स्त्रीद्विष्टं गुरुशप्तञ्च पाखण्डपण्डितं शठम् ।
विकर्माण कृतघ्नञ्च नाश्रमस्थञ्च नो नमेत् ॥ ११२ ॥
अनिवेद्य गुरुं भुङ्क्ते यस्त्वेकग्रामसंस्थितम् ।
तेन भुक्तममेध्यं स्यान्मृतो जायेत शूकरः ॥ ११३ ॥
एकग्रामस्थितः शिष्यस्त्रिकालं प्रणमेद्गुरुम् ।
ग्रामान्तरस्थितं शिष्यः प्रणमेत्पञ्चपर्वसु ॥ ११४ ॥
एकयोजनमारभ्य योजनद्वादशावधि ।
दूरदेशे स्थितः शिष्यो यदेच्छा स्यात्तदा व्रजेत् ॥ ११५ ॥
तत्तद्योजनसङ्ख्याकै-र्मासैस्तु प्रणमेद् गुरुम् ।
अतिदूरतरः शिष्यो-यदेच्छा स्यात्तदा व्रजन् ॥ ११६ ॥
रिक्तहस्तस्तु नोपेयाद्राजानं देवतां गुरुम् ।
फलपुष्पाम्बरार्थादीन् यथाशक्ति समर्पयेत् ॥ ११७ ॥
गुरुशक्तिश्च तत्पुत्रो ज्येष्ठो भ्राता गुरोःसमाः ।
आत्मवच्च कनीयांसः पुत्रवत् कुलबालकाः ॥ ११८ ॥
सदाचार्यस्य देवेशि ! गुरुज्येष्ठकनिष्ठयोः ।
गुरुतल्पस्य कुर्वीत प्रणामं स्वगुरोर्यथा ॥ ११९ ॥
वाग्ज्येष्ठश्च क्रमज्येष्ठः कुलज्येष्ठस्तृतीयकः ।
गुरुश्चतुष्टयं देवि ! प्रोक्तं ज्येष्ठचतुष्टयम् ॥ १२० ॥
पतिर्भूत्वा पशुभ्यश्च प्रणामं यः करिष्यति ।
स महापशुरित्युक्तो देवताशापमाप्नुयात् ॥ १२१ ॥
यो गुरुस्थानसम्प्राप्तः पादुकापरिसङ्ख्यया ।
गुरुवत् स तु मन्तव्यो ज्येष्ठैर्वन्द्योऽर्चनप्रिये ! ॥ १२२ ॥
इति ते कथितं किञ्चित् पादुकाचारलक्षणम् ।
समासेन कुलेशानि ! किं भूयः श्रोतुमिच्छसि ? ॥ १२३ ॥

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे श्रीपादुकाचारवर्णन-नामैकविंशोल्लासः ॥ २१ ॥**

## ॥ अथ रसाचारः ॥

## ॥ आगमरहस्ये ॥

वर्णाश्रमाणां सर्वेषामाचारः सद्गतिप्रदः ।
तस्मादाचारवान् देवि ! रसिकानां प्रियो भवेत् ॥ १ ॥
गुरुस्त्रिवारमाचारं कथयेद्यत्नतः शिवे ! ।
न गृह्णाति कुशिष्यश्चेत्तदा पापं गुरोर्न हि ॥ २ ॥

संस्कारेण विहीनत्वात् सतां वाक्यस्य लङ्घनात् ।
आचारवर्जनाद्देवि ! रसिकः पतितो भवेत् ॥ ३ ॥
नित्यनैमित्तिकं किञ्चिन्मन्त्रतन्त्रादिलोपनम् ।
अनर्हं पशुदुःसङ्गं मन्त्रसाङ्कीर्णसम्भवम् ॥ ४ ॥
गुप्तप्रकटसम्भूतं ज्ञानाज्ञानकृतं प्रिये ! ।
एवमादिषु दोषेषु यस्य स्याद्गुरुलाघवम् ॥ ५ ॥
देशकालवयोवृत्तं सम्यज् ज्ञात्वा यथाविधि ।
प्रायश्चित्तं गुरुर्दद्यात्सर्वपापविशुद्धये ॥ ६ ॥
शिष्योऽपि देवि ! तत्प्रोक्तं प्रायश्चित्तं समाचरेत् ।
अथवा सर्वपापेभ्यो गुरोर्नामजपाच्छुचिः ॥ ७ ॥
जाम्बूनदस्य कालुष्यं परिशुद्धं यथाग्निना ।
आचारस्य च मालिन्यं प्रायश्चित्ताग्निना दहेत् ॥ ८ ॥
पदवाक्यप्रमाणज्ञाः श्रुतिस्मृत्यर्थवेदिनः ।
रसाभिज्ञानभिन्नाश्चेत्तत्सङ्गं वर्जयेत्प्रिये ! ॥ ९ ॥
सत्कुले तु प्रसूता वा वृद्धाः स्वाचारवर्त्तिनः ।
त्वत्सेवाविमुखाः स्युश्चेत्तत्सङ्गं वर्जयेत् प्रिये ! ॥ १० ॥
स्त्रीपुत्रमित्रबन्धूनां स्निग्धानामपि पार्वति ! ।
रसाचारानभिज्ञानां सङ्गतिं वर्जयेत् प्रिये ! ॥ ११ ॥
आसनम्भोजनं पात्रमम्बरं शयनादिकम् ।
अनभिज्ञैरनर्हैश्च सङ्कुरन्नैव कारयेत् ॥ १२ ॥
गुरुशक्तिसुतानाञ्च गुरुज्येष्ठकनिष्ठयोः ।
स्वज्येष्ठस्यापि चोच्छिष्टं खादेन्नान्यस्य पार्वति ! ॥ १३ ॥
आत्मोच्छिष्टन्न दातव्यं परकीयन्न भक्षयेत् ।
उच्छिष्टम्भक्षयेत् स्त्रीणान्ताभ्यो नोच्छिष्टमर्पयेत् ॥ १४ ॥
कनिष्ठानां स्वशिष्याणां दद्यात्स्वोच्छिष्टमम्बिके ! ।
दद्यात् स्नेहेन योऽन्येभ्यः स भवेदापदाम्पदम् ॥ १५ ॥
असमोच्छिष्टमन्नादि यो गृह्णाति विमूढधीः ।
स्नेहाल्लोभाद्भयाद्वाऽपि देवताशापमाप्नुयात् ॥ १६ ॥
न कुर्याद्रासमध्ये तु क्वचिन्निष्ठीवनादिकम् ।
अतिहास्यन्न कुर्वीत शिवशक्तिसमागमे ॥ १७ ॥
स्त्रियो वा पुरुषाः षंढाश्चाण्डाला वा द्विजोत्तमाः ।
रासमध्ये न भेदोऽस्ति सर्वे शक्तिशिवात्मकाः ॥ १८ ॥
नगरीनिर्झराद्यम्बु गङ्गां प्राप्य यथैकतां ।
याति श्रीरासमध्ये तु जातिभेदस्तथा न हि ॥ १९ ॥

स्वर्गादिपुण्यलोकेषु देवादन्यो यथा न हि ।
तथैव रासमध्येऽपि मानवाः सर्वदेवताः ॥ २० ॥
जातिभेदो न रासेऽस्ति शिवशक्तिसमाः स्मृताः ।
वेदेऽपि स्थितमेवं हि 'सर्वं ब्रह्मेति' चाब्रवीत् ॥ २१ ॥
बहुनाऽत्र किमुक्तेन रासमध्ये कुलेश्वरि ! ।
मद्रूपाः पुरुषास्सर्वे त्वद्रूपाः प्रमदाः स्मृताः ॥ २२ ॥
रासमध्ये तु मूढात्मा जातिभेदं करोति यः ।
तं भक्षयन्ति योगिन्यस्त्वां शपे कुलनायिके ! ॥ २३ ॥
स्त्रीणामन्यतमं स्थानं पुरुषाणां तथा पृथक् ।
अथवा मिथुनीकृत्य क्रमात्समुपवेशयेत् ॥ २४ ॥
पङ्क्त्याकारेण वा सम्यक् चक्राकारेण वा प्रिये ! ।
शिवशक्तिधिया सर्वान् रासमध्ये समर्चयेत् ॥ २५ ॥
अवियुक्तौ यथैवावां लक्ष्मीनारायणौ प्रिये ! ।
यथा वाणीशतानन्दौ तथा श्रीरसिकौ स्मृतौ ॥ २६ ॥
न चक्राङ्कं न पद्माङ्कं न वज्राङ्कमिदं जगत् ।
लिङ्गाङ्कञ्च भगाङ्कञ्च तस्माच्छक्तिशिवात्मकम् ॥ २७ ॥
शिवशक्तयुक्तसंयोगो यस्मिन् काले प्रजायते ।
सा सन्ध्या रसनिष्ठानां समाधिः सोऽभिधीयते ॥ २८ ॥
ये गुणाः परमेशस्य पञ्चतत्त्वतनौ शुभाः ।
ते गुणा रसतत्त्वज्ञे तत्त्वज्ञानसमावृताः ॥ २९ ॥
बहुनाऽत्र किमुक्तेन ह्यणिमाद्यष्टसिद्धयः ।
प्रतिहारपदं प्राप्ताः सेवन्ते मन्दिरं चिरम् ॥ ३० ॥
रसपानरतानाञ्च यत् सुखं राजयोगिनाम् ।
तत्सुखं ह्येव मोक्षः स्यात्सत्यमेतद्वरानने ! ॥ ३१ ॥
आदायोपायनं शिष्यः शुद्धात्मा कुसुमादिकम् ।
यथाविहितमात्मानं वित्तशाठ्यविवर्जितः ॥ ३२ ॥
प्रणम्य बहिरष्टाङ्गं प्रविश्यान्तः शनैः प्रिये ! ।
समर्प्योपायनं भक्त्या गुरवे शिवरूपिणे ॥ ३३ ॥
ग्रन्थिताङ्गुष्ठकौ कृत्वा करौ सक्ताग्रतर्जनी ।
जानुभ्यामवनीं गत्वा पञ्चाङ्गं प्रणमेद्गुरुम् ॥ ३४ ॥
पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा ।
मनसा वचसा चेति प्रणामोऽष्टाङ्ग ईरितः ॥ ३५ ॥
बाहुभ्याञ्च सजानुभ्यां शिरसा वचसा दृशा ।
पञ्चाङ्गोऽयं प्रणामः स्यात्पूजार्थं प्रवराविमौ ॥ ३६ ॥

कायिको वाचिकश्चैव मानसस्त्रिविधः स्मृतः ।
नमस्कारस्त्रयस्तत्र ह्युत्तमाधममध्यमाः ॥ ३७ ॥
जानुभ्यामवनिं गत्वा शिरसा स्पृश्य मेदिनीम् ।
क्रियते यो नमस्कार उत्तमः कायिकः स्मृतः ॥ ३८ ॥
जानुभ्यां क्षितिमस्पृष्ट्वा शिरसा स्पृष्टभूमिकः ।
क्रियते यो नमस्कारो मध्यमः कायिकः स्मृतः ॥ ३९ ॥
पुटीकृत्य करौ शीर्षे दीयते च यथा तथा ।
जानुभ्यां क्षितिमस्पृष्ट्वा सोऽधमः कायिकः स्मृतः ॥ ४० ॥
यः स्वयं गद्यपद्याभ्यां घटिताभ्यां नमस्कृतिम् ।
करोति भक्तियुक्तेन वाचिकः स च उत्तमः ॥ ४१ ॥
मनसा दीनतामाप्य मनसैव नमस्कृतिः ।
क्रियते शुद्धभावेन मानसः कथितस्तु सः ॥ ४२ ॥
एकहस्तप्रणामश्च तथैका च प्रदक्षिणा ।
करणे तु स्वपूज्यानां हन्ति पुण्यं पुराकृतम् ॥ ४३ ॥
वामाङ्गुष्ठानामिकाभ्यां दक्षहस्तं प्रसारितम् ।
स्पृष्ट्वा स्वविद्धहृदयः तिष्ठेदानतमस्तकः ॥ ४४ ॥
अज्ञात्वा रसिकाचारमयष्ट्वा गुरुपादुकाम् ।
योऽस्मिच्छास्त्रे प्रवर्तेत तं त्वं पीडयसि ध्रुवम् ॥ ४५ ॥
रसज्ञाने ह्यसिद्धो यस्तत्सुखं भोक्तुमिच्छति ।
स महापातकी देवि ! सर्वकर्मबहिष्कृतः ॥ ४६ ॥
रसिकाचारहीनस्य स्वैरवृत्तेर्दुरात्मनः ।
न सिद्धयो रसभ्रंशस्तत्सङ्गं नैव कारयेत् ॥ ४७ ॥
यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमिहाप्नोति परत्र च परां गतिम् ॥ ४८ ॥
न तस्य सद्गतिः क्वापि तपस्तीर्थव्रतादिभिः ।
तस्माच्छ्रीरसशास्त्रोक्ताचारवान् रसिकः स्मृतः ॥ ४९ ॥
रसिकः पशुधर्मस्थः पक्षद्वयविडम्बकः ।
केशसङ्ख्या स्मृता यावत् तावत्तिष्ठति रौरवे ॥ ५० ॥
योऽन्यदर्शनमाश्रित्य श्रीरसं चेन्निषेवते ।
तदङ्गरोमसङ्ख्यातं प्रेतयोनिषु जायते ॥ ५१ ॥
न ध्यानं न तपश्चर्या न धर्मो न च सत्क्रिया ।
न देवो न गुरुर्नात्मविचारो न च साधकः ॥ ५२ ॥
केवलं विषयासक्तः पतत्येव न संशयः ।
मधुपो यश्च मांसाशी तथैव स्त्रीनिषेवकः ॥ ५३ ॥

स एव रसिकः शुद्धश्चान्ये तु नामधारकाः ।
लिङ्गत्रयविभेदज्ञः षडाधारस्य भेदकः ॥ ५४ ॥
पीठस्थानमुपागत्य महापद्मवनं व्रजेत् ।
आमूलाधारमाब्रह्म-रन्ध्रं गत्वा पुनःपुनः ॥ ५५ ॥
चिच्चन्द्रः कुण्डलीशक्तिः सामरस्यसुखोदयः ।
व्योमपङ्कजनिष्पन्दसुधापानरतो भवेत् ।
मधुपानमिदं प्रोक्तमितरे मद्यपायिनः ॥ ५६ ॥
पुण्यापुण्यपशुं हत्वा ज्ञानखड्गेन योगवित् ।
परे लयति यश्चित्तं पलाशी स निगद्यते ॥ ५७ ॥
मनो ज्ञानेन्द्रियं गन्धं संयम्यात्मनि योजयेत् ।
मांसाशी स भवेद्देवि ! शेषाः स्युः प्राणिहिंसकाः ॥ ५८ ॥
अप्रबुद्धा पशोः शक्तिः प्रबुद्धा रसिकस्य च ।
शक्तिं तां सेवयेद्यस्तु स भवेच्छक्तिसेवकः ॥ ५९ ॥
परशक्त्यात्ममिथुनसंयोगानन्दनिर्भरः ।
य आस्ते मैथुनं तत्स्यादपरे स्त्रीनिषेवकाः ॥ ६० ॥
स्वादिष्टैश्च मदिष्टैश्च द्रव्यैरमृतसन्निभैः ।
मनोहरैर्महेशानि ! रसिकांस्तर्पयेत्सदा ॥ ६१ ॥
रसिकोऽहमिति ज्ञात्वा सर्वज्ञोऽहं गुणान्वितः ।
इति सञ्चिन्त्य योगीन्द्रः श्रीरासोत्सवमारभेत् ॥ ६२ ॥
निरस्तपातका ये च मानवाः पुण्यभागिनः ।
रसज्ञानसुसम्पन्ना भजन्ते त्वां दृढव्रताः ॥ ६३ ॥
दीक्षाभिषेकसहितो रसशास्त्रार्थतत्त्ववित् ।
देवतागुरुभक्तश्च नियतात्मार्चयेच्छिवाम् ॥ ६४ ॥
रसागमरहस्यज्ञो रसिकाराधनोत्सुकः ।
गुरूपदेशसंयुक्तः पूजयेद्रसिकान् प्रिये ! ॥ ६५ ॥
विशुद्धात्माऽतिसंहृष्टः क्रोधलोभविवर्जितः ।
पशुव्रतादिविमुखः स सुखं शिवमर्चयेत् ॥ ६६ ॥
यदा पुमान् कृतार्थः स्याद्रसेन बहुना प्रिये ! ।
तत्प्रसादस्तदा भूयाच्छिवशक्तिसमागतः ॥ ६७ ॥

इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे रसाचारलक्षणे द्वाविंशोल्लासः ॥ २२ ॥

एकान्ते विजने रम्ये देशे बाधाविवर्जिते ।
अमताब्धौ मणिद्वीपे कल्पवृक्षवनोज्ज्वले ॥ १ ॥

वज्रप्राकारसन्दीप्तं स्मरेन्माणिक्यमौक्तिकैः ।
पुष्पमालावितानादि-प्रच्छन्नं यदसंवृतम् ॥ २ ॥
कर्पूरदीपभास्वन्तं धूपामोदसुगन्धितम् ।
तन्मण्डपस्थमात्मानं ध्यात्वाऽनाकुलचेतसा ॥ ३ ॥
श्रीगुर्वनुज्ञया देवि ! **रासक्रीडां** समाचरेत् ।
सुखासने समासीनः प्राङ्मुखो वाप्युदङ्मुखः ॥ ४ ॥
सुस्नानैर्भूतशुद्ध्या च प्राणायामादिभिः प्रिये ! ।
षडङ्गाद्यखिलैर्न्यासै**रात्मशुद्धि**रितीरिता ॥ ५ ॥
सम्मार्जनानुलेपाद्यैर्दर्पणोदरसत्कृतम् ।
वितानधूपदीपाद्यैः पुष्पमालाविशोभितम् ।
पञ्चवर्णरजश्चित्रं **स्थानशुद्धि**रितीरिता ॥ ६ ॥
ग्रथित्वा मातृकावर्णैर्मूलमन्त्राक्षराणि च ।
क्रमोत्क्रमात्त्रिरावृत्त्या **मन्त्रशुद्धि**रियं भवेत् ॥ ७ ॥
पूजाद्रव्याणि सम्प्रोक्ष्य मूलास्त्राभ्यां विधानवित् ।
दर्शयेद्धेनुमुद्राञ्च **द्रव्यशुद्धिः** प्रकीर्तिता ॥ ८ ॥
पीठे देवं प्रतिष्ठाप्य सकलीकृत्य मन्त्रवित् ।
मूलमन्त्रेण दीपिन्या मालिन्या ह्युदकेन च ।
त्रिवारं प्रोक्षयेद्विद्वान् **देवशुद्धि**रियंभवेत् ॥ ९ ॥
**पञ्चशुद्धिं**विधायेत्थं पश्चाद्यजनमारभेत् ।
सा पूजा सफला ज्ञेया ह्यन्यथा निष्फला भवेत् ॥ १० ॥
मण्डलेन विना पूजा विफला कथिता प्रिये ! ।
तस्मान्मडलमालिख्य विधिवत्तत्र पूजयेत् ॥ ११ ॥
अखण्डमण्डलाकारं विश्वं व्याप्य व्यवस्थितम् ।
त्रैलोक्यं मण्डितं येन मण्डलं तत्सदा शिवम् ॥ १२ ॥
सुरूपा तरुणी शान्ताऽनुकूला मुदिता शुचिः ।
शङ्काहीना भक्तियुक्ता रसशास्त्रोपयोगिनी ॥ १३ ॥
अलोलुपा सुशीला च स्मितास्या प्रियवादिनी ।
गुरुदैवतसद्भक्ता सुचित्ताऽलौकिकप्रिया ॥ १४ ॥
विमत्सरा विशेषज्ञा देवताराधनोत्सुका ।
मनोहरा सदाचारा**शक्ति**रेषा सुलक्षणा ॥ १५ ॥
दुष्टोग्रा कर्कशा स्तब्धा कुत्सिता कुलदूषिता ।
दुराचारा पराधीना भीता क्रुद्धातुराऽलसा ॥ १६ ॥
निद्रासक्ता तु दुर्मेधा हीनाङ्गी व्याधिपीडिता ।
दुर्वेषा दुःखिता मूर्खा वृद्धोन्मत्ता रहस्यभित् ॥ १७ ॥

कुतर्का कुटिला लुब्धा निर्लज्जा कलहप्रिया ।
विरूपोन्मार्गगा दुष्टा पंग्वन्धा विकृतानना ॥ १८ ॥
ईदृशीं मन्त्रयुक्तां वा शक्तियागे विवर्जयेत् ।
सर्वसल्लक्षणैर्युक्ता शक्तिः साक्षाद्रसेश्वरी ॥ १९ ॥
श्रुतसङ्गीतसङ्केतः श्रृङ्गारादिरसार्थवित् ।
पदवाक्यप्रमाणज्ञो **रसिकः** स तु कथ्यते ॥ २० ॥
अमदक्रोधदंभाशाहङ्काराः सत्यवादिनः ।
**रसिकेन्द्रा**स्त एवोक्ता ये नेन्द्रियवशानुगाः ॥ २१ ॥
नेदक(?)दुःखसन्तुष्टा निर्द्वन्द्वा गतमत्सराः ।
रसज्ञानरताः शान्तास्त्वद्भक्ता रसिकाश्च ते ॥ २२ ॥
कीर्त्यमाने रसे येषां रोमाञ्चो गद्गदस्वरः ।
आनन्दाश्रूणि देवेशि ! कथिता रसिकास्तु ते ॥ २३ ॥
सर्वधर्माधिको लोके शिवधर्मः शिवोदितः ।
इति ये निश्चयधियः प्रोक्तास्ते रसिकोत्तमाः ॥ २४ ॥
यो भवेद्रसतत्त्वज्ञो रसमार्गविशारदः ।
रसार्चनपरः स स्याद्रसिको, दाम्भिकाः परे ॥ २५ ॥
रसभक्तान् रसज्ञांश्च रसाचारान् रसव्रतान् ।
प्रीतो भवति यो दृष्ट्वा रसिकः स च मे प्रियः ॥ २६ ॥
**तत्त्वत्रयश्रीचरणमूलमन्त्रार्थतत्त्ववित् ।**
**देवतागुरुभक्तश्च रसिकः स्यान्न दीक्षया ॥ २७ ॥**
दुर्लभं सर्वलोकेषु रसाचारस्य लक्षणम् ।
विपाकेनैव पुण्यानां लभ्यते नान्यथा प्रिये ! ॥ २८ ॥
संस्मृतः कीर्त्तितो दृष्टो वन्दितो भाषितोऽपि वा ।
पुनाति रसधर्मिष्ठश्चाण्डालोऽपि यदृच्छया ॥ २९ ॥
सर्वज्ञो वापि मूर्खो वा ह्युत्तमो वाऽधमोऽपि वा ।
देवि ! यत्र रसज्ञानी तत्राहं च त्वया सह ॥ ३० ॥
नाहं वसामि कैलासे न मेरौ न च मन्दरे ।
रसज्ञा यत्र तिष्ठन्ति तत्र तिष्ठामि भामिनि ! ॥ ३१ ॥
सुदूरमपि गन्तव्यं यत्र श्रीरसिको जनः ।
दृष्टव्यश्च प्रयत्नेन तत्र सन्निहितः स्वयम् ॥ ३२ ॥
अतिदूरस्थितो वाऽपि दृष्टव्यो रसदेशिकः ।
समीपे वर्तमानोऽपि न दृष्टव्यः शुचिः प्रिये ! ॥ ३३ ॥

रसज्ञानी वसेद्यत्र स देशः पुण्यभाजनम् ।
दर्शनादर्चनात्तस्य त्रिसप्तकुलमुद्धरेत् ॥ ३४ ॥
रसज्ञानिनमालोक्य स्वसन्तानगृहे स्थितम् ।
नृत्यन्ति पितरः सर्वे यास्यामः परमां गतिम् ॥ ३५ ॥
स धन्यः खलु लोकेऽस्मिन् पुरुषः क्षीणकल्मषः ।
यत्समीपे समायाति रसाचार्यो मुदा प्रिये ! ॥ ३६ ॥
रसिकेन्द्रे समायाते रसिकावसथं प्रति ।
समायाति मुदा देवि ! शिव एव सशक्तिकः ॥ ३७ ॥
प्रविश्य रसयोगीशं भुञ्जन्ते सर्वदेवताः ।
तस्मात्सम्पूजयेद्भक्त्या रसज्ञानेव नापरान् ॥ ३८ ॥
अभ्यर्चयित्वा त्वां देवि ! त्वद्भक्तान्नार्चयन्ति ये ।
पापिष्ठास्त्वत्प्रसादस्य भाजनं न भवन्ति ते ॥ ३९ ॥
नैवेद्यं पुरतो न्यस्तं दर्शनात् स्वीकृतं त्वया ।
रसान् भक्तस्य जिह्वाग्रादश्नासि कमलेक्षणे ! ॥ ४० ॥
त्वद्भक्तपूजनाद्देवि ! पूजितोऽहं न संशयः ।
तस्मान्मम प्रियाकाङ्क्षी त्वद्भक्तानेव पूजयेत् ॥ ४१ ॥
यत् कृतं रसनिष्ठानां तद्देवानां कृतं भवेत् ।
देवा रसप्रियाः सर्वे तस्माद्रसिकमर्चयेत् ॥ ४२ ॥
न तुष्याम्यहमन्यत्र तथा भक्त्या सुपूजितः ।
रसिकेन्द्रेऽर्चिते सम्यक् यथा तुष्यामि पार्वति ! ॥ ४३ ॥
यत् फलं रसिकेन्द्राणां पूजनाल्लभते प्रिये !
तत् फलं नाप्नुयात्तीर्थ-तपोदानमखव्रतैः ॥ ४४ ॥
दत्तमिष्टं हुतं जप्तं तप्तं पूजितमम्बिके ! ।
रसिकस्य भवेद्व्यर्थं रसिकं योऽवमानयेत् ॥ ४५ ॥
श्मशानं तद्गृहं देवि ! स पापी श्वपचाधमः ।
यः प्रविश्य श्रीरसेऽस्मिन् रसाचारन्न वेत्ति चेत् ॥ ४६ ॥
रसनिष्ठान् परित्यज्य यच्चान्यस्मै प्रदीयते ।
तद्दानन्निष्फलं देवि ! दाताऽपि नरकं व्रजेत् ॥ ४७ ॥
भिन्नभाण्डे जलं यद्वच्छिलायामुप्तबीजवत् ।
भस्मनीव हुतं तद्वदहंसे दानमम्बिके ! ॥ ४८ ॥
यथाशक्त्या तु यत्किञ्चिद्यो दद्याद्राजयोगिने ।
विशेषतिथिषु प्रीत्या तत्फलन्नैव गण्यते ॥ ४९ ॥

यो देवि ! स्वयमाहूय रसज्ञाँश्च शुभे दिने ।
अभ्यर्च्य देवताबुद्ध्या गन्धपुष्पाक्षतादिभिः ॥ ५० ॥
नानाविधैर्भक्ष्यभोज्यैः सद्भक्त्या परितोषयेत् ।
तेषु तुष्टेष्वहं तुष्टस्तुष्टाः स्युः सर्वदेवताः ॥ ५१ ॥
अनिखातविनिक्षिप्त-मयत्नेन विवर्द्धितम् ।
परलोकस्य पाथेयं हसवक्त्रेऽर्पितञ्च यत् ॥ ५२ ॥
पापाचारसमायुक्तं सर्वलोकवहिःकृतम् ।
त्रायते देवि ! तद् द्रव्यं राजयोगीश्वरार्पितम् ॥ ५३ ॥
यस्मिन्देशे वसेद्धंसो रसपूजारतः प्रिये ! ।
सोऽपि देशो भवेत्पूतः किंपुनस्तत्पुरःस्थितः ॥ ५४ ॥
राजहंसे सकृद्भुक्ते पुण्यं कोटिगुणं भवेत् ।
किं पुनर्बहुभिर्भुक्तैस्तत्पुण्यं नैव गण्यते ॥ ५५ ॥
तस्मात् सर्वप्रयत्नेन सर्वाऽवस्थासु सर्वदा ।
रसाचाररतो भूत्वा राजयोगिनमर्चयेत् ॥ ५६ ॥
ज्ञानिनाऽज्ञानिना वाऽपि यावद्देहस्य धारणा ।
तावद्वर्णाश्रमाचारः कर्त्तव्यः कर्ममुक्तये ॥ ५७ ॥
कर्मणोदीरितं ज्ञानं ज्ञानेन शिवतां व्रजेत् ।
शिवैक्यमेवमुक्तिः स्यादतः कर्म समाचरेत् ॥ ५८ ॥
कुर्यादनिन्द्यकर्माणि निन्द्यकर्माणि नाचरेत् ।
इहामुत्र सुखाकाङ्क्षी कण्ठस्थासुरपि प्रिये ! ॥ ५९ ॥
सर्वकर्माणि सन्त्यक्तुमशक्य देहधारिणा ।
त्यजेत् कर्मफलं यो वा कर्मभिः स न लिप्यते ॥ ६० ॥
स्वकार्येषु प्रवर्त्तेत स्मरणन्नातिकीर्तयेत् ।
अहम्भावमपास्यैव यः कुर्यात्स न लिप्यते ॥ ६१ ॥
क्रियमाणानि कर्माणि ज्ञानप्राप्तेरनन्तरम् ।
न स्पृशन्त्येव तत्त्वज्ञं जलं पद्मदलं यथा ॥ ६२ ॥
तत्त्वनिष्ठस्य कर्माणि पुण्यापुण्यानि संक्षयम् ।
प्रयान्ति, नैव लिप्यन्ते क्रियमाणानि चाधुना ॥ ६३ ॥
उत्पन्नसहजानन्दतत्त्वज्ञानरतः प्रिये ! ।
सर्वसङ्कल्पहीनो यः स विद्वान् कर्म सन्त्यजेत् ॥ ६४ ॥
ऋतुं प्राप्य यथा वृक्षः पत्रं त्यजति निस्पृहः ।
तत्त्वं प्राप्य तथा हंसस्त्यजेत् कर्मपरिग्रहम् ॥ ६५ ॥
वृथैव यैः परित्यक्तं कर्मकाण्डमपण्डितैः ।
पाखण्डाः पतिता मान्यास्ते यान्ति नरकं प्रिये ! ॥ ६६ ॥

अश्वमेधायुतेनापि ब्रह्महत्यायुतेन वा ।
पुण्यपापैर्न लिप्येत यदा ब्रह्म हृदि स्थितम् ॥ ६७ ॥
पृथिव्यां यानि कर्माणि जिह्वोपस्थनिमित्तकम् ।
जैह्वयौपस्थ्यपरित्यागी कर्मणा किं करिष्यति ॥ ६८ ॥

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे रसाचारवर्णने त्रयोविंशोल्लासः ॥ २३ ॥**

उत्तमा नित्यपूजा स्यात्पर्वपूजा तु मध्यमा ।
अधमा मासपूजा हि मासादूर्ध्वं पशुर्भवेत् ॥ १ ॥
कृष्णाष्टमीचतुर्दश्यावमावास्या च पूर्णिमा ।
सङ्क्रान्तिः पञ्च पर्वाणि तेषु पुण्यदिनेषु च ॥ २ ॥
मासे मासेऽथवा वर्षे स्वजन्मदिवसे प्रिये !
नवरात्रे वसन्तेऽपि सूर्यचन्द्रग्रहे तथा ॥ ३ ॥
सम्पत्तौ च जये लाभे तपोदीक्षाव्रतोत्सवे ।
पीठोपगमने वाऽपि पीठस्थजनदर्शने ॥ ४ ॥
देशिकागमने पुण्यतीर्थदैवतदर्शने ।
एवमादिषु देवेशि ! विशेषदिवसेषु यः ॥ ५ ॥
यथाबलं यथाश्रद्धं यथाद्रव्यं यथोचितम् ।
यथाकालं यथादेशं तथा रासं समाचरेत् ॥ ६ ॥
स्वाचार्येणाथवाऽन्येन कारयेत्तद्रसोत्सवम् ।
स्वयं वा विधिवत्कुर्या-द्वृंदपूजापुरःसरम् ॥ ७ ॥
स त्रैलोक्यमवाप्नोति पुनरावृत्तिवर्जितम् ।
न कुर्याद्रसिको दर्पा-द्देवताशापमाप्नुयात् ॥ ८ ॥
अर्धमासेऽथवा मासे षण्मासे वत्सरेऽपि वा ।
श्रीगुरुं पूजयेद्भक्त्या व्याप्तं तत्स्त्रीसुतादिभिः ॥ ९ ॥
तदभावे तत्कुलीनं तच्छिष्यं वात्मयोगिनम् ।
सन्तोषयेद्भक्ष्यभोज्यै रासोत्सवपुरःसरम् ॥ १० ॥
रोगेष्वापत्सु दोषेषु दुःसङ्गे दुर्निमित्तके ।
पूजयेद्रसिकं वृन्दं देवि ! तद्दोषशान्तये ॥ ११ ॥
पृथक् वा पूजयेद्देवि ! मिथुनीकृत्य वाऽथवा ।
गन्धपुष्पाक्षताद्यैस्तु देवेशि ! समलङ्कृतम् ॥ १२ ॥
भक्ष्यभोज्यादिभिर्नाना पदार्थैः षड्रसान्वितैः ।
रासोल्लासेन सन्तोष्य भक्तिपूर्वं विसर्जयेत् ॥ १३ ॥
सशक्तिकः स्वयं देवि ! रासोल्लाससमन्वितः ।
जीवन्मुक्तः शिवः सोऽत्र परत्र च परः शिवः ॥ १४ ॥

श्रीकण्ठादीनि पञ्चाशन्मिथुनानि समर्चयेत्।
केशवादि-गणेशादि-कामादिमिथुनान्यपि ॥ १५ ॥
रश्मिमालोदितान्येवं मिथुनानि महेश्वरि!।
पूर्वोक्तेन विधानेन रासोत्सवपुरःसरम् ॥ १६ ॥
स्वकार्यफलसिद्ध्यर्थं धनलोभविवर्जितः।
पूजयेद्रसिको भक्त्या यथाविभवविस्तरम् ॥ १७ ॥
अव्याहताज्ञः सर्वत्र पूज्यते देववत् प्रिये!।
तव लोके वसेद्देवि! सर्वलोकनमस्कृतः ॥ १८ ॥
श्रीरासं रसिको मोहाद्विशेषदिवसेषु यः।
न करोति रसज्ञः सन् स भवेत्सर्वथा पशुः ॥ १९ ॥
रासोत्सवे सुनियमं यः करोति रसोत्सुकः।
कुलेशि! समवाप्नोति त्वद्रासससुखसद्म सः ॥ २० ॥
नीचो वाऽपि सकृद्भक्त्या कारयेद्यः कुलार्चनम्।
स सद्भक्तिमवाप्नोति किमुताऽन्ये द्विजातयः ॥ २१ ॥
तस्मात्सर्वप्रयत्नेन सर्वावस्थासु सर्वदा।
रासोत्सवरतो भूयादभीष्टफलसिद्धये ॥ २२ ॥
रासोत्सवाऽधिका भक्तिर्ज्ञानं रासोत्सवाधिकम्।
रासोत्सवाऽधिकं तीर्थं गती रासोत्सवाऽधिका ॥ २३ ॥
रासोत्सवाधिका मुक्तिर्ध्यानं रासोत्सवाधिकम्।
रासोत्सवाऽधिका विद्या कर्म रासोत्सवाधिकम् ॥ २४ ॥
रासोत्सवाऽधिकं भाग्यं पदं रासोत्सवाधिकम्।
रासोत्सवाऽधिको योगः सुखं रासोत्सवाधिकम् ॥ २५ ॥
नास्ति नास्ति पुनर्नास्ति त्वां शपे कुलनायिके!।
बहुनाऽत्र किमुक्तेन रहस्यमिदमम्बिके! ॥ २६ ॥
खभूमिदिग्जलगिरिवनसर्वचराः प्रिये!।
सहस्रकोटियोगिन्यस्तावन्तो भैरवा अपि ॥ २७ ॥
नियुक्ता हि तथा देवि! रासमण्डलरक्षणे।
गुरुभक्तान् सदाचारान् गुप्तहंसानवन्ति हि ॥ २८ ॥
भक्तिहीनान् दुराचारान् नाशयन्ति तु निन्दकान्।
श्रीरासे संस्मरेत्तस्माद्रक्षार्थं योगिनीगणम् ॥ २९ ॥
अनुगृह्णन्ति देवेशि! रसिकान्नात्र संशयः।
श्रीरासदर्शनं देवि! नेत्रयोः पापनाशनम् ॥ ३० ॥

तन्नास्ति चेद् व्रणद्वन्द्वं रसिकस्याक्षियुग्मकम् ।
अनाचारान् सदाचारान् रासस्थान् युगलात्मिकान् ॥ ३१ ॥
शिवशक्तिधिया देवि ! भावयेन्नावमानयेत् ।
अस्नात्वा नासनस्थो वा भुक्त्वा वा प्रलपन्नपि ॥ ३२ ॥
गन्धपुष्पाक्षताकल्पवस्त्राद्यैरनलङ्कृतः ।
अविन्यस्तशरीरो वा न कुर्याद्रासमण्डलम् ॥ ३३ ॥
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः ।
पराङ्मुखो विवादी च न कुर्याद्रासमण्डलम् ॥ ३४ ॥
प्रणम्य प्रविशेद्रासे निर्गच्छेद्वै प्रणम्य च ।
अस्नात्वा चापि भुक्त्वा वाप्यभक्तो वा रसेश्वरि ! ॥ ३५ ॥
यः सेवेत श्रीप्रसादं स दारिद्र्यमवाप्नुयात् ।
एकासने निविष्टा ये भुञ्जानाश्चैकभाजने ॥ ३६ ॥
एकपात्रे पिबन्तो ये ते यान्ति नरकं ध्रुवम् ।
यः सेवेत श्रीप्रसादमेकग्रामे स्थिते गुरौ ॥ ३७ ॥
तद्रसज्ञेऽपि तत्पुत्रे स्वज्येष्ठे रसदेशिके ।
विनानुज्ञा कुलेशानि ! सोऽक्षयं नरकं व्रजेत् ॥ ३८ ॥
उच्छिष्टो न स्पृशेद्रासं तद्वस्तून्यपि सुन्दरि ! ।
रासमध्येऽशुचिधिया करास्यक्षालनादिकम् ॥ ३९ ॥
यः करोति हि मूढात्मा स भवेदापदां पदम् ।
बहिः प्रक्षाल्य पादादि रासवस्तूनि संस्पृशेत् ॥ ४० ॥
निष्ठीवनं मलं मूत्रमधोवायुविसर्जनम् ।
श्रीरासमध्ये यः कुर्यात्स भवेत्सर्वथा पशुः ॥ ४१ ॥
परिहासं प्रलापञ्च वितण्डा-वादभाषणम् ।
औदासीन्यं भयं क्रोधं वर्जयेद्रासमण्डले ॥ ४२ ॥
रासोल्लासान्वितो हंसः प्रीत्या चेत्पशुमीक्षते ।
पठेद्वा पशुशास्त्राणि सङ्गच्छेद्वा पशुस्त्रियम् ॥ ४३ ॥
कुर्यात् पशुप्रसङ्गं वा पशुकार्याणि वाचरेत् ।
धर्मार्थायुर्यशोलाभज्ञानसौख्यादि नश्यति ॥ ४४ ॥
श्रीरासस्थं प्रसादं तु यः पशुभ्यः प्रयच्छति ।
स्नेहाल्लोभाद्भयाद्वापि स भवेत् सर्वतः पशुः ॥ ४५ ॥
रिपुणाऽपि न कर्त्तव्यो वाग्वादो रासमण्डले ।
शिवशक्तिसमं पश्येच्छ्रीहंसो रासमण्डलम् ॥ ४६ ॥
ब्रह्मादिस्तम्बपर्यन्तं सर्वं मे गुरुसन्ततिः ।
तस्य मे सर्वशिष्यस्य को न पूज्यो महीतले ॥ ४७ ॥

यथा स्त्रीपुत्रमित्रादि दृष्ट्वा चेत. प्रहृष्यति ।
तथा चेद्रसिकान्दृष्ट्वा स भवेदावयोः प्रियः ॥ ४८ ॥
अहं गुरुरहं ज्येष्ठो ह्यहं वेद्मीति गर्वितः ।
अहमेव गतिर्येषां रसिका न भवन्ति ते ॥ ४९ ॥
श्रीगुरुं रासशास्त्रञ्च पूज्यस्थानानि यानि च ।
भक्तिपूर्वं पुरा देवि ! प्रणम्य परिकीर्त्तयेत् ॥ ५० ॥
गुरुं नाम्ना न भाषेत जपमालादृते प्रिये ! ।
श्रीनाथ-देव-स्वामीति विवादे साधनं वदेत् ॥ ५१ ॥
श्रीगुरो. पादुकां मुद्रा मूलमन्त्रं स्वपादुकाम् ।
शिष्यादन्यत्र देवेशि ! न वदेदस्य कस्यचित् ॥ ५२ ॥
पारम्पर्यागमाम्नाय-मन्त्राचारादिकं प्रिये ! ।
सर्वं गुरुकुलाल्लब्धं सफलं स्यान्न चान्यथा ॥ ५३ ॥
श्रीरासाश्रयसम्भूतं पुस्तकं शिववत् प्रिये ! ।
नित्यं समर्चयेद्भक्त्या पशुहस्ते न निक्षिपेत् ॥ ५४ ॥
स्वदारवन्निषेवेत रासशास्त्रं कुलेश्वरि ! ।
पशुशास्त्राणि सर्वाणि वर्जयेत् परदारवत् ॥ ५५ ॥
श्वचर्मस्थं यथाक्षीरमपेयं स्याद्विजोत्तमैः ।
तथा पशुमुखाद्धर्मो न श्रोतव्यो हि सेवकै. ॥ ५६ ॥
यः शृणोति रसाचारं यथाशास्त्रञ्च यो वदेत् ।
तावुभौ गच्छतः साक्षात् सुन्दरं रासमण्डलम् ॥ ५७ ॥
अश्रद्धया रसाचारं रसिको नाचरेद्यदि ।
नरकान्न निवर्त्तेत यावदाभूतसम्प्लवम् ॥ ५८ ॥
गुर्वीं हंसीं कुमारीञ्च तथैव व्रतधारिणीम् ।
व्यङ्गाङ्गीं विकृताङ्गीञ्च क्षुब्धामपि न कामयेत् ॥ ५९ ॥
सन्तानं भगिनीं पुत्रीं स्नुषां भ्रातृप्रियामपि ।
न कामयेद्गुरोरग्रे कुर्यान्नान्योपगूहनम् ॥ ६० ॥
ऊढाऽऽहृता च प्रीता च मौल्येन च समाहृता ।
सकृत्कामगता वाऽपि पञ्चधा गुरुयोषितः ॥ ६१ ॥
अलङ्घ्याः सततं पूज्या गुरुवद्गुरुयोषितः ।
कदापि न च सेवेत बलेन कुलसुन्दरीम् ॥ ६२ ॥
रासमध्ये स्वयं क्षुब्धः कामयेन्न कुलेश्वरि ! ।
अर्चयेद्देवताबुद्ध्या श्रीरासे रसिकोत्तमाम् ॥ ६३ ॥
नारीं तु रक्तवसनां दृष्ट्वा वन्देत भक्तितः ।
कुरूपेत्यतिकुष्ठेति न वदेत् कुलयोषितम् ॥ ६४ ॥

गुरुशक्तिसुतज्येष्ठकनिष्ठरसदेशिकान् ।
रासदर्शनशास्त्राणि रासद्रव्याणि सेवकान् ॥ ६५ ॥
प्रेरकान् सूचकांश्चापि वाचकान् दर्शकांस्तथा ।
शिक्षकान् बोधकांश्चापि शिवशक्त्यात्मभावुकान् ॥ ६६ ॥
कन्यां कुमारिकां नग्नामुन्मत्तामपि योषितम् ।
न निन्देन्न जुगुप्सेत न हसेन्नावमानयेत् ॥ ६७ ॥
नाप्रियं नानृतं ब्रूयात् कस्यापि रसिकस्य तु ।
परीक्षयेन्न भक्तानां रसिकानां कृताकृतम् ॥ ६८ ॥
न पश्येद्वनितां नग्नामुन्मत्तां प्रकटस्तनीम् ।
न दिवा रमयेन्नारीं तद्योनिं नावलोकयेत् ॥ ६९ ॥
या काचिदङ्गना लोके सा शक्ति कुलसम्भवा ।
तस्मात् कुप्यति सा सद्यो वनितानामतिक्रमात् ॥ ७० ॥
स्त्रियं शतापराधां वा पुष्पेणापि न ताडयेत् ।
दोषान्नगणयेत् स्त्रीणां गुणानेव प्रकाशयेत् ॥ ७१ ॥

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे रासाचारकथने चतुर्विंशोल्लासः ॥ २४ ॥**

हंसहत्या वृथापानं हंसस्त्रीगमनं तथा ।
हंसद्रव्यापहरणं तत्संयोग च पञ्चमम् ॥ १ ॥
महापातकमित्युक्तं रसिकानां शिवागमे ।
प्रायश्चित्तं भृगोः पातं सन्यासं व्रतधारणम् ॥ २ ॥
तीर्थयात्राभिगमनं रसिकः पञ्च वर्जयेत् ।
देवतागुरुशास्त्रादि-रसाचारविडम्बकः ॥ ३ ॥
विद्याचोरो गुरुद्रोही ब्रह्मराक्षसता व्रजेत् ।
गुरुत्वं स्वयमासाद्य हंसान्निर्भर्त्स्य गर्वत. ॥ ४ ॥
वैकल्यरसशास्त्रार्थं भवन्ति ब्रह्मराक्षसाः ।
एकाक्षरप्रदातारं यो गुरुन्नैव मन्यते ॥ ५ ॥
श्वयोनिशतकं गत्वा चाण्डालत्वमवाप्नुयात् ।
मातरं पितरं जायां भगिनी भ्रातरं सुतम् ॥ ६ ॥
गुरुनिन्दाकुलं देवि ! हन्यात्तमविचारयन् ।
गुर्वर्थं देवतार्थं वा रसिकार्थं रसेश्वरि ! ॥ ७ ॥
रसागमार्थमथवा रसाचारार्थमेव वा ।
देवि निन्दाकरं हत्वा बाधित. स्वयमेव वा॥

यस्त्यजेद्दुस्त्यजान् प्राणान् स परे लीयते प्रिये ! ॥ ८ ॥
एकस्मिन्निधनं यत्र प्रापिते दुष्टचारिणि ।
बहूनां भवति क्षेमं पुण्यं तस्य वधो भवेत् ॥ ९ ॥
श्रीरासे वर्त्तितं यद्यच्छुभं वा यदि वाऽशुभम् ।
कदाचिन्न बहिर्वाच्य-मित्याज्ञा पारमेश्वरी ॥ १० ॥
रासक्रीडाप्रसङ्गस्तु पशूना दुस्तरः प्रिये !
कदाचिन्नैव कुर्वीत शूद्राग्रे वेदपाठवत् ॥ ११ ॥
पीठक्षेत्रागमाम्नाय-सद्विद्याचारसेवकान् ।
रासद्रव्यादिक देवि ! न वदेत्पशुसन्निधौ ॥ १२ ॥
यथा रक्षति चौरेभ्यो धनधान्याम्बरादिकम् ।
सामरस्यं तथा देवि ! पशुभ्य. परिपालयेत् ॥ १३ ॥
निवसन् पशुमध्येऽपि पशुभ्यः परमेश्वरि ! ।
रासं सुगोपयेन्नित्य न्नालिकेरफलाम्बुवत् ॥ १४ ॥
सामरस्यमिदं देवि ! सर्वावस्थासु सर्वदा ।
गोपयेत्सुप्रयत्नेन जननीजारगर्भवत् ॥ १५ ॥
वेदशास्त्रपुराणानि स्पष्टा वेश्याङ्गना इव ।
इयं तु हंसविद्यैव गुप्ता कुलवधूरिव ॥ १६ ॥
सर्वाचारपरिभ्रष्ट. श्रीहंसाचारमाचरेत् ।
हंसाचारपरिभ्रष्टो रौरवन्नरकं व्रजेत् ॥ १७ ॥
अन्यत्र निष्कृतिर्दृष्टा पतितानां परेश्वरि ! ।
रसभ्रष्टस्य देवेशि ! न दृष्टा निःकृतिः क्वचित् ॥ १८ ॥
सामरस्यं समाश्रित्य ह्याचारं यो न पालयेत् ।
यथेष्टाचारिणस्तस्य महापातकिनः प्रिये ! ॥ १९ ॥
आपदो दुरितं रोगा दारिद्र्यं कलहो भयम् ।
देवतानां प्रकोपश्च स्खलितानि पदे पदे ॥ २० ॥
भ्रष्टमानः प्रनष्टश्च तेजोहीनोऽतिदु.खित. ।
निन्दितः सर्वविद्वेष्यो विह्वल. सङ्गवर्जितः ॥ २१ ॥
देशाद्देशान्तरं याति कार्यहानिश्च सर्वदा ।
तस्मादाचारवान् देवि ! श्रीहंसाना प्रियो भवेत् ॥ २२ ॥
हंसाचारेण हंसत्वं रासमण्डलमेलनम् ।
सम्प्राप्नोति च तिर्यक्त्वं रसिकस्तद्विपर्ययात् ॥ २३ ॥
आज्ञासिद्धमिदं तत्त्वमनाचाराद्विनश्यति ।
आचारपालनात् सत्यमाज्ञासिद्धिर्भविष्यति ॥ २४ ॥
नाभिषेको न मन्त्रो वा न शास्त्रपठनादिकम् ।

कारण रासमार्गस्य सदाचारो रसेश्वरि ! ॥ २५ ॥
संस्कारेण विहीनत्वात् सता वाक्यस्य लंघनात् ।
आचारवर्जनाद्देवि ! रसिकः पतितो भवेत् ॥ २६ ॥
काम्यप्रयोगकर्तृणां परलोको न विद्यते ।
प्रयोगसिद्धिरेवैषा फलमन्यत्र चाप्नुयुः ॥ २७ ॥
एकस्यापि विधानस्य न कुत्रापि फलद्वयम् ।
देवेशि ! दृश्यते तस्मान्निष्कामो रसिको भवेत् ॥ २८ ॥
यस्यान्नपानपुष्टाङ्गः कुरुते धर्मसञ्चयम् ।
अन्नदातु. फलं चार्द्धं कर्तुश्चार्द्धफलं प्रिये ! ॥ २९ ॥
तस्मात् सर्वप्रयत्नेन परान्नं वर्जयेत् सुधी. ।
श्रीरासोत्सवकालेऽपि काम्यकर्मस्वपीश्वरि ! ॥ ३० ॥
जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहैः ॥
मनो दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने ! ॥ ३१ ॥
धनार्थं गम्यते तीर्थं दम्भार्थं क्रियते जपः ।
कामार्थं देवतायात्रा कथं सिद्धिर्वरानने ! ॥ ३२ ॥
वादार्थं पठ्यते विद्या परार्थं क्रियते जपः ।
ख्यात्यर्थं दीयते दानं कथं सिद्धिर्वरानने ! ॥ ३३ ॥
मनोऽन्यत्र शिवोऽन्यत्र शक्तिरन्यत्र सुन्दरि ! ।
न सिध्यति वरारोहे ! मन्त्रः कल्पशतैरपि ॥ ३४ ॥
अशौचेन तु देहेन न्यासं देवार्चनं जपम् ।
होमं कुर्वन्ति ये मूढाः सर्वं भवति निष्फलम् ॥ ३५ ॥
विण्मूत्रोत्सर्गशङ्काभिर्युक्तं कम करोति यः ।
तदर्चनादिक सर्वमपवित्रं भवेत् प्रिये ! ॥ ३६ ॥
मलिनाम्बरकेशाङ्गमुखदौर्गन्ध्यसंयुतम् ।
यो भजेत्तद्दहत्याशु देवता न प्रसीदति ॥ ३७ ॥
आलस्यं जृम्भणं निद्रां क्षुतं निष्ठीवनं भयम् ।
नीचाङ्गस्पर्शनं कोपं रासकाले विवर्जयेत् ॥ ३८ ॥
प्रत्याहारः प्रवासश्च प्रजल्पो नियमग्रहः ।
नीचसङ्गश्च लौल्यश्च षड्भी रासो न सिध्यति ॥ ३९ ॥
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृत. ।
अपवित्रकरो यश्चाशुची रासे स निन्दितः ॥ ४० ॥
शान्तः शुचिर्मिताहारो भूशायी भक्तिमान् वशी ।
निर्द्वन्द्वः स्थिरधीर्मौनी संयतात्मा शिवं स्मरेत् ॥ ४१ ॥

विश्वासास्तिक्यकारुण्य-श्रध्धाश्रीशास्त्रनिश्चयः ।
सन्तोषौत्सुक्यहर्षाढ्यो रसिकः कीर्तयेच्छिवम् ॥ ४२ ॥
सुगन्धपुष्पाभरण-वस्त्रादिभिरलङ्कृतः ।
तस्य हस्तगता मुक्तिर्नान्यस्य शतकोटिभिः ॥ ४३ ॥
तन्निष्ठस्तद्गतप्राणस्तच्चित्तस्तत्परायणः ।
तत्पदार्थानुसन्धानं कुर्वाणो रसयेद्रसम् ॥ ४४ ॥
जपाच्छ्रान्तः पुनर्ध्यायेत् तच्छ्रान्तः कीर्तयेच्छिवम् ।
जपध्यानाभियुक्तस्य सुन्दरी सुप्रसीदति ॥ ४५ ॥
निश्शङ्को निर्भयो धीरो निर्लज्जो निष्कुतूहलः ।
निर्णीतवेदशास्त्रार्थो रसिको रसयेद्रसम् ॥ ४६ ॥
आनन्दो ब्रह्मणो रूपं तच्च देहे व्यवस्थितम् ।
तस्याभिव्यञ्जको रासो रसिकस्तत्परायणः ॥ ४७ ॥
सामरस्यसमन्नास्ति ज्ञानमन्यज्जगत्त्रये ।
तस्माद्यो भावयेद्भक्त्या भुक्तिमुक्त्योः स भाजनम् ॥ ४८ ॥
अनधीतोऽप्यशास्त्रज्ञो गुरुभक्तिदृढव्रतः ।
रासोत्सवरतो यस्तु स हंसो रसिकश्च सः ॥ ४९ ॥
चतुर्णामपिवर्णानामाश्रमाणां कुलेश्वरि ! ।
पुस्त्रीनपुंसकानान्तु त्वमेव प्रवरा प्रिये ! ॥ ५० ॥
इहामुत्र सुखायासि पूजिता सुवधूरिव ।
असेविता त्वं देवेशि ! दु खदा कुवधूरिव ॥ ५१ ॥
रासोत्सवान्तरायं तु य करोति हि दुर्मति ।
स याति नरकं घोरमेकविंशतिभि कुलैः ॥ ५२ ॥
तस्मात्सर्वप्रयत्नेन रासोत्सवरतो भवेत् ।
सामरस्यसुखासक्तो नात्र कार्या विचारणा ॥ ५३ ॥
आराधनाऽसमर्थश्च दद्याद्दर्चनसाधनम् ।
यो दातुं नैव शक्नोति कुर्यात्तद्दर्शनं मुदा ॥ ५४ ॥
सम्यक् शतक्रतून् कृत्वा यत् फलं समवाप्नुयात् ।
तत्फलं समवाप्नोति दत्वा श्रीरासासाधनम् ॥ ५५ ॥
सार्धत्रिकोटितीर्थेषु स्नात्वा यत्फलमाप्नुयात् ।
तत् फलं लभते भक्त्या कृत्वा श्रीरासदर्शनम् ॥ ५६ ॥
बहुनोक्तेन किं देवि ! यथाशक्ति ददाति यः ।
रसाचार्यस्य रासार्थं साधनं रसिकस्तु सः ॥ ५७ ॥

यथैवान्तश्चरा राज्ञः प्रियाः स्युर्न बहिश्चराः ।
तथान्तर्भक्तिनिष्ठा ये प्रियास्ते देवि ! नापरे ॥ ५८ ॥
समर्पयन्ति ये भक्त्या सर्वस्वं रसनायके ।
उत्पादयन्ति चानन्दं त्वत्प्रिया रसिकाश्च ते ॥ ५९ ॥
शिवशक्त्योः पराकारं सच्चिदानन्दलक्षणम् ।
सामरस्यानुभावेन परिस्फुरति नान्यथा ॥ ६० ॥
अन्तः स्वानुभवोल्लासो मनोवाचामगोचरः ।
रासोत्सवप्रभावेन जायते नात्र संशयः ॥ ६१ ॥
सेविते सामरस्ये तु रासतत्त्वार्थवेदिनः ।
जायतेऽत्र शिवावेशः सर्वत्र समदर्शिनः ॥ ६२ ॥
तमःपरिवृतं वेश्म यथा दीपेन दृश्यते ।
तथा मायावृतो ह्यात्मा सामरस्यात्प्रकाश्यते ॥ ६३ ॥
मन्त्रसंस्कारसंशुद्ध-रसपानेन सुंदरि ! ।
जायते शिवभावो हि जीवबन्धविमोचकः ॥ ६४ ॥
रासार्थस्फुरणार्थाय मनःस्थैर्यस्य हेतवे ।
जीवभावनिवृत्त्यर्थं रसपानं समाचरेत् ॥ ६५ ॥
अश्रुत्वा सामरस्यार्थमकृत्वा मन्त्रचिन्तनम् ।
पशुपानविधौ पीत्वा हंसोऽपि नरकं व्रजेत् ॥ ६६ ॥
असंस्कारी तु यो लौल्यात् सामरस्यं निषेवते ।
स रसेशि ! ब्रह्महा स्यान्निन्दितः सर्वकर्मसु ॥ ६७ ॥

## इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे ।
## रसाचारवर्णनं नाम पञ्चविंशोल्लासः ॥ २५ ॥

अथ हंसी-भोः परमहंस ! श्रीरासमाहात्म्यमपीषद् ब्रूहि ।

श्रीहंसः-शृणु रसिके ! ।

### श्रीआगमरहस्ये ।

रासेश ! श्रोतुमिच्छामि सर्वदेवदयानिधे ! ।
श्रीरासो हि त्वया नाथ ! सूचितो न प्रकाशितः ॥ १ ॥
श्रीरासस्य च माहात्म्यं सर्वतत्त्वोत्तमस्य च ।
वद मे परमेशान ! यदि तेऽस्ति कृपा मयि ॥ २ ॥

## श्रीईश्वरः ।

शृणु देवि! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
तस्य श्रवणमात्रेण रसिकानां प्रियो भवेत् ॥ ३ ॥
ब्रह्मविष्णुसुरेशानां न मया कथितं पुरा ।
कथयामि तव स्नेहाच्छृणुष्वैकाग्रमानसा ॥ ४ ॥
पारंपर्यक्रमाद्यावद्वक्त्राद्वक्त्रेषु संस्थितम् ।
अकथ्यं परमार्थेन तथापि कथयामि ते ॥ ५ ॥
तस्मात्तद् गोपनीयं हि न देयं यस्य कस्यचित् ।
देयं भक्ताय शिष्याय चान्यथा पतनं भवेत् ॥ ६ ॥
सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।
वैष्णवादुत्तमं शैवं शैवाद्दक्षिणमुत्तमम् ॥ ७ ॥
दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् ।
सिद्धान्तादुत्तमो रासस्तस्मात्परतरं न हि ॥ ८ ॥
गुह्याद् गुह्यतरं देवि! सारात् सारं परात् परम् ।
साक्षात्परशिवादेव कर्णात् कर्णागतं त्विदम् ॥ ९ ॥
मथित्वा ज्ञानमन्थेन वेदागममहार्णवम् ।
सारज्ञेन मया देवि! सामरस्यं समुद्धृतम् ॥ १० ॥
एकतः सकला धर्मा यज्ञतीर्थव्रतादयः
एकतः सामरस्यं तु तत्रेदमधिक प्रिये ! ॥ ११ ॥
प्रविशन्ति यथा नद्य. समुद्रं बहुवक्त्रगाः ।
तथैव समया सर्वे सामरस्ये प्रतिष्ठिताः ॥ १२ ॥
यथा हस्तिपदे लीनं सर्वप्राणिपदं भवेत् ।
दर्शनानि च सर्वाणि सामरस्ये तथा प्रिये ! ॥ १३ ॥
यथा जाम्बूनदेनैव सदृशं लोहमस्ति चेत् ।
तथान्यत्तत्त्वविज्ञानं सामरस्येन नो समम् ॥ १४ ॥
यथाऽमरतरङ्गिण्या न समा. सकलापगाः ।
तथैव समयाः सर्वे श्रीरासेनापि नो समा. ॥ १५ ॥
मेरुसर्षपयोर्यद्वत् सूर्यखद्योतयोरपि ।
तथाऽन्यसमयस्यास्य महेशि! महदन्तरम् ॥ १६ ॥
अस्ति चेत्त्वत्समा नारी मत्समः पुरुषोऽस्ति चेत् ।
श्रीरासेन समं चान्यत् कथयेत्तु तदा प्रिये ! ॥ १७ ॥

सामरस्यं तु मोहेन योऽन्यधर्मेण दुर्मति ।
सकृत् साधारण ब्रूयात्सोऽन्त्यजानां प्रियोऽधम ॥ १८ ॥
सामरस्याधिकं यो वा ज्ञानमन्यद्वदेत्प्रिये ! ।
ब्रह्महत्यादिकं पापं स प्राप्नोति न संशयम् ॥ १९ ॥
सामरस्य-प्रवहणं समारुह्य नरोत्तमः ।
स्वर्गद्वीपान्तरं गत्वा मोक्षरत्नं समश्नुते ॥ २० ॥
दर्शनेषु च सर्वेषु चिराभ्यासेन मानवाः ।
मोक्षं लभन्ते सद्यस्तु श्रीरासेन न संशयम् ॥ २१ ॥
बहुनाऽत्र किमुक्तेन शृणु मत्प्राणवल्लभे ! ।
सामरस्यसमं नान्यत् त्वां शपे कुलनायिके ! ॥ २२ ॥
योगी चेन्नैव भोगी स्याद्भोगी चेन्नैव योगवित् ।
योगभोगात्मकं श्रीमत् सामरस्यं ततोऽधिकम् ॥ २३ ॥
भोगो योगायते साक्षात् पातकं सुकृतायते ।
मोक्षायते च संसारः सामरस्ये कुलेश्वरि ! ॥ २४ ।
ब्रह्मेन्द्राच्युतरुद्रादि-देवता मुनयस्तथा ।
सामरस्यपरा देवि ! मनुजेषु तु का कथा ॥ २५ ॥
विहाय सर्वधर्मांश्च नानागुरुमतानि च ।
श्रीरास हि विजानीयाद्यदीच्छेन्मोक्षमात्मनः ॥ २६ ॥
पूर्वजन्मकृताभ्यासात् सामरस्य प्रकाशते ।
सुप्तोत्थितप्रत्ययव-दुपदेशादिकं विना ॥ २७ ॥
जन्मान्तरसहस्रेषु या बुद्धिर्भविता नृणाम् ।
तामेव लभते जन्तुरुपदेशो निरर्थकः ॥ २८ ॥
शैववैष्णवदौर्गार्क-गाणपत्यात्मसम्भवैः ।
मन्त्रैर्विशुद्धचित्तस्य सामरस्यं प्रकाशते ॥ २९ ॥
सर्वे धर्मा हि देवेशि ! पुनरावर्त्तका. स्मृताः ।
श्रीरासे तु स्थिता ये ते सर्वथाऽप्यनिवर्तकाः ॥ ३० ॥
पुराकृततपोदान-यज्ञतीर्थजपव्रतैः ।
क्षीणाघानां नृणां देवि ! सामरस्यं प्रकाशते ॥ ३१ ॥
त्वमहञ्च महेशानि ! यस्य तुष्टावुभावपि ।
देवतागुरुभक्तस्य सामरस्यं प्रकाशते ॥ ३२ ॥
शुद्धचित्तस्य शान्तस्य धर्मिणो गुरुसेविन ।
अतिगुह्यस्य भक्तस्य सामरस्यं प्रकाशते ॥ ३३ ॥

श्रीगुरौ रसशास्त्रेषु रसिकेषु रसान्वये ।
यस्य भक्तिर्दृढा तस्य सामरस्यं प्रकाशते ॥ ३४ ॥
श्रद्धाविनयहर्षाद्यैः सदाचारदृढव्रतैः ।
गुर्वाज्ञापालकैर्धर्मैः सामरस्यं प्रकाशते ॥ ३५ ॥
अनर्हे तत्त्वविज्ञानं न तिष्ठति कदाचन ।
तस्मात्परीक्ष्य वक्तव्य सामरस्यं मयोदितम् ॥ ३६ ॥
न ब्रूयात्सामरस्यं तु ह्ययोग्ये शिवशासनम् ।
आज्ञाभङ्गं तु यः कुर्याद्देवताशापमाप्नुयात् ॥ ३७ ॥
अबोध्य समयाचारं सामरस्यं वदेद्यदि ।
स गुरुश्चापि शिष्यश्च रसिकोऽपि भवेत् पशु. ॥ ३८ ॥
बोधयित्वा गुरुः शिष्य सामरस्यं प्रकाशयेत् ।
लभेते तावुभौ साक्षा-द्रसिकौ रासमण्डलम् ॥ ३९ ॥
अनायासेन संसारसागरं तर्त्तुमिच्छति ।
सामरस्यमिदं ज्ञात्वा तरत्येव न संशयः ॥ ४० ॥
सामरस्येन संसारमार्गान्मुक्तिपदं व्रजेत् ।
अचिरान्नात्र सन्देह. सामरस्यं श्रयेत्तत. ॥ ४१ ॥
रासशास्त्रमनादृत्य पशुशास्त्राणि योऽभ्यसेत् ।
स्वगृहे पायसं त्यक्त्वा भिक्षामटति दुर्मतिः ॥ ४२ ॥
विहाय सामरस्यं यः पशुधर्मपरो भवेत् ।
करस्थ रत्नमुत्सृज्य काचखण्डं स मृग्यति ॥ ४३ ॥
सन्त्यज्य य सामरस्यं पशुधर्मपरो भवेत् ।
स धान्यराशिमुत्सृज्य पांसुराशीन्निरीक्षते ॥ ४४ ॥
रासान्वयं तिरस्कृत्य यो वाऽन्यान्वयमीक्षते ।
तटाकादिव तृष्णार्त्तो मृगतृष्णां प्रधावति ॥ ४५ ॥
यथेन्द्रजालजा अर्थाः क्षणमेव सुखावहा· ।
श्रीरासादन्यसमयास्तादृशाः कुलनायिके ! ॥ ४६ ॥
सामरस्यमजानन् यो मोक्षमिच्छति दुर्मतिः ।
पारावारमपारं स पाणिभ्यां तर्त्तुमिच्छति ॥ ४७ ॥
यो वान्यदर्शनेभ्यश्च भुक्तिं मुक्तिं च काङ्क्षति ।
स्वप्नलब्धधनेनैव धनवान् स भवेद्यदि ॥ ४८ ॥
शुक्तौ रजतवद् भ्रान्तिर्यथा जायेत सुन्दरि ! ।
तथान्यसमयेभ्यश्च भुक्तिर्मुक्तिः प्रशास्यते ॥ ४९ ॥

सर्वकर्मविहीनोऽपि वर्णाश्रमविवर्जितः ।
रासनिष्ठो रसेशानि ! भुक्तिमुक्त्योः स भाजनम् ॥ ५० ॥
रासज्ञानविहीनोऽपि रासभक्ताश्रयो भवेत् ।
सोऽपि सद्गतिमाप्नोति किमु तस्य परायणः ॥ ५१ ॥
निन्दन्तु बान्धवाः सर्वे त्यजन्तु स्त्रीसुतादयः ।
जना हसन्तु मां दृष्ट्वा राजानो दण्डयन्तु वा ॥ ५२ ॥
सेवे सेवे पुनः सेवे त्वामेव परदेवते ! ।
त्वत्पदन्नैव मुञ्चामि मनोवाक्कायकर्मभिः ॥ ५३ ॥
एवमापद्गतस्यापि यस्य बुद्धिः सुनिश्चला ।
स तु सम्पूज्यते देवैर्जीवन्मुक्तः शिवः स्वयम् ॥ ५४ ॥
रोगदारिद्र्यदुःखाद्यैः पीडितोऽप्यनिशं शिवे ! ।
यस्त्वामुपास्ते सद्भक्त्या सोऽश्नुते शाश्वतं पदम् ॥ ५५ ॥
जनाः स्तुवन्तु निन्दन्तु लक्ष्मीस्तिष्ठतु गच्छतु ।
मृत्युरद्य युगान्तेऽस्तु रसं प्राप्य न वर्जयेत् ॥ ५६ ॥
नार्थलोभान्न च क्रोधान्न द्वेषान्न च मत्सरात् ।
न कामान्न भयाद्वापि रासं प्राप्य परित्यजेत् ॥ ५७ ॥
यो ज्ञात्वा नार्चयेत्त्वा तु सामरस्यसमाश्रितः ।
व्यर्थं तद् ज्ञानमात्रेण भूभारेणात्मशत्रुणा ॥ ५८ ॥
पुलका इव धान्येषु जात्यन्धा इव जन्तुषु ।
बुद्बुदा इव तोयेषु ये रासविमुखाः क्षितौ ॥ ५९ ॥
तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः ।
स जीवति मनो यस्य सामरस्ये व्यवस्थितम् ॥ ६० ॥
सामरस्यविहीनस्य दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ६१ ॥

**इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे रासमाहात्म्ये षड्विंशोल्लासः ॥ २६ ॥**

गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा ।
रासेश्वरि ! रसाज्ञस्य तत् पशोरिव जीवितम् ॥ १ ॥
विद्वानपि च मूर्खोऽसौ धार्मिको वाऽप्यधार्मिकः ।
व्रतस्थोऽप्यव्रतस्थः स यो रासविमुखो नरः ॥ २ ॥
जातास्त एव जगति जन्तवः साधुजीविनः ।
सामरस्यपरा देवि ! शेषाः सूकरगर्दभाः ॥ ३ ॥

स पुमानुच्यते सद्भिः सामरस्यपरायण ।
अपरस्तु परं पृथ्व्यामस्थिकूटस्त्वचावृतः ॥ ४ ॥
चतुर्वेदी रसाज्ञानी श्वपचादधमः स्मृत ।
श्वपचश्चेद्रसज्ञानी ब्राह्मणादतिरिच्यते ॥ ५ ॥
गुरुकारुण्यपूतस्तु दीक्षानिर्धूतकल्मष. ।
सामरस्यरतो देवि ! रसिक स च नेतर. ॥ ६ ॥
रसिकः सामरस्यं यो न पश्यति न वन्दते ।
न पूजयति धिक् तस्य तत् काकस्येव जीवितम् ॥ ७ ॥
ते वन्द्याः पुण्यकर्माणस्ते सन्तस्ते च योगिनः ।
येषां भाग्यवशाद्देवि ! सामरस्यं प्रकाशते ॥ ८ ॥
ते शुद्धास्ते महात्मान कृतार्थास्ते नरोत्तमा. ।
येषामुत्पद्यते चित्ते सामरस्यं मयोदितम् ॥ ९ ॥
सर्वक्षेत्राधिगमनं सर्वतीर्थावगाहनम् ।
यत् सर्वयज्ञकरणं सामरस्यप्रवेशनम् ॥ १० ॥
प्रविशन्ति परारासं ये वा सुकृतिनो नराः ।
ते पुनर्जननीगर्भं न विशन्ति कदाचन ॥ ११ ॥
प्रसङ्गेनापि यः कश्चित् सामरस्यमितीरयेत् ।
सफलं जीवितं तस्य भासते त्वदनुग्रहात् ॥ १२ ॥
रासज्ञस्य रसेशानि ! नान्यधर्मैः प्रयोजनम् ।
रासाज्ञस्याऽपि रासेशि ! नान्यधर्मैः प्रयोजनम् ॥ १३ ॥
चिरायासाल्पफलदं काङ्क्षन्ते समयं जनाः ।
सुखेन सद्य. फलदं रासं कोऽपि न वेत्त्यहो ॥ १४ ॥
रसज्ञोऽपि हि सर्वज्ञो वेदशास्त्रोज्झितोऽपि वा ।
वेदशास्त्रागमज्ञोऽपि रासाज्ञोऽप्यज्ञ एव हि ॥ १५ ॥
जानन्ति रासमाहात्म्य त्वद्भक्ता एव नापरे ।
चकोरा एव जानन्ति नान्ये चन्द्ररुचे रुचिम् ॥ १६ ॥
रसज्ञा एव तुष्यन्ति श्रुत्वा रासकथां प्रिये ! ।
अल्पाः कुल्या विवर्द्धन्ते ज्योत्स्नया किं समुद्रवत् । १७ ॥
नान्यधर्मे प्रवर्त्तन्ते रसिकाः सारवेदिनः ।
भृङ्गाः पुष्पान्तरं यद्वन्मन्दारामोदसेविनः ॥ १८ ॥
मानयन्ति हि सर्वज्ञाः सामरस्य न चेतरे ।
शिवः शिरस्यधत्तेन्दुं सैंहिकेयो गिलत्यहो ॥ १९ ॥

अभिज्ञा एव जानन्ति नैवाऽज्ञा रासदर्शनम् ।
जलमिश्रपयःपानं पक्षी को वेत्ति हंसवत् ॥ २० ॥
शिवशक्तिमया लोकाः सर्वत्रैव प्रतिष्ठिता. ।
तस्मात् सर्वाधिकं चैतत् सर्वसाधारणं कथम् ॥ २१ ॥
षट् दर्शनानि मेऽङ्गानि पादौ कुक्षी करौ शिरः ।
तेषु भेदं तु यः कुर्यान्मदङ्गच्छेदको हि सः ॥ २२ ॥
एतानि सामरस्यस्य षडङ्गानि भवन्ति हि ।
तस्मान्मदात्मको रासः प्रिये ! रासात्मकोऽप्यहम् ॥ २३ ॥
दर्शनेष्वखिलेष्वेकं फलं चैकं हि दैवतम् ।
भुक्तिमुक्तिफलं सर्वं रासेऽस्मिन् दैवतं प्रिये ! ॥ २४ ॥
रासः प्रमाणतां याति प्रत्यक्षफलदो यतः ।
लोकधर्मविरुद्धोऽपि सिद्धयोगीश्वरीमते ॥ २५ ॥
प्रत्यक्षं च प्रमाणानां सर्वेषा प्रवरं प्रिये ! ।
उपलब्धिबलात्तस्य हताः सर्वे कुतार्किकाः ॥ २६ ॥
परोक्षे को नु जानीयात् कस्य किन्नु भविष्यति ।
यद्वै प्रत्यक्षफलदं तदेवोत्तमदर्शनम् ॥ २७ ॥
सामरस्यमिदं ज्ञात्वा मुच्यन्ते सर्वमानवा ।
इति मत्वा कुलेशानि ! मया लोके सुगोपितम् ॥ २८ ॥
यस्य जन्मान्तरे पापकर्मबन्धोऽधिको भवेत् ।
न तस्य गुरुकारुण्यं सामरस्यं प्रकाशते ॥ २९ ॥
यथान्धा नैव पश्यन्ति सूर्यं सर्वप्रकाशकम् ।
तथा रासं न जानन्ति तव मायाविमोहिताः ॥ ३० ॥
शैववैष्णवबौद्धादि-दर्शनान्यतिभक्तित ।
भजन्ते मानवा नित्यं वृथायासफलानि हि ॥ ३१ ॥
वेदशास्त्रागमैः प्रोक्तं भोगमोक्षैकसाधनम् ।
मूढा हसन्ति निन्दन्ति मत्प्रियं तव दर्शनम् ॥ ३२ ॥
भ्रामितास्ते मया देवि ! पशव. शास्त्रकोटिषु ।
सामरस्यं न जानन्ति वृथाज्ञानाभिमानिनः ॥ ३३ ॥
मयैव पूर्वमुक्तानि पशुशास्त्राणि सुन्दरि ! ।
मूर्त्यन्तरं तु गत्वैव मोहनाय दुरात्मनाम् ॥ ३४ ॥
महापापवशान्नृणां तेषु वाञ्छाऽभिजायते ।
तेषां हि सद्गतिर्नास्ति कल्पकोटिशतैरपि ॥ ३५ ॥

प्रेर्यमाणोऽपि पापात्मा रासे नैव प्रवर्त्तते ।
वार्यमाणोऽपि पुण्यात्मा रासमेवावलम्बते ॥ ३६ ॥
सामरस्येन देवत्वं देवाः सम्प्रतिपेदिरे ।
मुनियोगीश्वराद्यास्तु संसिद्धिं परमां गताः ॥ ३७ ॥
पशुव्रताद्यभिरताः सुलभा दाम्भिका भुवि ।
ये सामरस्यं सेवन्ते ते महान्तोऽतिदुर्लभाः ॥ ३८ ॥
मानवा वहवः सन्ति मिथ्यातत्त्वार्थवादिनः ।
दुर्लभोयं कुलेशानि! सामरस्यविशारदः ॥ ३९ ॥
यथा रोगातुराः केचिन्मानवा. कुलनायिके ! ।
दिव्यौषधं न सेवन्ते महाव्याधिविनाशनम् ॥ ४० ॥
तद्व्याधिवर्धनापथ्यं कुर्वन्ति हि कुभेषजम् ।
तथैव जन्ममरणाकृतिसंसारविक्रियाम् ॥ ४१ ॥
समाचरन्ति सततं त्वत्कारुण्यविवर्जिताः ।
न भजन्ते सामरस्यं भवरोगविमोचकम् ४२ ॥
यथा मरीचलवणलशुनादीन् सुवाणिजात् ।
पदार्थान् मानवाः प्रीत्या याचन्ते रसनायिके ! ॥ ४३ ॥
अनर्घ्याणि तु रत्नानि न याचन्ते हि केचन ।
तथैव पशुशास्त्राणि कर्मायासफलानि च ॥ ४४ ॥
परिपृच्छन्ति मूढा हि तवमायाविमोहिताः ।
सामरस्यं न पृच्छन्ति भुक्तिमुक्तिफलप्रदम् ॥ ४५ ॥
कस्तूरीं कर्दमधिया कर्पूरं लवणेच्छया ।
शर्करां सैकतभ्रान्त्या मणिं काचधिया यथा ॥ ४६ ॥
यथा दृष्टं तु मनुते करस्थमपि पामर. ।
तथा रासं न जानन्ति त्वत्प्रसादविवर्जिताः ॥ ४७ ॥
अहो मोहस्य माहात्म्यं त्वन्मायाजनितस्य च ।
किन्नु वक्ष्यामि रासेशि ! मोहयेदमरानपि ॥ ४८ ॥
गुरुकारुण्यलब्धं तु सुन्दरं रासदर्शनम् ।
त्वद्भक्ता एव जानन्ति नेतरे भुक्तिमुक्तिदम् ॥ ४९ ॥
गुरूपदेशरहिता न जानन्ति हि केचन ।
मोहयन्ति जनान् केचित् स्वयं पूर्वविमोहिताः ॥ ५० ॥
दुराचाररताः केचित् वञ्चयन्ति हि पामरा. ।
यथाभूतो भवेत्स्वामी सेवकाः स्युस्तथाविधाः ॥ ५१ ॥

बहवः सामरस्यं तु मिथ्याज्ञानविडम्बकाः ।
स्वबुध्या कल्पयिष्यन्ति पारम्पर्यविवर्जिताः ॥ ५२ ॥
अन्यथा सामरस्यैष स्वाचारः कथितो मया ।
विचरन्त्यन्यथा देवि ! मूढाः पण्डितमानिनः ॥ ५३ ॥
कृपाणधारागमनाद्व्याघ्रकर्णावलम्बनात् ।
भुजङ्गधारणान्नूनमशक्यं रासवर्त्तनम् ॥ ५४ ॥
बहुनाऽत्र किमुक्तेन सारमेकं शृणु प्रिये ! ।
जीवन्मुक्तिसुखोपायं सामरस्ये सुगोपितम् ॥ ५५ ॥
यन्मुमुक्षोः फलं देवि ! कनकस्येव सौरभम् ।
रासज्ञे ह्यूर्ध्वविद्या चेत् ज्ञानं तत्फलमुत्तमम् ॥ ५६ ॥
रासशास्त्राणि सर्वाणि मयैवोक्तानि मानिनि ! ।
प्रमाणानि न सन्देहो न हन्तव्यानि हेतुभिः ॥ ५७ ॥
इति ते कथितं किञ्चिद्रासमाहात्म्यमम्बिके ! ।
समासेन कुलेशानि ! किं भूयः श्रोतुमिच्छसि ॥ ५८ ॥

**इति श्रीहंसमिट्टुप्रकाशिते श्रीहंसविलासे रासमाहात्म्यकथनं नाम सप्तविंशतितमोल्लासः ॥ २७ ॥**

अङ्गने ! सङ्कीर्णमेतदस्मद्गदितम् ?

प्रिये ! प्रोक्तपरमार्थप्राप्तिहेतुभूताचारद्वयं श्रीरासमाहात्म्यं च प्रत्यवमृश्य प्रत्यात्थेत्युक्त्वा स सन्तस्थे ।

अथ हंसी । वरं वरं वल्लभ ! लब्धं मया मधुरं लब्धवर्णलपितमसन्दिग्धम् ।

अधुना 'रासज्ञे ह्यूर्ध्वविद्या' चेदित्युक्तत्वात् तद्रहस्यं किमप्यन्यत्पुरः पठ्यताम् ।

श्रीहंसः । वेत्थ विदुषि ! विशदमपरं पुनः इत्थमादावर्थापिताचारद्वयं श्रीरासमाहात्म्यं चोपदिश्य । तत्राप्याचारपालने शक्तिपातानुसारतः शिष्यस्वरूपं परामृश्य तदनुरूपाम्नायमन्त्रश्चोपदेश्यः ।

मनस्विनी । मनीषिन् ! कीदृग्विध आम्नायमन्त्रभेदः ? प्रकाश्यतां परमकृपया किं कर्याम् ।

श्रीहंसः । मनीषिणि ! मा शङ्कस्व, शृणु सावधानेनाम्नायाणुलक्षणं वर्णयामः ।

प्रमदे ! मन्त्रास्त्रिविधा, आम्नायोदिताः स्मृतिसूचिताः पुराणप्रदर्शिताश्चेति । उत्तमादिभेदेन तत्राप्याम्नायमन्त्राणां श्रैष्ठ्यम् ।

तत्राप्याम्नायाश्चत्वारः, ऋग्यजुःसामाथर्वनामभिः, तद्यथा । पूर्वदक्षिणपश्चिमोत्तरभेदेन । पूर्वाम्नाय ऋग्वेदः । दक्षिणाम्नायो यजुर्वेदः । पश्चिमाम्नाय सामवेदः । उत्तराम्नायोऽथर्ववेदः । आम्नायः श्रुति वेदः इति पर्यायवाचकाः ।

अथापि कश्चिद्विशेषः श्रूयत । कस्यचित् परमेश्वरस्य निश्वासरूपो वेदः ।

अत्र श्रीसायणाचार्यः ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलञ्जगत्। निर्ममे तमहं वन्दे विद्या
श्वरम् । इत्युक्तवान् ।

आम्नायस्तु श्रीपरमेश्वरेण तदर्थभूतः श्रीप्रियां प्रति प्रव्यक्तमुक्तः ।

आङ्पूर्वो मनिधातुरुपदेशार्थ इत्यत आम्नायवेदयोरीषद्भेदो भासते ।

किञ्च, केवलं वेददर्शिता ये ये मन्त्रास्ते तु धर्मकर्मपराः न मोक्षाय, । कुतस्त
काण्डयोग्यत्वात् । अत, कर्मकाण्डमन्त्रेभ्यो ज्ञानकाण्डमन्त्रा, श्रेष्ठाः । ननु 'मन्त्रे कम
श्रुतेः, तेषामपि कर्मकाण्डत्वं । सत्यं, यद्यपि ज्ञानकाण्डमन्त्रेषु नानाविधानि कर्माण्यु
तदपि तन्मन्त्रदर्शितानि कर्माणि तु मोक्षायैव सन्ति, न पुनर्भोगायेत्याशङ्क्यम्। 'तत्
बन्धाये'त्युक्तेः । कण्टकं कण्टकेन, लोहं लोहेन, मलं मलेनेव ज्ञानकाण्डमन्त्रकर्मभिः ध
मन्त्रकर्मणामुत्सेधः ।

ननु, ज्ञानकाण्डमन्त्रकर्मणामपि फलं मोक्षलक्षणम् । मैवं । यथा वेणुद्वयसङ्घ
वह्निस्तद् द्वयं प्रशमय्य स्वयञ्च शाम्यति । तद्वद्धर्मज्ञानकर्मोत्थितविवेकस्तत्कर्मद्वयफ
स्वयञ्च शाम्येत् ।

न तु ज्ञानमन्त्रकर्मणां मोक्षलक्षणं फलं भविष्यतीत्याशङ्क्यम्। पञ्जरे भग्ने पक्षीव
दग्धे स्वयं मुक्त एव ।

किञ्च, यद्यपि, 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि'ति जैमिनि
काण्डं दूषितम् । तथापि तदसत्, ज्ञानकाण्डमन्त्रकर्मणां ज्ञानमात्रत्वात्, ज्ञानमेव मो
न किञ्चिन्मन्त्रेण कर्मणा वा साध्यमित्यूह्यम् । यथा धर्मकाण्डमन्त्रकर्मभिः नाना फ
न तथा ज्ञानकाण्डमन्त्रादिभिरिक्षुशरलताफलवल्लभ्यमित्यतः ज्ञानकाण्डमन्त्राणां तद्वि
च सर्वतः श्रेष्ठ्यं मुमुक्षुषु । अतो मुमुक्षवस्तु ज्ञानकाण्डमन्त्रकर्मभिरेवोपदेश्या, न ध
मन्त्रादिभिः ।

किञ्च, केवलं वेददर्शितं ज्ञानकाण्डं तु नाञ्जसा स्फुटम् । न च स्त्रीशूद्रादिभि
प्राप्यम् । अतस्तदेव दयालुना श्रीपरमेश्वरेण प्रेयसी प्रति प्रकटीकृत्योपदिष्टं, तदन्यः
काण्डमुपासनाकाण्डं च ।

अत एव श्रीपरमेश्वरस्य स्पष्टवचनमाम्नायः, निश्वासरूपो वेद इति स्पष्ट

किञ्च, केवलवेदमन्त्रेषु ब्राह्मणक्षत्रियवैश्यानामेवाधिकार, , नतु सर्वेषां, नान
स्थितत्वात् । तदर्थभूताम्नायमन्त्रेषु तु सर्वेषां मुमुक्षूणामधिकारः , भेदराहित्यात्, वि
श्योदितत्वाच्च । अतः श्रुतिमन्त्रेभ्यः परं श्रेष्ठ्यमाम्नायमन्त्राणाम् ॥

कान्ते ! । केचन बालेशा बलाद्वैदिकमन्त्रा एव मंत्रा इत्यतत्त्वविदो यत्र तत्र ज
हि तेषामत्र परत्र च परं सुखम्। अविवेकित्वात्। वैदिकमन्त्रा एव विशदीकृतविविधाथ
मेश्वरेण स्वाम्नायेषु दयितामुपदिष्टाः । न चैतत् हृदयान्धैरवलोक्यते । किमन्यत् ।

किञ्च, स्मृतिदर्शिताः पुराणेतिहाससमुदीरिताश्चान्येऽखिलमन्त्रास्तु क्षुल्लका अ
क्राः सन्मुमुक्षुभिर्मनसापि न स्मर्त्तव्याः । ते तु सर्वेऽसन्मुमुक्षुयोग्या इत्यर्थः । यत्
र्त्तादिनानामन्त्राणां माहात्म्यबाहुल्यं तत्तद्ग्रन्थोदितं श्रूयते तदप्यसत्। असारस्

त्यर्थबहिर्मुखानामेव तत्सर्वं समञ्जसम्। विशिष्टज्ञानकर्म तु शिवाम्नायेष्वेव दृश्यते। नेतरत्र, इत्यतः श्रुतिस्मृतिपुराणोपपुराणादिप्रदर्शितमन्त्रगणो मुमुक्षुभिर्न कदाचनाङ्गीकरणीयः। न च सद्गुरुभिः स देयः।

किञ्च, श्रीपरमेश्वरदर्शिताम्नाया अपि बहवः सन्ति, तत्तदाम्नायेषु तथाविधा मन्त्रा अप्यनेकशः। कर्माण्यपि विचित्राणि, पृथग्विधं च फलम्। अतो जलमिश्रदुग्धपाने मरालवत्परमचतुर एवाम्नायमन्त्रव्रातेभ्यः सन्मन्त्रं स्वीकुर्वीत।

कथमिति चेच्छृणु। श्रीपरमेश्वरेण ऋगाद्यानां चतुर्णां वेदानामर्थमुन्मथ्य विचित्रमन्त्रतन्त्रादिकमाम्नायेषु चतुर्ष्वभिहितम्। तथैव तेषु कर्मभक्तिज्ञानराजयोगाभिधं तत्त्वमप्याततम्। तथापि प्रेयस्याः स्वान्तमत्यर्थं नो तृप्तम्।

ततः पूर्णप्रेम्णा श्रीप्रियतमेन पुनः पञ्चमसूक्ष्मवेदार्थमखिलमादाय कृत्स्नोपनिषत्सारभूतषोडशमहावाक्यतद्बीजभूतश्रीमदूर्ध्वाम्नायनिर्वर्णनेन श्रीवरवर्णिनीवदनमाह्लादितम्।

किमधिकम्। सकलरहस्यात्यन्तरहस्यरूपेण श्रीमतोर्ध्वाम्नायेन सदृशी न काचन सरस्वतीति सद्रसिकैरनवरतं निर्णेतव्यम्। धन्योऽहममुनोर्ध्वाम्नायेन यस्मिन् श्रीसामरस्यमुल्लसति। नागरि! निश्चितं पूर्वदक्षिणपश्चिमोत्तरलक्षणेषु चतुर्ष्वप्याम्नायेषु ये ये मन्त्रास्तेषु न सम्यक् सामरस्यं दृश्यते। कस्मात्। विभिन्नत्वात्। केचिच्छाक्ताः। अपरे तु केवलं शैवाः। वैष्णवादयोऽपि केचित्। न तु श्रीशक्तिशिवयोरद्वैतरसरूपो मध्वपूपवत्पूर्णोऽणुरवेक्ष्यते। श्रीमत्यूर्ध्वाम्नाये तु श्रीशिवशक्त्योः सामरस्यलक्षणः पारमहंस्यो मन्त्रः प्रोल्लस्यते।

अतः श्रीमदूर्ध्वाम्नाय एव सर्वतः श्रेयान्।

अथ हंसी। सहर्षं, स्वामिन्! संश्रुतमुदीरितमुत्तमोत्तमम्।

किन्तु, निखिलोपनिषदर्थोर्ध्वाम्नायस्य माहात्म्यं श्रोतुमनस्काऽस्मि साम्प्रतम्।

श्रीहंसः। सम्यक् सम्यक्।

### । श्रीपरागमरहस्ये ।

**ईश्वरी ।**

कुलेश! श्रोतुमिच्छामि सर्वाम्नायोत्तमोत्तमम्।
ऊर्ध्वाम्नायं च तन्मन्त्रमाहात्म्यं वद मे प्रभो! ॥ १ ॥

**ईश्वरः ।**

शृणु देवि! प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि।
तस्य श्रवणमात्रेण देवता सुप्रसीदति ॥ २ ॥
वेदशास्त्रपुराणानि प्रकाश्यानि महेश्वरि!।
शैवाद्याश्चागमाः सर्वे रहस्यातिरहस्यकाः ॥ ३ ॥
रहस्यातिरहस्यानि कुलशास्त्राणि पार्वति!।
रहस्यानां रहस्यं च तद्रहस्यमिदं प्रिये! ॥ ४ ॥
ऊर्ध्वाम्नायार्थतत्त्वं हि पूर्णाऽहन्तात्मकं परम्।
सुगोपितं मया यत्नादिदानीं तु प्रकाश्यते ॥ ५ ॥

मम पञ्चमुखेभ्यश्च पञ्चाम्नाया विनिर्गताः ।
पूर्वश्च पश्चिमश्चैव दक्षिणश्चोत्तरस्तथा ॥ ६ ॥
ऊर्ध्वाम्नायश्च पञ्चैते मोक्षमार्गाः प्रकीर्तिताः ।
आम्नाया बहवः सन्ति नोर्ध्वाम्नायेन ते समाः ॥ ७ ॥
आम्नाया बहवो गुप्ता–श्चतुराम्नायभेदजा. ।
अस्मिन् तन्त्रे मयाख्याताः पूर्वं ते कुलनायिके ! ॥ ८ ॥
चतुराम्नायवेत्तारो बहव. सन्ति सुन्दरि ! ।
ऊर्ध्वाम्नायार्थतत्त्वज्ञो विरलः सुरवन्दिते ! ॥ ९ ॥
यावन्तः पांसवो भूमौ तावन्तः समुदीरिताः ।
एकैकाम्नायजा मन्त्रा भुक्तिमुक्तिफलप्रदाः ॥ १० ॥
उपमन्त्राश्च तावन्तः शाश्वताः समुदीरिताः ।
मयैव कथितास्तेऽपि लोकानुग्रहकाङ्क्षया ॥ ११ ॥
सर्वेषामपि मन्त्राणां देवतास्तत्फलप्रदाः ।
आवयोरंशसम्भूतास्ते देवाः समुदीरिताः ॥ १२ ॥
सर्वमन्त्रानहं वेद्मि नान्यो जानाति कश्चन ।
मत्प्रसादेन यः कोऽपि वेत्ति मानवको भुवि ॥ १३ ॥
एकाम्नायञ्च यो वेत्ति स मुक्तो नात्र संशय. ।
किं पुनश्चतुराम्नायवेत्ता साक्षाच्छिवो भवेत् ॥ १४ ॥
चतुराम्नायविज्ञानादूर्ध्वाम्नायः पर. प्रिये ! ।
तस्मात्तमेव जानीयाद्यदीच्छेन्मोक्षमात्मनः ॥ १५ ॥
ऊर्ध्वत्वात्सर्वमन्त्राणामूर्ध्वाम्नायः प्रशस्यते ।
ऊर्ध्वं नयत्यध.स्थं य ऊर्ध्वाम्नाय इतीरित. ॥ १६ ॥
ऊर्जितत्वान्महेशानि ! ध्वस्तसंसारसङ्कटात् ।
ऊर्ध्वलोकैकसेव्यत्वादूर्ध्वाम्नाय उदीरित. ॥ १७ ॥
तस्माद्देवेशि ! जानीहि भोगमोक्षैकसाधनम् ।
सर्वाम्नायपरं पुण्यमूर्ध्वाम्नायं परात्परम् ॥ १८ ॥
सर्वलोकेषु सर्वेभ्यो ह्यहं पूज्यो यथा प्रिये ! ।
आम्नायेषु च सर्वेषु ह्यूर्ध्वाम्नायस्तथा स्मृतः ॥ १९ ॥
देवतानां यथा विष्णुर्ज्योतिषां भास्करो यथा ।
तीर्थानां तु यथा काशी स्वर्नदी सरितां यथा ॥ २० ॥
अश्वमेधः क्रतूनाञ्च पाषाणानां यथा मणिः ।
पर्वतानां यथा मेरुस्तरूणां चन्दनं यथा ॥ २१ ॥

यथा रसानां माधुर्यं लोहानां काञ्चनं यथा ।
चतुष्पदां यथा धेनुर्यथा हंसश्च पक्षिणाम् ॥ २२ ॥
आश्रमाणां यथा भिक्षुर्वर्णाना ब्राह्मणो यथा ।
मनुष्याणां यथा राजाऽवयवानां यथा शिरः ॥ २३ ॥
आमोदानां तु कस्तूरी यथा काञ्ची पुरीषु च ।
तथैव सर्वमन्त्राणामूर्ध्वाम्नायोऽधिकः प्रिये ! ॥ २४ ॥
नानाजन्मार्जिताचारपुण्यकर्मफलोदयात् ।
ऊर्ध्वाम्नायं विजानाति नान्यथा कुलनायिके ! ॥ २५ ॥
धन्यो मनुष्यलक्षेषु जानाति रसदर्शनम् ।
तेषां लक्षेषु यः कश्चिदूर्ध्वाम्नायं प्रवेत्ति हि ॥ २६ ॥
न वेदैर्नागमैः शास्त्रैर्न पुराणैः सुविस्तरैः ।
न यज्ञैर्नतपोभिर्वा न तीर्थैर्व्रतकोटिभिः ॥ २७ ॥
नान्यैरुपायैर्देवेशि ! मन्त्रौषधपुरस्कृतै. ।
आम्नायो ज्ञायते चोर्ध्वः श्रीमद्गुरुमुखं विना ॥ २८ ॥
तमेवान्वेषयेत्तस्मात् सर्वज्ञ करुणानिधिम् ।
सर्वलक्षणसम्पन्न–मूर्ध्वाम्नायार्थकोविदम् ॥ २९ ॥
तस्माद्देवि ! विजानीयादूर्ध्वाम्नायं कुलेश्वरि ! ।
लभ्यते काङ्क्षिता सिद्धि. सत्यं सत्यं वरानने ! ॥ ३० ॥
ऊर्ध्वाम्नाय विजानाति यः सम्यक् श्रीगुरोर्मुखात् ।
शास्त्रमार्गेण स नरो जीवन्मुक्तो न संशयः ॥ ३१ ॥
इममाम्नायमूर्ध्वं यो विजानाति हि तत्त्वत. ।
स वन्द्यः स गुरुः सोऽर्च्यः स दैवज्ञः स मान्त्रिकः ॥ ३२ ॥
स सेव्यः स च संस्तुत्यः स द्रष्टव्यः स सात्विकः ।
स व्रती स तपस्वी च सोऽनुष्ठाता स पूजकः ॥ ३३ ॥
स वेदागमशास्त्रादिसर्वविद्याविशारदः ।
स साचारः स मतिमान् स पाता रसिकस्तु सः ॥ ३४ ॥
स यज्वा स च पूतात्मा स जापी स च साधकः ।
स योगी स कृतार्थो हि स हंसः स च सत्तमः ॥ ३५ ॥
तत्कुलं पावनं देवि ! धन्या तज्जननी मता ।
तत्पिता च कृतार्थः स्यान्मुक्तास्तत्पितरः प्रिये ! ॥ ३६ ॥
स्मरणं कीर्तनं वाऽपि दर्शनं वन्दनं तथा ।
सम्भाषणं च कुरुते राजसूयाधिकं फलम् ॥ ३७ ॥

स यत्र वसते देवि ! तत्र श्रीर्विजयो भवेत् ।
अनामयं सुवृष्टिश्च सुभिक्षं निरुपद्रवः ॥ ३८ ॥
तस्माद् गुरुप्रसादेन ह्यूर्ध्वाम्नायोऽखिलोत्तमः ।
ज्ञायते तत्त्वतो देवि ! स मे प्रियतमो मतः ॥ ३९ ॥
पूर्वाम्नायः सृष्टिरूपः स्थितिरूपश्चदक्षिणः ।
संहार. पश्चिमो देवि ! चोत्तरोऽनुग्रहः स्मृतः ॥ ४० ॥
मन्त्रयोगं विदुः पूर्वं भक्तियोगं तु दक्षिणम् ।
पश्चिमं कर्मयोगं तु ज्ञानयोगमथोत्तरम् ॥ ४१ ॥
पूर्वाम्नायस्य सङ्केताश्चतुर्विंशतिरीरिता. ।
दक्षिणाम्नायसङ्केता. पञ्चविंशतिरीरिताः ॥ ४२ ॥
पश्चिमाम्नायसङ्केता द्वात्रिंशत्समुदाहृताः ।
विदुः षट्त्रिंशदाम्नाये सङ्केताः श्रीमदुत्तरे ॥ ४३ ॥
ऊर्ध्वाम्नायस्य सङ्केता न सन्ति कुलनायिके ! ।
साक्षात् ज्ञानस्वरूपत्वान्न किञ्चित् कर्म विन्दते ॥ ४४ ॥
ऊर्ध्वाम्नायस्य माहात्म्यमहं वेद्मि न चापर. ।
मत्स्नेहात्त्वं च जानासि सत्यमेतद्वरानने ! ॥ ४५ ॥
ऊर्ध्वाम्नायस्य माहात्म्यमिति ते कथितं मया ।
समासेन महेशानि ! मन्त्रमाहात्म्यमुच्यते ॥ ४६ ॥

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे ऊर्ध्वाम्नायवर्णनं नामाष्टाविंशोल्लासः ॥ २८ ॥**

हंसः-मन्त्रिणि ! मानितम् ?

हंसी । सोत्कण्ठं, अवसितं समग्रम् ।

हंसः । दयिते ! अन्यदाकर्णय । अमुष्य ब्रह्माण्डस्योदरे सर्वेभ्यः प्राणिभ्यो देवलोकः श्रेष्ठः । तत्रापि पञ्चायतनं प्रशस्यं किन्तदित्यत्रोच्यते । गणेशः सूर्यः विष्णुः शिवः शक्तिश्चेति। प्रोक्तपञ्चायतनदेवतानामपि सहस्रशः स्वरूपभेदाः । तत्तन्मन्त्रभेदा अपि तत्तदाम्नायेषु निगदिताः । किञ्च । अमी गणेशादयो देवाः पञ्चोत्तरोत्तरमुत्तमाः ।

अङ्गने, ! नास्मदादीनां क्वचित् केनचित् क्लेश इत्याशङ्क्यं, तथापि श्रीपरमेश्वरोदीरितमेव पर्यालोच्य वच्मः । विशिष्टविचारन्त्वग्रतो वक्ष्यामः । किन्तु, गणेशसूर्ययोस्तु मूर्तिविशेषो न दृश्यते । विष्णुमूर्तिषु च गोलोकविलासिनी श्रेष्ठा । सा तु ब्रह्माण्डावरणेभ्य. पारे श्रूयते । किञ्च शिवमूर्तिषु सकलासु परमशिवमूर्तिरेवात्युत्तमत्वेन विलोक्यते सा तु निरावरणेऽनिर्वचनीये श्रीनगरे विलसति । किञ्च । शक्तिमूर्तयस्त्वसङ्ख्याताः । परन्तु सर्वासां मूर्तीनां साम्राज्ञी श्रीपराशक्तिरेव परं श्रेयसी ! किमन्यज्जल्पनेन, यस्याः कृपाकटाक्षेणास्मत्प्रभृतयो राजहंसाः श्रीयुगलविलासे समुल्लसन्तीति दिक् । अतः स्वयं पूर्णं ब्रह्म बुभूषुभिर्न शक्तेरन्यद्दैवतमाश्रयणीयमित्या**खिलाम्नायराद्धान्तः ।**

वस्तुतस्तु, नामीषामन्येषां वा देवानां च ब्रह्माण्डोदरवर्त्तिनामप्यस्मदादीनां शरीरिणामखिलानामनुभूतात्मनां कश्चिद्भेदः। तदपि तावत्कालं नानानामरूपाद्यं सर्वं विभिन्नमिवेत्यवगन्तव्यम्। शिवशक्त्यात्मकत्वात्तत्त्वतोऽभिन्नम्। आवृतत्वाद् भिन्नमिवेति।

किञ्च साक्षान्निश्रेयसाय शाक्तः शैवो वा सन्मुमुक्षुभ्यः सद्भिर्मनुर्दातव्यः। कृष्णमन्त्रस्तु सामान्य सालोक्यादिसम्पादकः। अन्ये वैष्णवमन्त्रास्तु वैकुण्ठाप्तिहेतवः। तथैवेतरशैवमनवोऽपि केवलं कैलाससुखसम्पादका., सौराश्च गाणपत्या अपि नानामनवो भोगमोक्षप्रदा अपि कनीयास एव मम तु प्रतिभासन्ते। जगदुदयवर्तित्वात्।

किं बहुना, नानावरणावृतत्वादिन्द्रजालतुल्येऽस्मिन् जगति नाना जीवाः पृथक्विधप्रारब्धवशाच्च फल्गुफललिप्सया तत्तत्पशुशास्त्रश्रुतमाहात्म्यविशेषा नाना देवता ब्रह्माण्डोदरवर्त्तिनीरनुवर्त्तन्ते न खलु तेषामत्राऽमुत्र च श्रीपारमहंस्यसुखमित्यवबुध्यतां प्रबुद्धा भवती।

अपि च। सुन्दरि! समग्रमन्त्रविग्रहः श्रीगुरु, सर्वदेवताभ्यः श्रेष्ठः। तत्तन्मूर्त्यादिभेदा अप्यनन्तशः। तथाऽपि श्रीहंसमूर्तिः श्रेयसी सा तु श्रीनगरे श्रीशिवशक्त्योर्नादिष्ठमुपविष्टाऽस्ति। अतस्तन्मन्त्रस्तत्पादुका तत्पारम्पर्यक्रमश्च सद्गुरुणा स्वशिष्यायोपदेष्टव्यः।

कामिनि! किमधिकं, यथाधिकारं यादृशः शिष्यस्तादृग्देवमन्त्र-गुरुपादुकाद्यमुपदेश्यम्।

अथ हंसी-भो भगवन्! मन्त्रमाहात्म्यमुच्यत इत्युक्त्वा तत् किन्नोक्तम्।

हंसः। सम्यक् सम्यक् सपदि सामरस्यस्वरूपिण्याः श्रीमदूर्ध्वाम्नायगततारतम्यमूलविद्याया मनाङ् माहात्म्यमावेद्यते।

### श्रीरहस्यागमे।

तद्वदामि तव स्नेहाच्छृणु मत् प्राणवल्लभे!।
श्रीप्रासादपरामन्त्र-ऊर्ध्वाम्नाये प्रतिष्ठितः॥ १॥
आवयोः परमाकारं यो वेत्ति स शिवः स्वयम्।
निःश्वासोच्छ्वासरूपेण मन्त्रोऽयं वर्तते प्रिये!॥ २॥
वटबीजे यथा वृक्षः सूक्ष्मरूपेण तिष्ठति।
पराप्रासादमन्त्रे तु ब्रह्माण्डं हि तथा स्थितम्॥ ३॥
शिवादिक्रिमिपर्यन्तं प्राणिनां प्राणवत् प्रिये!।
पराप्रासादमन्त्रेण विना लोकस्तथा प्रिये!॥ ४॥
अनिलेन विना मेघो यथाकाशे न चेष्टते।
पराप्रासादमन्त्रेण प्राणन्ति प्राणिनस्तथा॥ ५॥
पराप्रासादमन्त्रेण स्थूलमेतच्चराचरम्।
अभिन्नं तत्त्वतो देवि! तालवृन्ते यथाऽनिलः॥ ६॥
बीजेऽङ्कुरस्तिले तैलमग्नावुष्णं रवौ प्रभा।
चन्द्रे ज्योत्स्नाऽनल.काष्ठे पुष्पे गन्धो जले रसः॥ ७॥
शब्दे चार्थः शिवे शक्तिः क्षीरे सर्पिः फले रुचिः।
शर्करायां च माधुर्यं घनसारे च शीतलम्॥ ८॥

निग्रहानुग्रहौ मन्त्रे प्रतिमायां च देवता।
दर्पणे प्रतिबिम्बं च समीरे चलनं यथा ॥ ९ ॥
पराप्रासादमन्त्रोऽयं प्रपञ्चे तु तथा स्थितः।
सुपक्केषु पदार्थेषु सरसेषु सुरेश्वरि ! ॥ १० ॥
लवणेन विना स्वादो यथा भोक्तुर्न जायते।
पराप्रासादमन्त्रेण विनाऽऽनन्दो न जायते ॥ ११ ॥
पराप्रासादमन्त्रेण ये मन्त्रा वा न सङ्गताः।
ते फलं न प्रयच्छन्ति मन्त्रशक्तिविवर्जिताः ॥ १२ ॥
विचारिताः पुरा नानादर्शनाम्नायभेदजाः।
कुलेशि ! सकला मन्त्रा, शास्त्राणि विविधानि च ॥ १३ ॥
सहस्राक्षादयो देवाः शास्त्रेषु विविधेषु च।
भ्रमन्ति तेषु ये मूढास्तव मायाविमोहिताः ॥ १४ ॥
जायन्ते च म्रियन्ते च संसारशोकभाजिनः।
नो लभन्ते हि मोक्षं वै त्वत्प्रसादविवर्जिताः ॥ १५ ॥
सद्रूपे श्रीगुरौ यस्य दृढा भक्तिः प्रजायते।
श्रीप्रासादपरामन्त्रं ज्ञात्वा स च प्रमुच्यते ॥ १६ ॥
पूर्वजन्मसहस्रेषु शैवादिसमयोदितान्।
चतुराम्नायजान्मन्त्रान् गुर्वाज्ञतो भजिष्यति ॥ १७ ॥
स पापकञ्चुकान्मुक्तः शुद्धात्मा गुरुसेवकः।
श्रीप्रासादपरामन्त्रं विजानाति न चान्यथा ॥ १८ ॥
सब्रह्मविष्णुरुद्राश्च शक्रादिसुरपुङ्गवाः।
वसुरुद्राश्च दिक्पाला मनुचन्द्रादयः प्रिये ! ॥ १९ ॥
मार्कण्डेयादिमुनयो वसिष्ठाद्या ऋषीश्वराः।
सनकाद्याश्च योगीशा जीवन्मुक्ताः शुकादयः ॥ २० ॥
श्रीप्रासादपरामन्त्रप्रभावात् कामितं फलम्।
प्राप्य मन्त्रमिमं नित्यं जपन्त्यद्यापि पार्वति ! ॥ २१ ॥
सामर्थ्यं पूज्यता विद्या तेजः सौख्यमरोगता।
राज्यं स्वर्गश्च मोक्षश्च पराप्रासादमन्त्रतः ॥ २२ ॥
सर्वकर्मविहीनोऽपि पराप्रासादमन्त्रवित्।
सुखेन यां गतिं याति न तां सर्वेऽपि धार्मिकाः ॥ २३ ॥
तस्य चिन्तामणिः कामधेनुः कल्पतरुर्गृहे।
कुबेरः किङ्करः साक्षात् पराप्रासादजापिनः ॥ २४ ॥

यथा दिव्यरसस्पर्शाल्लोहं भवति काञ्चनम् ।
पराप्रासादमन्त्रेण पशुः पशुपतिर्भवेत् ॥ २५ ॥
श्रीप्रासादपरामन्त्रं यो जानाति हि तत्त्वतः ।
स मां त्वां च विजानाति चावयोरपि च प्रियः ॥ २६ ॥
पराप्रासादमन्त्रज्ञः श्वपचो वाऽपि सुन्दरि ! ।
देवतास्थापने शक्तः प्रतिमासु न संशयः ॥ २७ ॥
मन्त्रमात्रं तु यो वेत्ति पराप्रासादसंज्ञकम् ।
श्वपचोऽपि विमुच्येत किं पुनस्तद्विधानवित् ॥ २८ ॥
पराप्रासादमन्त्रज्ञो यत् करोति यदिच्छति ।
तत्सर्वं हि सुरेशानि ! तपोध्यानजपात्मकम् ॥ २९ ॥
दीक्षापूर्वं रसेशानि ! पारम्पर्यसमन्वितम् ।
पराप्रासादमन्त्रं यो वेत्ति सोऽहं न संशयः ॥ ३० ॥
चराचरसमेतानि भुवनानि चतुर्दश ।
पराप्रासादमन्त्रज्ञदेहे तिष्ठन्ति भामिनि ! ॥ ३१ ॥
पराप्रासादमन्त्रज्ञो यत्र तिष्ठति पार्वति ! ।
दिव्यक्षेत्रं तदुद्दिष्टं समन्ताद्दशयोजनम् ॥ ३२ ॥
पराप्रासादमन्त्रार्थतत्त्वज्ञं रसनायिके ! ।
सुरासुराश्च वन्दन्ते किं पुनर्मानवादयः ॥ ३३ ॥
पराप्रासादमन्त्रज्ञो यत्र तिष्ठति सुन्दरि ! ।
सिद्धक्षेत्रं नदीयोगिमुनिदेवगणैः सह ॥ ३४ ॥
शैववैष्णवदौर्गार्कगाणपत्यात्मसम्भवान् ।
सर्वमन्त्रान् स जानाति पराप्रासादमन्त्रवित् ॥ ३५ ॥
श्रीप्रासादपरामन्त्रो जिह्वाग्रे यस्य वर्त्तते ।
तस्य सन्दर्शनाद्देवि ! श्वपचोऽपि विमुच्यते ॥ ३६ ॥
ब्राह्मणो वान्त्यजो वाऽपि शुचिर्वाप्यशुचिः प्रिये ! ।
पराप्रासादजापी यः स मुक्तो नात्र संशयः ॥ ३७ ॥
गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा ।
पराप्रासादमन्त्रोऽयं देवेशि ! न च निष्फलः ॥ ३८ ॥
चिरेणैकैकफलदा मन्त्राः सन्ति सहस्रशः ।
रासेशि ! मन्त्रराजोऽयं शीघ्रं सर्वफलप्रदः ॥ ३९ ॥
पराप्रासादमन्त्रोऽयं सर्वमन्त्रोत्तमोत्तमः ।
ज्ञानतोऽज्ञानतो वाऽपि भजतां कामदो मणिः ॥ ४० ॥

शचीन्द्रौ रोहिणीचन्द्रौ स्वाहाग्नी च प्रभारवी ।
लक्ष्मीनारायणौ वाणी-धातारौ गिरिजाशिवौ ॥ ४१ ॥
अग्नीषोमौ बिन्दुनादौ देवि ! प्रकृतिपूरुषौ ।
आधाराधेयनामानौ भोगमोक्षौ महेश्वरि ! ॥ ४२ ॥
प्राणापानौ च शब्दार्थौ प्रिये ! विधिनिषेधकौ ।
सुखदुःखानि यद् द्वन्द्वं दृश्यते श्रूयतेऽपि वा ॥ ४३ ॥
सर्वलोकेषु तत् सर्वमावामेव न संशयः ।
पुंस्त्रीरूपाणि सर्वाणि चावयोरंशजानि हि ॥ ४४ ॥
पराप्रासादमन्त्रोऽयं तस्मात्सर्वात्मको भवेत् ।
अरूपभावनागम्य ज्ञेय ब्रह्म रसेश्वरि ! ॥ ४५ ॥
निष्कलं निर्मल नित्यं निर्गुणं व्योमसन्निभम् ।
अनन्तमव्ययं देवि ! मनोवाचामगोचरम् ॥ ४६ ॥
पराप्रासादमन्त्रार्थाऽनुसन्धानात् प्रकाशते ।
तस्मान्मन्त्रमिमं देवि ! पराप्रासादसंज्ञकम् ॥ ४७ ॥
जपन् भुक्ति च मुक्ति च लभते नात्र संशयः ।
परतत्त्वस्वरूपत्वात् सच्चिदानन्दलक्षणात् ॥ ४८ ॥
शिवशक्तिमयत्वाच्च भुक्तिमुक्तिप्रदः स्मृतः ।
बहुनाऽत्र किमुक्तेन सर्वसारं शृणु प्रिये ! ॥ ४९ ॥
श्रीप्रासादपरामन्त्रसमो मन्त्रो न विद्यते ।
इदमेव परं ज्ञानमयमेव परोजपः ॥ ५० ॥
अयमेव परोधर्म इदमेव परं व्रतम् ।
इयमेव परा दीक्षा त्विदमेव परं तपः ॥ ५१ ॥
इदमेव परं ध्यानमिदमेव परार्चनम् ।
अयमेव परो यज्ञ इदमेव परात्परम् ॥ ५२ ॥
इदमेव परं श्रेय इदमेव परं फलम् ।
इदमेव परं तत्त्वमियमेव परा गतिः ॥ ५३ ॥
इदमेव परं गुह्यं सत्यं सत्यं न संशयः ।
इति मत्वा मनुष्येन्द्रस्तन्निष्ठः स्यात्सदा प्रिये ! ॥ ५४ ॥
आगमोक्तेन विधिना क्रमपूजापुरःसरम् ।
श्रीप्रासादपरामन्त्रमष्टोत्तरशतं जपेत् ॥ ५५ ॥
मुच्यते ब्रह्महत्यादि-महापापैश्च पञ्चभिः ।
द्विशतं यो जपेद्देवि ! श्रीप्रासादपरामनुम् ॥ ५६ ॥

चतुराशीतिलक्षाङ्गधारणाचरितैरपि ।
वार्द्धक्ये यौवने बाल्ये जाग्रत्स्वप्नसुषुप्तिषु ॥ ५७ ॥
कर्मणा मनसा वाचा ज्ञानाज्ञानकृतैरपि ।
महापातकसङ्घातरुपपातकराशिभिः ॥ ५८ ॥
मुच्यते नात्र सन्देह. सत्यमेतद्वरानने ! ।
त्रिशतं यो जपेद्देवि ! श्रीप्रासादपरामनुम् ॥ ५९ ॥
सर्वक्रतुषु यत् पुण्यं सर्वदानेषु यत् फलम् ।
सर्वभूतेषु यत्पुण्यं सर्वतीर्थेषु यत् फलम् ॥ ६० ॥
तत् फलं लभते देवि ! नात्र कार्या विचारणा ।
चतु.शतं जपेद्यस्तु श्रीप्रासादपरामनुम् ॥ ६१ ॥
सदा तस्य गृहद्वारमणिमाद्यष्टसिद्धयः ।
सेवन्ते नात्र सन्देह. सर्वसिद्धिसमन्विता. ॥ ६२ ॥
यद्यन्मनोभिलषित तत्तदाप्नोत्यसंशयम् ।
धर्मार्थकाममोक्षाश्च साक्षात्तस्य करे स्थिताः ॥ ६३ ॥
सालोक्यप्रमुखां देवि ! लभेन्मुक्ति चतुर्विधाम् ।
जपेत् पञ्चशतं यस्तु श्रीप्रासादपरामनुम् ॥ ६४ ॥
तत्फलं नैव शक्नोमि कथितुं कुलनायिके ! ।
तस्मात् सर्वप्रयत्नेन सर्वावस्थासु सर्वदा ॥ ६५ ॥
श्रीप्रासादपरामन्त्रं प्रजपेद्भुक्तिमुक्तये ।
नास्ति गुर्वधिकं तत्त्वं न शिवाधिकदैवतम् ॥ ६६ ॥
नैतस्मादधिको मन्त्रो न मोक्षादधिकं फलम् ।
गिरौ सर्षपमात्रं तु सागरे चुलुकाम्बुवत् ॥ ६७ ॥
तथा च मन्त्रमाहात्म्यं किञ्चित्ते कथितं मया ।
प्रकाशानन्तरूपत्वात् प्रत्यक्षफलदानतः ॥ ६८ ॥
प्रसन्नचित्तरम्यत्वात् प्रसिद्धार्थनिरूपणात् ।
प्रकृष्टानन्दजननात् सामरस्यप्रधानतः ॥ ६९ ॥
प्रसन्नभावकरणात् **प्रासाद** इति कथ्यते ।
प्राकृतनाघप्रशमनात् प्रपन्नार्त्तिनिवारणात् ॥ ७० ॥
प्रासादकरणाच्छीघ्रं प्रासादो मनुरीरितः ।
परतत्त्वस्वरूपत्वात् परमार्थप्रकाशनात् ॥ ७१ ॥
परमानन्दजननात् परमैश्वर्यकारणात् ।
परोक्षफलदानाच्च परधर्मनिदर्शनात् ॥ ७२ ॥

परत्वात् सर्वमन्त्राणां परामन्त्र इतीरितः।

। मन्त्रार्थश्च ।

मननात्तत्त्वरूपस्य देवस्यामिततेजसः।
त्रायते सर्वभयतस्तस्मान्मन्त्रइतीरितः॥ ७३ ॥
इति ते कथितं किञ्चिन्मन्त्रमाहात्म्यमम्बिके !।
समासेन कुलेशानि ! किं भूय. श्रोतुमिच्छसि ॥ ७४ ॥

**इति श्रीहंसमिट्टुप्रकाशिते श्रीहंसविलासे श्रीमदूर्ध्वाम्नायमन्त्रमाहात्म्यकथनं नामैकोनत्रिंशोल्लासः॥ २९ ॥**

अथ हंसः। प्रिये ! प्रागुक्तदीक्षाविधौ मन्त्रग्रहणवेलायां पुरा श्रीगुरो. पूजनपूर्वकं रहस्यमन्त्रो ग्राह्यः।

हंसी। भोः परमहंस ! श्रीगुरोः पूजनं शिष्येण कथं कर्तव्यम्।

हंस.। इत्थं, **आगमरहस्ये**-सशक्तिकः श्रीगुरुः सामान्यासने समुपविश्य सपत्नीकं स्वशिष्यं वक्ष्यमाणं स्वमन्त्रं शानरुपदिशेत्, इत्थमादौ स शिष्यः स्वगुरुमन्त्रं प्राप्य पश्चात् सशक्तिकं गुरुं ध्यानपूर्वकं षोडशोपचारैः पूजयेत्।

**ध्यान तु।**

सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम्।
प्रसन्नवदनेक्षणं सकलदेवतारूपिणं स्मरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम्॥ १ ॥
श्वेतं श्वेतविलेपमाल्यवसनं वामेन रक्तोत्पलं बिभ्रत्या प्रिययान्तरेण तरसाश्लिष्टं प्रसन्नाननम्।
हस्ताभ्यामभयं वरञ्च दधतं शम्भुस्वरूपं परं हालालोहितलोचनोत्पलयुगं ध्यायेच्छिरःस्थं गुरुम्॥२॥
वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम्।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः॥ ३ ॥

इति ध्यानम्।

ततस्तन्मन्त्रेण पाद्यार्घ्याचमनीयमधुपर्कस्नानवस्त्रालङ्कारैः सत्कृत्य पश्चात्तद्यन्त्रमध्ये तत् स्वशक्त्या सह तं श्रीनाथगुरुमुपवेशयेत्।

**यन्त्रं तु।**

बिन्दुत्रिकोणं वसुकोणबिम्बं वृत्ताष्टपत्रं शिखिवृत्तयुक्तम्।
धरागृहं वह्नितुरीभिराढ्यं यन्त्रं गुरोर्देवि मया प्रदिष्टम्॥ १ ॥
सिन्दूराद्यैर्विलिख्याथ पूजयेत्तत्र तं गुरुमिति।

यन्त्रार्थस्तु।

कामक्रोधादिदोषोत्थसर्वदुःखनियन्त्रणात्।
यन्त्रमित्याहुरेतस्मिन् देवः प्रीणाति तत्त्वतः॥ १ ॥

किञ्च, मन्त्रस्थितं सगुर्वीकं स्वगुरुं गन्धाक्षतपुष्पैः सम्पूज्य, आवरणानि च पूजयेत्।

तत्र बिन्दौ गुरुं देवि ! स्थापयेद्भक्तिपूर्वकम्।
सशक्तिकं स्वमूलेन पूजयेद्विधिवच्च तम्॥ १ ॥

गणेशधर्मवरुणाः कुबेरसहिताः शिवे ! ।
पूज्या द्वास्थाः सुपुष्पैश्च गन्धाक्षतगुरुसरैः ॥ २ ॥
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः ।
कपालो भीषणो देवि ! संहारश्चाष्टपत्रके ॥ ३ ॥
परमानन्दनाथश्च प्रकाशानन्दनाथकः ।
श्रीभोगानन्दनाथश्च समयानन्दनाथकः ॥ ४ ॥
गगनानन्दनाथश्च श्रीविश्वानन्दनाथकः ।
भुवनानन्दनाथश्च श्रीस्वात्मानन्दनाथकः ॥ ५ ॥
अष्टौ कुलगुरून्देवि ! पूजयेदष्टकोणके ।
मदनानन्दनाथश्च श्रीलीलानन्दनाथकम् ॥ ६ ॥
महेश्वरानन्दनाथं पूजयेद्वै त्रिकोणके ।
बिन्दौ गुरुं च सम्पूज्य गन्धाक्षतप्रसूनकैः ॥ ७ ॥
तन्मूर्ध्नि परमं देवि ! परापरगुरुं ततः ।
परमेष्ठिगुरुं चैव पूजयेच्चन्दनादिभिः ॥ ८ ॥
भक्ष्यैर्भोज्यैस्तथा लेह्यैर्नैवेद्यैश्च पृथग्विधैः ।
चोष्यैः पेयैश्च खाद्यैश्च तर्पयेद्विविधै रसैः ॥ ९ ॥
आनन्दरससम्पूर्णं गुरुं बुद्ध्वा महेश्वरि ! ।
सुवर्णदक्षिणाभिश्च सन्तोष्य दण्डवन्नमेत् ॥ १० ॥
य एवं पूजयेद्देवि ! श्रीगुरुं पुण्यवासरे ।
स एव रसिकः साक्षाद्विचरेद्भुवनत्रये ॥ ११ ॥
इतीदं परमं तत्त्वं सर्वाम्नायरहस्यकम् ।
सारात् सारतरं देवि ! गोपनीयं मुमुक्षुभिः ॥ १२ ॥

हंसी । भोः स्वामिन् , ! श्रीगुरुमन्त्राद्यमिदानीमुद्घाट्यताम् ।

श्रीहंसः । आकर्ण्यतां तदधुना त्वामुपदेक्ष्यामः । प्राणः(ह)प्रद्यु(अ)रन्वितोऽनन्तयुक्त । श्वेतश्चैवं सूक्ष्मयुक्शङ्कु(स)कर्णः ।

उत्कारी(क)न्याककुचाभान्वितोऽग्रे ।
चिन्मन्त्रोऽपि श्रीगुरोरेष मन्त्रः ।
अस्मत्कृतमिदं पद्यं ।
एष षडक्षरः । १ ।
अपरेऽपि ।

## आगमान्तरे ।

तारं शिवत्रयं देवि ! गुरवे पदमुच्चरेत् ।
विश्वमन्ते महादेवि ! मनुरेष नवाक्षरः ॥ २ ॥

तारो जगन्मनुः श्रीति गुरुर्ङेन्तः शिवागमे ।
**सप्तार्णः** श्रीगुरोर्मन्त्रः प्रोदितः परमार्थदः ॥ ३ ॥

इत्यस्मत्कृतम् ।

त्रिवृद्धिश्वश्रीति स्मृतिरुल्लसिता मन्मथगतो
वलीदेवायाग्रे परमपुरुषायेति च पदम् ।
नटो विद्यायुक्तस्तदनु शुचिबीजं विजयिनी
जनायस्वाहेति प्रवर**गुरुमन्त्रो** निगदितः ॥ अस्मत्कृतमित्यपि ।
त्रयोविंशाक्षर एषः ॥ ४ ॥
वेदादिर्गुरुदेवाय विद्महे तदनन्तरम् ।
परमान्तेगुरुर्ङेन्तस्तदन्ते धीमहीति च ॥
तन्नो गुरुरितिप्रोच्य तदन्ते तु प्रचोदयात् ।
एषा **श्रीगुरुगायत्री** विश्रुता हि शिवागमे ॥ ५ ॥
वराहः सामगः खेटः पान्तिमः पावकस्तथा ।
संयोज्यैतान् प्रिये ! सर्वान् सानुस्वारे त्रिकोणके ॥
नभो भृगुर्नृसिंहश्च मङ्गलो लम्पटो बलः ।
रुचिरो हृद्गतश्चैतानधीशोऽङ्कूरमस्तके ॥
वदेत् कूटद्वयं चाथ साद्यमग्रे पुनः प्रिये ! ।
वामनेत्रान्तमित्येष **श्रीगुरोः पादुकामनुः** ॥ ६ ॥

## अथ श्रीगुरुपारम्पर्यक्रमः ।

दिव्यौघाश्चापि सिद्धौघा मानवौघास्त्रिधा हि ते ।
परप्रकाशः प्रथमस्ततः परशिवाभिधः ॥
परशक्तिश्च कौलेशः शुक्लादेवी कुलेश्वरः ।
कामेश्वरीति **सप्तैव दिव्यौघा गुरवः** पराः ॥ १ ॥
भोगः क्रीडश्च समयः सहजश्च परापराः ।
**सिद्धौघा गुरवश्चैते चत्वारः** परिकीर्तिताः ॥ २ ॥
गगनो विश्वविमलौ मदनो भुवनस्तथा ।
लीला स्वात्मा प्रियेत्य**ष्टौ मानवा** अपरा मताः ॥ ३ ॥
आनन्दनाथशब्दान्ताः पुरुषा गुरवः स्मृताः ।
अम्बान्तास्तु स्त्रियः कार्याः सर्वसिद्धिप्रदायिकाः ॥ ४ ॥
परशक्तिस्तथा शुक्लादेवी कामेश्वरीति च ।
तिस्रः स्त्रियस्तु दिव्येषु प्रिया लीलेतिमानवे ॥ ५ ॥
श्रीपादुकां पूजयामीत्यन्ते सर्वत्र योजयेत् ।
इति शाक्तपक्षे गुरुपारम्पर्यक्रमः ॥

**शैवपक्षे तु ।**

आदिनाथः सदापूर्वः शिवश्चापीश्वरः स्मृतः ।
रुद्रो विष्णुस्तथा ब्रह्मा **दिव्यौघास्तु** सपत्निकाः ॥
सनकः प्रथमः प्रोक्तस्तथा देवि ! सनन्दनः ।
सनातनस्तृतीयस्तु सनत्पूर्वः कुमारकः ॥
षष्ठः सनत्सुजातश्च दत्तात्रेयोऽथ रैवतः ।
वामदेवस्तथा व्यास. **सिद्धौघास्तु** शुकान्तिमाः ॥
**एकादश** प्रिये ! प्रोक्ता **मानवौघा**नथो शृणु ।
नृसिंहश्च महेशश्च भास्करोऽपि महेन्द्रकः ॥
माधवो विष्णुरित्येते**मानवौघाः षडुत्तमाः** ॥
नामान्ते योजयेदेषां दिव्यौघे परमं शिवम् ।
महाशिवं च सिद्धौघे मानवौघे सदाशिवम् ॥
इति शैवपक्षे गुरुपारम्पर्यक्रमः ।

## । प्रार्थना ।

श्रीदिव्यसिद्धमनुजौघसुमूर्तिरूपं संसारदाहशमनं द्विभुजं द्विनेत्रम् ।
वामाङ्गशक्तिसकलाभरणैर्विभूषं ध्यायेज्जपेत्सकलसिद्धिफलप्रदं च ॥ १ ॥
ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकन्नित्यं विमलमचलं सर्वधीसाक्षिभूतं भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥२॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ३ ॥

## ॥ अथ श्रीगुरोः पादुकास्तोत्रम् ॥

निषक्तमणिपादुकं नियमिताघकोलाहलं स्फुरत्किसलयारुणं नखसमुन्मिषच्चन्द्रिकम् ।
परामृतसरोवरोदितसरोजरोचिष्णु तद् भजामि शिरसि स्थितं गुरुपदारविन्दद्वयम् ॥१॥
ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीकनककाण्डशोभितं द्वादशान्तसरसीरुहं भजे ॥ २ ॥
तस्य कन्दलितकर्णिकापुटे कॢप्तरेखमकथादिरेखया ।
कोणलक्षितहलक्षमण्डले भावलक्षमबलालयं भजे ॥ ३ ॥
तत्पुटे पटुतडित्कडारिमस्पर्द्धमानपरिपाटलप्रभम् ।
चिन्तयामि हृदि चिन्मयं सदा बिन्दुनादमणिपीठमण्डलम् ॥ ४ ॥
ऊर्ध्वमस्य हुतभुक्शिखामयं चिद्विलासपरिबृंहणास्पदम् ।
विश्वघस्मरमहच्छटोत्कटं व्यामृशामि युगमादिहंसयोः ॥ ५ ॥

तत्र नाथचरणारविन्दयोः संविदामृतझरीमरन्दयोः ।
द्वन्द्वमिन्दुकरकन्दशीतलं मानसं स्मरतु मङ्गलास्पदम् ॥ ६ ॥

पादुकापञ्चकं स्तोत्रं पञ्चवक्त्रसमुद्गतम् ।
पञ्चवाहक्रमप्राप्तं प्रपञ्चे दुर्लभं स्मृतम् । ७ ॥

## । इति पादुकापञ्चकं स्तोत्रम् ।

इत्थमनेकाभिः स्तुतिभिः श्रीस्वगुरुनाथं सम्प्रार्थ्य दैन्येन सर्वं शरीरार्थादि तस्मै निवेद्य साष्टाङ्गं शतशः प्रणम्य ।

भो भार्ये! **महामन्त्रार्थं** भिक्षेत। श्रुतिश्च 'मुमुक्षुर्वै शरणमहं प्रपद्ये' इति ।

कथं,

भोः स्वामिन्! जन्ममरणादिमहादुःखखिन्नाय पशुपाशबद्धाय मह्यं भगवत्पादुकादास्येन श्रीमहाविद्यां यथाधिकारमुपादिशतेति ।

अथ सद्गुरुः प्रहृष्टहृदय. **श्रीमहाविद्यार्थं** सशक्तिकेन स्वशिष्येण सम्प्रार्थितोऽलोलुपः प्राङ्मुख उपविश्य उत्तराभिमुखोपविष्टं सस्त्रीकं स्वशिष्यं श्रीमहाविद्यामुपदिशेत् ।

**आगमे ।**

प्राङ्मुखो गुरुरासीत उत्तराभिमुखं शिशुम् ।
संस्थाप्य विधिवद्देवि! कृत्वा विघ्नशोधनम् ॥ १ ॥

भूतशुद्धिक्रमोपेतं प्राणार्पणविधिं चरेत् ।
प्राणायामत्रयं कार्यं विधायाचमनत्रयम् ॥ २ ॥

तत्र मूलेन देवेशि! दिशो बद्ध्वा शिवं स्मरेत् ।
वह्नेः समक्षं यन्त्राग्रे विद्यां परमदुर्लभाम् ॥ ३ ॥
कर्णमूले महेशानि! शनैस्त्रिस्त्रिः समर्पयेत् ।

**इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे श्रीगुरुपूजनादिकथनं नाम त्रिंशोल्लासः ॥ ३० ॥**

अथ हंसी । धन्याऽस्मि धन्याऽस्मि कृपालुभिः स्वामिभिरन्त्यजधर्मिण्यामसमद्विधायां स्त्रियामतिरहस्यभूता श्रीनाथगुरो. श्रीमहाविद्योपदिष्टा, इदानीमिष्टविद्योपदेष्टव्येत्युक्त्वा श्रीहंसचरणकमले प्रणता ।

श्रीहंसः । अहो हंसि, साम्प्रतं भवत्यभिलषिता श्रीमहाविद्यामाकर्णय ।

### । श्रीआगमरहस्ये ।

अनन्तश्चन्द्रभुवनविन्दुरिन्दुयुगान्वितः ।
श्रीप्रासादपरामन्त्रो भोगमोक्षफलप्रदः ॥ १ ॥

पराप्रासादमन्त्रस्तु सादिरुक्तो महेश्वरि! ।
वेधोबीजं मातृका च ततो मेधा तमः परा ॥ २ ॥

छविः शक्तिशिरः कान्तिस्तमो माया शरच्छविः ।
तमोमायाञ्चले देव्या विद्या **पञ्चदशाक्षरी** ॥ एषा **सौभाग्यविद्या** ॥ ३ ॥
लक्ष्मीपरामदनवाग्भवशक्तियुक्तस्तारं च भूतिकमला कथिताऽपि विद्या ।
शक्त्यादिकं च विपरीततया तथोक्तं **श्रीषोडशाक्षरविधिः** शिवमस्तु पूर्णः ॥४॥
एषा **श्रीविद्या** । ३ । १६ ॥
प्रणवाद्यं बिन्दुनादसहितं कुरु सुव्रते ! ।
एतद्वाग्भवमुच्चार्य सकलं कामबीजकम् ॥
वामनेत्रेशबिन्द्वन्तं सर्गवान् भृगुरव्ययः ।
अनुग्रहेण संयुक्तो विद्येयं त्र्यक्षरी भवेत् ॥
एषा **त्रिपुरा** ।
शक्तिबीजं वाग्भवं तु कामबीजं तु पूर्ववत् ।
अन्त्यं शिवसमायुक्तं त्रिपुरेश्याः परेश्वरि ! ॥
इयं तु **ललितादेवी** महासौभाग्यवर्द्धिनी ॥ ३ ॥
प्रणवं पूर्वमुच्चार्य परा हंसः पदं लिखेत् ।
ततः सोऽहं शिरो देवि ! **वसुवर्णेय**मीरिता ।
परं ज्योतिर्मया साक्षात् परब्रह्मस्वरूपिणी ॥ ७ ॥
शिवबीजं समुच्चार्य शक्तिबीजं ततो वदेत् ।
**अजपेयं** महेशानि ! भवपाशनिकृन्तनी ॥ ८ ॥
इत्यादयः **शाक्ताः** ।
भृगुर्भुवनबिन्द्वाढ्यः प्रासादमनुरीरितः ॥ १ ॥
तारो माया वियद्बिन्दुमनुस्वरसमन्वितम् ।
पञ्चाक्षरसमायुक्तो वसुवर्णो मनुर्मतः ॥ ८ ॥
षडक्षरः शक्तिरुद्धः कथितोऽष्टाक्षरोऽपि वा ॥ १ ॥
इत्यादयः **शैवाः** ।

प्रिये ! सर्वासां मन्त्रविद्यानां ऋष्यादिकं तु तत्तदागमेषु द्रष्टव्यं नात्र शास्त्रबाहुल्यभिया लिख्यते ।

श्रीषडक्षरगुरुमन्त्रस्य श्रीपराप्रासादविद्यायाश्च तदत्र ब्रूमः ।

अस्य श्रीगुरुमन्त्रस्य मुनिर्ब्रह्मा समीरितः ।
छन्दो गायत्रमित्युक्तं देवता श्रीगुरुः स्मृता ॥ १ ॥
शिवो बीजं ततः शक्तिः शक्तिरेव प्रकीर्तिता ।
व्यत्ययेन द्वय तत्तु कीलकं समुदाहृतम् ॥ २ ॥
महाप्रसादसिद्ध्यर्थे विनियोगः प्रकीर्त्तितः ।
इति बद्धाञ्जलिपुटः पठित्वा न्यासमाचरेत् ॥ ३ ॥

ऋषिं तु विन्यसेन्मूर्ध्नि छन्दश्च वदने न्यसेत् ।
देवतां हृदि विन्यस्य गुह्ये बीजं न्यसेत् प्रिये ! ॥ ४ ॥
शक्तेस्तु पादयोर्न्यासः कीलकं नाभिमण्डले ।
विनियोगो हि सर्वाङ्गे ऋष्यादिन्यास इत्यसौ ॥ ५ ॥
षड्दीर्घशक्तिबीजेन शिवाद्येन षडङ्गकम् ।
हृदयादि प्रिये ! प्रोक्तं षट्पल्लवसमन्वितम् ॥ ६ ॥
हृदयं च शिरः पश्चात् शिखा च कवचं तथा ।
नेत्रत्रयं तथास्त्रं च षडङ्गानि वरानने ! ॥ ७ ॥
नमश्चैव तथा स्वाहा वषट् चापि तथा च हुम् ।
वौषट् च फडिति प्रोक्ता. पल्लवाः षट् कुलेश्वरि ! ॥ ८ ॥
चतुर्थ्यन्तानि देवेशि ! षडङ्गानि स्मृतानि वै ।
अथाङ्गुष्ठादिको न्यासः कर्त्तव्यो हृदयादिवत् ॥ ९ ॥
श्रीगुरोर्न्यासभेदस्तु विशेषः श्रीतदागमे ।

## इति श्रीगुरुमन्त्रस्य ऋष्यादिकम् ।

अथ **श्रीपराप्रासादमन्त्रस्य ऋष्याद्यं** दर्शयामः ।

ऋषिरस्य मनोर्ज्ञेय-श्चिद्रूपानन्दभैरवः ।
छन्दोऽतिजगती प्रोक्तं चिन्मयं वापि सुन्दरि ! ॥ १ ॥
श्रीमन्महाविराड्रूपो महाभट्टारकः प्रिये ! ।
राजराजेश्वरः सच्चिदानन्दः परमः शिवः ॥ २ ॥
अर्द्धनारीश्वरः साक्षाद्देवता परिकीर्त्तिता ।
शिवो भृगुप्रतिष्ठाढ्यो बीजं बिन्दुयुतो मतम् ॥ ३ ॥
तद्वदर्णद्वयं सेन्दुशक्तिस्त्रिपुरसंस्थितम् ।
कीलकं शिवशक्ती तु विज्ञेयं विमलानने ! ॥ ४ ॥
महाप्रसादसिध्यर्थे विनियोग. स्मृतः प्रिये ! ।
न्यासं तु पूर्वमुक्तेषु तत्तत्स्थानेष्वथाचरेत् ॥ ५ ॥
षड्दीर्घमूलबीजेन पञ्चब्रह्मान्वितेन च ।
सदाशिवयुतेनापि षडङ्गन्यासमाचरेत् ॥ ६ ॥
तथैव चाङ्गुलीन्यासः प्रोदितः प्राणवल्लभे ! ।
अन्ये नानाविधा न्यासा द्रष्टव्याश्चागमे प्रिये ! ॥ ७ ॥
दिग्बन्धनमनुः प्रोक्तः सततं भूर्भुवःस्वरोम् ।
इत्थं न्यासान् विधायादौ ध्यायेदर्द्धाम्बिकेश्वरम् ॥ ८ ॥

अमृतार्णवमध्योद्यत्-सुवर्णद्वीपशोभिते ।
कल्पवृक्षवनान्तस्थे नवमाणिक्यमण्डपे ॥ ९ ॥
नवरत्नमयश्रीमत्-सिंहासनगताम्बुजे ।
त्रिकोणान्तः समासीनं चन्द्रसूर्यायुतप्रभम् ॥ १० ॥
अर्धाम्बिकासमायुक्तं विप्रभक्तविभूषणम् ।
कोटिकन्दर्पलावण्यं सदाषोडशवार्षिकम् ॥ ११ ॥
मन्दस्मितमुखाम्भोजं त्रिनेत्रं चन्द्रशेखरम् ।
दिव्याम्बरस्रगालेपं दिव्याभरणभूषितम् ॥ १२ ॥
पानपात्रं च चिन्मुद्रां त्रिशूलं पुस्तकं करैः ।
विद्यासंसिद्धिबिभ्राणं सदानन्दसुखेक्षणम् ॥ १३ ॥
पुरुषं वा स्मरेद्देवि ! स्त्रीरूपं वा विचिन्तयेत् ।
अथवा निष्कलं ब्रह्म सच्चिदानन्दलक्षणम् ॥ १४ ॥
सर्वतेजोमयं देवि ! सचराचरविग्रहम् ।
एवं चित्ताम्बुजे ध्यायेदर्द्धनारीश्वरं शिवम् ॥ १५ ॥

**इत्यर्द्धनारीश्वरमन्त्रस्य ऋष्यादिकम् ॥**

अथ हंसी । भो, भो, भगवन् ! किमेतदृष्यादिकं, तल्लक्षणं विस्तरेण वद ।
हंसः । शृणोतु साध्वी ।

## आगमे ।

षष्टिकल्पसहस्राणि येनैव विहितो जपः ।
तथाऽब्दषष्टिलक्षाणि षष्टिजन्मान्तरेषु च ॥ १ ॥
पुरश्चर्याकरो देवि ! **सर्षि**रित्यभिधीयते ।
ऋषिहीनो भवेन्मन्त्रो जप्तो जन्मान्तरेषु च ॥ २ ॥
प्रत्यवायकरो लोके साधकानां महेश्वरि ! ।
सदा मन्त्रो मया वक्त्रान्महादेवि ! बहिष्कृतः ॥ ३ ॥
वेष्टितस्तेजसा येन **तच्छन्द** इति कथ्यते ।
छन्दांसि विविधान्येषां मन्त्राणां परमेश्वरि ! ॥ ४ ॥
छन्दोहीनो भवेन्मन्त्रो नग्नो मर्त्य इव प्रिये ! ।
यथा जप्तो मया देवि ! मन्त्रः परमभक्तितः ॥ ५ ॥
प्रादुर्बभूव मे सद्यो या सा प्रोक्ता तु **देवता** ।
मन्त्रराजस्य देवानां येनोत्पत्तिर्मया कृता ॥ ६ ॥
**तद् बीज**मितिमन्त्राणां वर्ण्यते परमेश्वरि ! ।
बीजहीनो भवेन्मन्त्रः सिद्धिहानिकरः प्रिये ! ॥ ७ ॥

बीजहीनं जगद्धीनं जलहीनो नदो यथा ।
जपान्ते जगदुत्पत्तिस्थितिसंहारकी मतिः ॥ ८ ॥
जाता मेऽत्र यया देवि ! सा **शक्तिरिति** गीयते ।
शक्तिहीनो महादेवि ! मन्त्रो विघ्नकरो मतः ॥ ९ ॥
महामाङ्गल्यदो मन्त्रो देवानां शक्तिसंयुतः ।
जप्त्वा स्तुत्वा मनुर्देवि ! पुनर्येन स गोपितः ॥ १० ॥
निस्तेजस्कस्ततो जातः **कीलकं** तदुदाहृतम् ।
निष्कीलितो जपान्ते तु मनुः स श्रद्धया शिवे ! ॥ ११ ॥
त्यक्त्वा साधकराजस्य सिद्धिं हरति भैरवः ।
जपकाले महादेवि ! राक्षसा, प्रेतभूतकाः ॥ १२ ॥
दिशो दश पलायन्ते येन **दिग्बन्धनं** तु तत् ।
दिग्बन्धनं विना देवि ! जपः पाठोऽथवापि वा ॥ १३ ॥
निष्फलो विघ्नकृन्नित्यं तेन दिग्बन्धनं चरेत् ।
एतैर्विहीनो मन्त्रस्तु निष्फलो विघ्नकारकः ॥ १४ ॥
ममापि देवि ! किं वक्ष्ये पुन, क्षुद्रेषु जन्तुषु ।

**इति ऋष्यादीनां लक्षणानि ।**

रमणि ! । अन्योऽपि मन्त्रभेद आकर्ण्यताम् ।

### आगमे ।

मन्त्रविद्याविभागेन द्विविधा मन्त्रजातयः ।
मन्त्राः पुंदेवता ज्ञेया विद्याः स्त्रीदेवताः स्मृताः ॥ १ ॥
पुंस्त्रीनपुंसकात्मानो मन्त्राः सर्वे समीरिताः ।
पुंमन्त्रा हुंफडन्ताः स्युर्द्विठान्तास्तु स्त्रियो मताः ॥ २ ॥
नपुंसका नमोन्ताः स्युरित्युक्ता मनवस्त्रिधा ।

किञ्च ।

'छिन्नादिदोषदुष्टास्ते पालयन्ति न साधक'मित्युक्तेः ।
दोषानिमानविज्ञाय यो मन्त्रान् भजते जड, ।
सिद्धिर्न जायते तस्य कल्पकोटिशतैरपि ॥

इति नैष्फल्यात् ।

छिन्नादिदोषदुष्टान् मन्त्रान् वक्ष्यमाणैर्दशभिः संस्कारः संशोध्य सद्गुरुः स्वशिष्याय दद्यात् ।

उक्तञ्च ।

शाणोल्लीढानि शस्त्राणि यथा स्युर्निशितानि वै ।
मन्त्राः संस्फूर्तिमायान्ति सस्कारैर्दशभिस्तथा ॥ १ ॥

कथ्यन्ते दश संस्कारा: मन्त्रदोषहरा: प्रिये ! ।
जननं जीवनं पश्चात्ताडनं बोधनं तथा ॥ २ ॥
अभिषेको विमलीकरणाप्यायने पुनः ।
तर्पणं दीपनं गुप्तिरित्युक्ताः कुलनायिके ! ॥ ३ ॥
यथा ।
स्वर्णादिपात्रे संलिख्य मातृकामन्त्रमुत्तमम् ।
काश्मीरचन्दनेनापि भस्मना वाऽपि सुन्दरि ! ॥ १ ॥
काश्मीरं शक्तिसंस्कारे चन्दनं वैष्णवे मतम् ।
शैवे भस्म समाख्यातं मातृकामन्त्रलेखने ॥ २ ॥
मन्त्राणां मातृकामध्यादुद्धारो जननं स्मृतम् ।
पङ्क्तिक्रमेण विधिना मन्त्रिभिस्तत्र निश्चितम् ॥ ३ ॥ १ ॥
प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत्सुधीः ।
प्रत्येकं शतवारं तु जीवनं तदुदाहृतम् ॥ ४ ॥ २ ॥
मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ।
प्रत्येकं वायुबीजेन पूर्ववत्ताडनं मतम् ॥ ५ ॥ ३ ॥
विलिख्य मन्त्रवर्णांस्तु प्रसूनैः करवीरजैः ।
तन्मन्त्रवर्णसंख्यातैर्हन्याद्रेफेन बोधनम् ॥ ६ ॥ ४ ॥
अश्वत्थपल्लवैः सिञ्चेन्मन्त्रं मन्त्रार्णसंख्यया ।
तत्तन्मन्त्रोक्तविधिना ह्यभिषेकः प्रकीर्तितः ॥ ७ ॥ ५ ॥
सञ्चिन्त्य मनसा मन्त्रं सुषुम्णामूलमध्यतः ।
ज्योतिर्मन्त्रेण विदहेद्विमलीकरणं तु तत् ॥ ८ ॥ ६ ॥
तारो व्योमाग्निमनुयुग् दण्डी ज्योतिर्मनुर्मतः ।
ललने ! विमलीकरणं मलत्रयदाहनं ।
मलत्रयं तु । आणवं, मायिकं, कार्मणं चेति ।
लक्षणं तु ।
मायिकं नाम मायोत्थं, पौरुषं कार्मणं मलं ।
आणवं तद्द्वयं ज्ञेयं निषिद्धं तन्मलत्रयमिति ।
स्वर्णेन कुशतोयेन पुष्पतोयेन वाऽथवा ।
तेन मन्त्रेण विधिवदाप्यायनविधिः स्मृतः ॥ ९ ॥ ७ ॥
मन्त्रेण वारिणा मन्त्रे तर्पणं तर्पणं मतम् ।
मधुना शक्तितन्त्रे वै वैष्णवे चेन्दुमज्जलैः ॥ १० ॥
शैवे घृतेन दुग्धेन तर्पणं सम्यगीरितम् ॥ १० ॥ ८ ॥

अभिषेकोऽप्युक्तद्रव्यैर्ज्ञेय. ।
तारमायारमाबीजैः पुटीकृत्य जपेन्मनुम् ।
शतमष्टोत्तरं मन्त्री **दीपन** तदुदाहृतम् ॥ ९ ॥
जप्यमानस्य मन्त्रस्य **गोपनं** त्वप्रकाशनम् ॥ १० ॥
संस्कारा दश सम्प्रोक्ताः सर्वतन्त्रेषु गोपिताः ।
यान् कृत्वा सम्प्रदायेन मन्त्री तच्छुद्धिमाप्नुयात् ।

**इति मन्त्राणां दश संस्काराः ।**

रमणि ! तद्वत् केचन मन्त्राः कैश्चिच्छप्ताः कीलिताश्च । अतस्तत्तन्मन्त्राणां तत्तदागमोक्तमन्त्रविशेषैः शापमोचनादिकमपि प्रवीणैः प्रकर्तव्यम् ।

किञ्च ।

अकथहाकडमकुलाकुलऋणधनादीनि कतिचन चक्राण्यागमे गदितानि तद्दोषदुष्टोऽपि-मन्त्रोऽकिञ्चित्करः । अतस्तच्छोधनमप्यागमविहितं विधातव्यम् ।

किन्तु एकेषां मन्त्राणां तु चक्रशुद्धिरनपेक्ष्यापि भवति ।

**। आगमे ।**

नृसिंहार्कवराहाणां प्रासादे प्रणवस्य च ।
सपिण्डाक्षरमन्त्राणां सिद्धारिं नैव शोधयेत् ॥ १ ॥
एकाक्षरे तथा कूटे त्रैपुरे मन्त्रनायके ।
स्त्रीदत्ते स्वप्नलब्धेऽपि सिद्धारिं नैव शोधयेत् ॥ २ ॥

इत्थमनेकविधैः शोधनविधिभि. संशोधितो मन्त्रः सदाचार्यैर्देयो नान्यथेत्यवगन्तव्यम् ।

अथ हंसी । भोः स्वामिन् ! एकगुरूपदिष्टानां शिष्याणां परस्परं पारलौकिको भ्रातृलक्षणसम्बन्धो लोके प्रसिद्धः ।

किन्तु, एकगुरूपदिष्टौ स्त्रीपुंसौ परस्परं भगिनीभ्रातरौ जातौ तर्हि तयोः क्रीडाव्यवहारः प्रत्यवायकरो न ? । गुरावपि प्रत्यवायापत्तिः । पुत्रीपुत्रयोः सुरतसम्बन्धभावत्वात् ।

श्रीहंसः । सत्यं, यद्यपि पितराविति चिन्तयेदित्युक्तत्वाद्गुर्वीगुरू पारमार्थिकौ मातापितरौ जातौ, तत्पुत्रीपुत्रलक्षणौ शिष्यौ स्त्रीपुंसौ प्रसिद्धौ तथाप्यागमे प्रापञ्चिकपारमार्थिकसम्बन्धवैलक्षण्यात् विहितत्वाच्च न प्रत्यवायाशङ्का ।

यथा ।

स्वयं दीक्षां गुरोर्लब्ध्वा दीक्षितः पुण्यभाजनम् ।
गुरुमभ्यर्च्य सम्प्रार्थ्य शक्तिदीक्षार्थमीश्वरि ! ॥ १ ॥
दीक्षिता यस्य नो शक्तिस्तस्य दीक्षा तु निष्फला ।
जन्मकोटिषु जप्तापि तस्य विद्या न सिध्यति ॥ २ ॥
उपविश्य गुरुस्तत्र पश्चिमाभिमुखः प्रिये ! ।
दीक्षायै प्राङ्मुखीं कृत्वा पूजयेद्यन्त्रराजवत् ॥ ३ ॥

ततः सम्पूज्य देवेशि ! यन्त्राग्रे देवतागृहे ।
शिष्यस्त्रियं परारूपां देवीरूपां विचिन्तयेत् ॥ ४ ॥
शिवो भूत्वा पराविद्यां कर्णमूले समर्पयेत् ।
सम्प्राप्य सशिवां विद्यां सद्गुरुं सा ततोऽर्चयेत् ॥ ५ ॥
गन्धाक्षतप्रसूनाद्यैर्दक्षिणाम्बरपूर्वकैः ।
तदाज्ञां शिरसादाय शक्तिरूपं विचिन्तयेत् ॥ ६ ॥
शक्तिश्च दीक्षिता भूत्वा दीक्षितोऽपि स्वयं शिवे ! ।
मर्त्योऽपि सन् प्रिये ! जन्तुरमरत्वमवाप्नुयात् ॥ ७ ॥

**इत्यागमरहस्ये** विहितत्वान्न तत्र प्रापञ्चिकसम्बन्धप्रत्यवायाशङ्केत्यवगन्तव्यं भवत्या ॥

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे मन्त्रलक्षणवर्णनं नामैकत्रिंशोल्लासः ॥ ३१ ॥**

अथ हंसी । भो, भो, भर्तः ! भण्यतामीषत् स्त्रीलक्षणम् ।
हंसः । वरं वरं वल्लभे ! श्रूयतां तल्लक्षण**मागम**सम्मतम् ।

सात्विकी राजसी चैव तामसीति त्रिधा स्त्रियः ।
लक्षणानि क्रमात्तासां ज्ञेयानि रसिकैरिह ॥ १ ॥
निष्कामाऽलोलुपा स्वच्छा स्वदेहदमने रता ।
व्रतोपवाससंशुष्का गुरुदेवार्चनोत्सुका ॥ २ ॥
स्नानदानदयाचारशौचशीलाऽमलान्तरा ।
रजस्तमोभ्यां रहिता ज्ञानगोष्ठीरतानिशम् ॥ ३ ॥
संसारे वितथं सर्वं मत्वा मोक्षैककाङ्क्षिणी ।
विरक्ता वित्तपुत्रादि-विषयेभ्योऽनुवासरम् ॥ ४ ॥
स्वल्पहास्यविलासादि-क्रियावचनमानसा ।
विरक्तसङ्गवैराग्यशास्त्रश्रवणतत्परा ॥ ५ ॥
योगक्रियोद्यता भोगलालसारहिता भृशम् ।
स्वल्पाहाराऽल्पवचना स्तोकसङ्गाऽल्पवासना ॥ ६ ॥
निन्दाकौटिल्यमात्सर्यमदर्पविवर्जिता ।
ईषद्धर्षा गतामर्षा शिवस्मरणनिश्चला ॥ ७ ॥
आधिव्याधिभयापद्भिः पीडिताऽपि दृढान्तरा ।
एतल्लक्षणसम्पन्ना स्त्री विज्ञेयात्र **सात्विकी** ॥ ८ ॥
**राजसी** तु रजोयुक्ता राजमार्गानुसारिणी ।
राजवेषधरी रम्या रसिका रतिकोविदा ॥ ९ ॥

अहमेव वरा स्त्रीणां रूपसौन्दर्यशालिनी ।
नारीणां निपुणा चाहं मत्समा नास्ति काचन ॥ १० ॥
नित्यमित्थं भावयन्ती स्वशरीराभिमानिनी ।
मदोद्घूर्णमहानेत्रा विपुलालिकपट्टिका ॥ ११ ॥
शफरीखञ्जरीटैणचञ्चलाक्ष्यम्बुजद्वया ।
ईषद्धास्यमहाहास्यप्रसन्नास्यसरोरुहा ॥ १२ ॥
प्रलम्बकेशपाशाढ्या पुष्पमालाघनैषिणी ।
सुगन्धघनलिप्ताङ्गी कस्तूरीबिन्दुभूषिता ॥ १३ ॥
पूरयन्ती स्वसीमन्तं सिन्दूराक्तशलाकया ।
रत्नरेखोल्लसद्दन्ता कज्जलाक्ताक्षियुग्मका ॥ १४ ॥
ताम्बूलचर्वणोद्युक्ता पश्यन्ती दर्पणं मुहुः ।
सूक्ष्मवस्त्रप्रावृताङ्गी स्वर्णालङ्कारशालिनी ॥ १५ ॥
भालयानाऽपि वामाक्षि-कोणकेन च कामुकम् ।
मत्तमातङ्गगमना निजपादनिरीक्षिणी ॥ १६ ॥
गायने निपुणा नित्यं रागरञ्जितमानसा ।
वाद्यप्रिया नृत्यनिष्ठा नर्त्तकीकृतकौतुका ॥ १७ ॥
लघुलज्जा महालज्जा निर्लज्जाऽपि क्वचिद्भृशम् ।
सततं कामशास्त्रार्थरतिश्रवणतत्परा ॥ १८ ॥
मधुरास्वादनासक्ता मदनोन्मदमन्थरा ।
यौवनोन्मत्तपुरुषं प्रेक्ष्योत्फुल्लपयोधरा ॥ १९ ॥
प्रत्यहं पुरुषं प्रौढं काङ्क्षन्ती कामकेलये ।
राजदैवतसद्भक्ता द्विजभोजनकारिणी ॥ २० ॥
यज्ञहोमव्रतार्चादावुद्युक्ता च दयावती ।
उदारा दानकर्मादौ शोकक्रोधविवर्जिता ॥ २१ ॥
ईषल्लोभान्विता द्रव्ये निर्भयेषद्भयापि वा ।
ज्ञानवार्ताऽल्पधिषणा प्रपञ्चचतुरा परम् ॥ २२ ॥
नानावेषान्विता नित्यं दरिद्राऽपि मनोरमा ।
इत्यादिलक्षणोपेता सुन्दरी **राजसी** स्मृता ॥ २३ ॥
विकटास्या वक्रनेत्रा वक्रभ्रूः कुटिलालका ।
लम्बोष्ठी दीर्घदशना वक्ररोमभयानका ॥ २४ ॥
राक्षसीव सदा क्रूरा शुष्कगण्डा पुलोदरी ।
कृष्णदीर्घनखा कृष्णायसश्यामकलेवरा ॥ २५ ॥

कालरात्रिरिवात्युग्रा कलिला कलहाकुला ।
जीवहिंसाकरी रुष्टा पापकर्मणि तत्परा ॥ २६ ॥
चाण्डाली चर्मचरणा चण्डिका चौर्यचञ्चला ।
सन्तप्ता शोककलहै-र्बालसन्ताडनाकुला ॥ २७ ॥
बहुलुब्धाऽसत्यजल्पा रूक्षभक्षणलालसा ।
निन्द्या निन्द्योद्यता नीचाचरणा नीचसङ्गता ॥ २८ ॥
मलिना स्नानशौचाद्यै रहिता मलिनाम्बरा ।
कुङ्कमं कज्जलं तैलं दृष्टा गच्छन्त्यवाङ्खम् ॥ २९ ॥
कु व मु
दयाहीना च कृपणा परद्रव्यापहारिणी ।
सायं प्रातर्महानिद्रा भर्त्सयन्त्यपि सज्जनान् ॥ ३० ॥
देवतीर्थाद्युत्सवादौ विमुखी सर्ववञ्चिनी ।
रुदन्त्यहर्निशं रोषाद्धास्यं स्वप्नेऽपि दुर्लभम् ॥ ३१ ॥
सम्भोगसमये भ्रष्टा नाथं निष्ठुरभाषिणी ।
शुष्कस्तनानना शुष्कजघना च महाभुजा ॥ ३२ ॥
दुर्गन्धिरोमजालाढ्य-शुष्कयोनिर्भयङ्करी ।
विकीर्णकेशनिकरा डाकिनीदुष्टदर्शना ॥ ३३ ॥
इत्याद्यैर्लक्षणैर्युक्ता विज्ञेया स्त्री तु तामसी ।
इत्थं तिस्रः स्त्रियः प्रोक्ताः प्रपञ्चरचनाक्रमे ॥ ३४ ॥
यथोक्तलक्षणैर्युक्ताः पुरुषास्त्रिविधा अपि ।
ज्ञातव्या रसिकैरत्र दिव्यदृष्ट्या दयापरैः ॥ ३५ ॥
सात्त्विकः पुरुषो योऽत्र सात्त्विकीस्त्रीनिषेवकः ।
जीवन्मुक्तः स विज्ञेयो भुञ्जन् भोगानपि प्रियान् ॥ ३६ ॥
राजसीस्त्रीयुतो राजभोगान् भुक्त्वा चिरं बहून् ।
राजसोऽपि परं राजलोकं गच्छेन्निरामयम् ॥ ३७ ॥
तामसस्तु पुमांस्तुच्छस्तामसी प्राप्य कुस्त्रियम् ।
भुक्त्वेहानेकधादुःखं परत्र निरयी भवेत् ॥ ३८ ॥
पुंसा सत्त्वगुणाढ्येन प्राप्ता स्त्री राजसी यदि ।
सत्त्वसम्पन्नया वाऽपि स्त्रियाप्तो राजसः पुमान् ॥ ३९ ॥
परस्परं प्रबोधेन भुक्तिं मुक्तिं तथाप्नुयात् ।
निःसंशयेन संसारे स्थातव्यमकुतोभयम् ॥ ४० ॥
सत्त्वशीलोऽपि तामस्याः प्रसङ्गेन स्त्रियाः पुमान् ।
तामसस्य तथा पुंसः सात्त्विकी राजसी द्वयम् ॥ ४१ ॥

व्याकुलीभूय कस्मिंश्चित् काले मोक्षमवाप्नुयात् ।
न पृथङ् मोक्षणं क्वापि यतोऽर्द्धाङ्गत्वमीरितम् ॥ ४२ ॥
वासना पुंसु नारीणां पुंसा नारीषु नित्यशः ।
निबिडा त्वपृथक्त्वेन केनचिद् घटितादितः ॥ ४३ ॥
त्यक्त्वा चेत्पुरुषः कश्चित् गच्छेन्मुक्तिं बलात्स्त्रियम् ।
स्त्री पुमांसं विना काचित्तथापि पुनरुद्भवेत् ॥ ४४ ॥
पुरुषेषु तथा स्त्रीषु रश्मयस्तु समाः स्मृताः ।
तथाप्यद्वैतयुग्मत्वान्मुक्तिरर्द्धतनोर्न हि ॥ ४५ ॥
एकस्य पुरुषस्यात्र यदि स्यात् स्त्रीसहस्रकम् ।
तर्हि तस्य कया सार्द्धं मुक्तिरत्रोच्यते स्फुटम् ॥ ४६ ॥
एकैव मूलभूता स्त्री पुंसोऽर्द्धाङ्गस्वरूपिणी ।
अनन्तनामरूपा सा जाता नूनं तपोबलात् ॥ ४७ ॥
साऽर्पयित्वात्मरमणं बुद्ध्वा बोध्यपरं पदम् ।
संहृत्य सकलार्द्धाङ्गगणं स्वस्थानमाव्रजेत् ॥ ४८ ॥
एवमेकोप्यनेकात्मा भुक्त्वैकां कश्चिदङ्गनाम् ।
तृप्तः संहृत्य सर्वाणि रूपाण्यन्ते व्रजेत्पदम् ॥ ४९ ॥
भोगार्थं हि भ्रमे भेदो न हि भेदोऽत्र तात्त्विकः ।
शिवशक्त्यात्मकं सर्वमित्येवोक्तं **शिवागमे** ॥ ५० ॥
भोग्यं त्वचेतनं सर्वं चेतनं भोक्तृसंज्ञकम् ।
शिवशक्तिस्वरूप हि भोक्तृभोग्यात्मकं जगत् ॥ ५१ ॥
तावद्विधिर्निषेधश्च नाको नरक एव च ।
यावत्त्वमहमित्येवं भेदो मायाभ्रमात् स्थितः ॥ ५२ ॥
पुरुषास्तु शिवाः सर्वे शक्तयः सकलाः स्त्रियः ।
नो भेदः शिवशक्तीनामित्युक्तं **हृयागमे** स्फुटम् ॥ ५३ ॥
यदा शिवोऽहमित्येवं पुमान्निश्चयवानिह ।
शक्तिरेवाहमित्येवं स्त्री दृढं ज्ञानवत्यलम् ॥ ५४ ॥
भोगार्थमिह चायातौ भेदो नास्त्यावयोः खलु ।
स्यादिति ज्ञानमभ्रान्तं तदा मुक्तिर्न चान्यथा ॥ ५५ ॥
शिवशक्त्योः सदैवेह संयोगो मोक्ष एव सः ।
द्वयोरद्वैतकरणं योगः सर्वत्र कथ्यते ॥ ५६ ॥
शिवशक्त्योः समायोगादानन्दो योऽनुभूयते ।
स एव मोक्षो विदुषामबुद्धानां तु पातकम् ॥ ५७ ॥

शिवोक्तं कः क्षमो व्यर्थीकर्तुं मूढजनः प्रिये ! ।
कल्पितानि भ्रमाच्छास्त्राण्यन्यानीह महर्षिभिः ॥ ५८ ॥
भोगो योगायते साक्षात् पातकं सुकृतायते ।
मोक्षायते हि संसार इत्युक्तं श्रीशिवागमे ॥ ५९ ॥
स्त्रियं विना न मोक्षोऽस्ति वामैव मुक्तिसाधनम् ।
शक्तिरेवेह शुद्धा स्त्री भुक्तिमुक्तिप्रदा भृशम् ॥ ६० ॥
न स्त्रिया अधिकं तीर्थं न जपोऽप्यधिकं स्त्रियाः ।
न तपोदानयात्रादि न योगो न च दैवतम् ॥ ६१ ॥
स्त्रीरूपं यो न जानाति स भ्रष्टः किं करिष्यति ।
भोगमोक्षातिकामस्तु स्त्रीतत्त्वं सततं स्मरेत् ॥ ६२ ॥
स्त्रीदेहो विदुषां शश्वद् भोगमोक्षालयः खलु ।
शिवेनोक्तः स्वशास्त्रे तु मूढानां नरकालयः ॥ ६३ ॥
अज्ञात्वा तात्त्विकं स्त्रीणां रूपमुद्भ्रान्तमानसाः ।
शून्यवैराग्यसंशुष्का भ्रमन्ति भुवि केचन ॥ ६४ ॥
दण्डिनो जटिलाः केचिन् मुण्डा नग्नाः पिशाचवत् ।
राजयोगो न तैर्दृष्टो मोक्षस्तु प्राप्यते कुतः ॥ ६५ ॥
निन्दन्त्यत्र जडाः केचित् स्त्रीरूपं परमामृतम् ।
धिक्तान् धिक्तान् धिगित्येवं कथयन्ति शिवागमाः ॥ ६६ ॥
अज्ञात्वा योऽङ्गनारूपं त्यक्त्वा मोक्षाय गच्छति ।
सोऽन्धकारे पतत्युग्रे मोक्षाशा तस्य निष्फला ॥ ६७ ॥
दुःसहः खलु संसार-स्तत्रापि स्त्री तु दुःसहा ।
शक्या सोढुं राजहंसैः काकानां तु कुतो बलम् ॥ ६८ ॥
भ्रमन्तु भूतवद्भूमौ भ्रान्ताः केचन कुत्रचित् ।
मोक्षस्तु दुर्लभस्तेषां स्त्रीतत्त्वज्ञानमन्तरा ॥ ६९ ॥
ब्रह्मा विष्णुश्च रुद्रश्च राजन्ते स्त्रीप्रसङ्गतः ।
महर्षयस्तथा देवा मनुजेषु तु का कथा ॥ ७० ॥
कदाचिद्दैवयोगेन स्त्रीवियोगोऽत्र जायते ।
पुनर्दैववशात्प्राप्तिर्न वियोगो हि सर्वदा ॥ ७१ ॥
जायतेऽपीश्वरादीनां स्त्रीवियोगस्तु कर्हिचित् ।
वस्तुतो न वियोगोऽस्ति पुनः प्राप्तिर्यतः स्मृता ॥ ७२ ॥
ब्रह्मणो मानसाः पुत्राः स्मृता ये सनकादयः ।
स्थिता बुद्धिं स्त्रियं मत्वा यतस्ते तु मनोमयाः ॥ ७३ ॥

ब्रह्माऽपि मानसी मत्वा शून्यां सृष्टिं तु मैथुनीम् ।
कृतवांस्तात्त्विकीमग्रे समर्थोऽपि शिवेच्छया ॥ ७४ ॥
स्त्रीतत्त्वज्ञा हि ये यत्र ते मुक्तास्तत्र जन्तवः ।
नान्यत्र तद्विना मुक्तिः सा तु नित्यं स्त्रियां स्थिता ॥ ७५
धन्यं स्त्रीरूपमत्यर्थं निर्वाणपदमव्ययम् ।
यत्र योगीश्वरा नित्यं रमन्ते शङ्करादयः ॥ ७६ ॥
न शोको न जरा मृत्युर्न जनुर्न भ्रमः क्वचित् ।
स्त्रीतत्त्वज्ञाः सदा मुक्ताः शिवशक्तिपदस्थिताः ॥ ७७ ।
स्त्रीरूपं दुर्लभं लोके ज्ञातव्यं गुरुशास्त्रतः ।
भोगदं मोक्षदं दिव्यं देहदुःखविनाशनम् ॥ ७८ ॥
तत्त्वशास्त्राण्यनेकानि दर्शितान्यत्र तात्त्विकैः ।
शून्यान्येव समग्राणि मोक्षैकफलदानि वा ॥ ७९ ॥
कृतार्थास्तेऽत्र ते तीर्णा यैरात्ता तात्त्विकी प्रिया ।
न तद्भाग्यसमं भाग्यं भाग्यवन्तस्त एव हि ॥ ८० ॥
किं वित्तं पुत्रपौत्रादि किं यशः प्रथितं भुवि ।
किमु राज्यं सार्वभौमं नोऽङ्गना यस्य तात्त्विकी ॥ ८१ ॥
दर्शिताः श्रुतिभिर्भूमावाश्रमाश्च द्विजन्मनाम् ।
चत्वारस्तेषु मध्ये हि द्वितीयः प्रवरः प्रिये ! ॥ ८२ ॥
तत्र कल्पलता कान्ता मनोभीष्टप्रदायिनी ।
भव्यैर्भोगैश्च सन्तर्प्य पुरुषं शिवतां नयेत् ॥ ८३ ॥
विवाहसमये स्त्रीभ्यः प्रदत्तं श्रुतिभिः पुरा ।
प्राधान्यं हि परत्रेह प्रापणार्थं परं सुखम् ॥ ८४ ॥
श्वसुरे भव सम्राज्ञी सम्राज्ञी श्वश्र्वां भव ।
ननान्दरि च सम्राज्ञी सम्राज्ञी देवरेष्विति ॥ ८५ ॥
यज्ञहोमतपोदानव्रतादिषु तदार्हता ।
यदा वामाङ्गसंलग्ना ललना ललितात्मिका ॥ ८६ ॥
कुब्जा निर्नयना खञ्जा कृष्णा कुष्ठान्विता कृशा ।
मन्दा मूढा प्रमादाढ्या विकटा व्यभिचारिणी ॥ ८७ ॥
तीव्रा तुङ्गातिखर्वा च तामसीलक्षणान्विता ।
अनेकापगुणैर्युक्ता त्याज्या तज्ज्ञैस्तथापि नो ॥ ८८ ॥
कोटिशो यदि सा कुर्यादपराधानिहोन्मदा ।
क्षमाविष्टो न गालीस्तां दद्यान्नैवापि ताडयेत् ॥ ८९ ॥

प्रारब्धवशतः सर्वं चलति स्वबलं कियत् ।
क्लेशस्तस्मान्न कर्तव्यः शिक्षयेच्छास्त्रतः शनैः ॥ ९० ॥

पुरुषेभ्यः स्त्रियो धीराः कर्त्तुं शक्ताः स्त्रियोऽखिलम् ।
स्त्रीसाध्यं सर्वमेवेह न साध्या स्त्री तु कस्यचित् ॥ ९१ ॥

राधे राधे च कृष्णोऽपि विधिर्वाणी विशेषतः ।
लक्ष्मी नारायणो नित्यं शक्तिं च स्मरते शिवः ॥ ९२ ॥

पूर्णगिर्यादयस्तस्या देहे पीठाः सनात् स्थिताः ।
तत्त्वज्ञेभ्यस्तु ते नित्यं भोगमोक्षौ ददत्यपि ॥ ९३ ॥

प्रादुर्भवन्ति भूतानि नानारूपाणि नित्यशः ।
शक्तितश्च विलीयन्ते शक्ताविल्यागमोक्तयः ॥ ९४ ॥

सर्वाधारा सर्वसत्त्वा सर्वोत्कृष्टाऽखिलात्मिका ।
स्वाधीनागाधधिषणा शक्तिर्मुक्तिस्वरूपिणी ॥ ९५ ॥

अधरे चामृतं यस्यास्ततो मिष्टतमं वचः ।
कुचयोस्तु सुखं किंचि-द्योनिरानन्दनिर्भरा ॥ ९६ ॥

मस्तकादानखं सर्वं रहस्यं स्त्रीकलेवरम् ।
संस्मृतं पूजितं स्पृष्टं क्रीडितं भुक्तिमुक्तिदम् ॥ ९७ ॥

तत्त्वज्ञाः श्रद्धानाश्च सामरस्यसुखोत्सुकाः ।
यत्र भोगाश्रितं मोक्षं काङ्क्षन्ते तेऽधिकारिणः ॥ ९८ ॥

## इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे स्त्रीप्रशंसा नाम द्वात्रिंशोल्लासः ॥ ३२ ॥

अथ हंसः । किञ्च भो कान्ते ! लोकेऽपि सिद्धं यत् स्त्रीषु पातिव्रत्यं न तत् पुरुषेष्वेकपत्नीव्रतम् ।

कथम् ।

प्रेक्ष्यताम् । दैवाद्यदि स्त्रियाः प्राक् पुमान् प्रम्रियेत । तर्ह्येव तत्प्रीतये घृतताटङ्काद्याभरणभरं धिक्कृत्य कुलीना सा विरक्ता भवति । न पुनः परिणयति । पुमांस्तु जीवन्त्यामपि तस्यां पुनः पुनरुपयच्छत इति त्वयेतस्ततो दृश्यते ।

एका तु सालङ्कृता तनुतनयवित्ताद्यं कृत्स्नमवस्तुभूतं तिरस्कृत्य स्वामिन. शवेन साकं जीवदात्मशरीरं भस्मसात् करोति ।

इतराऽपि यावज्जीवं किङ्करीभूय मनोवाक्कायकर्मभिस्तदनुज्ञया दिवानिशं स्वामिनमेव सहर्षं शुश्रूषते ।

किमधिकं प्रशंसेयम् । नवधा भक्तिस्तु सर्वथाऽस्मिन् संसारे स्त्रीष्वेव दृश्यते । न पुंसु ।

यज्जानन्त्या वाऽज्जानन्त्यापि प्रियया प्रत्यक्षं भगवद्रूपो भर्त्तैवाविरतं सद्भक्त्या भज्यते ।

कामिनि ! यथोक्तसद्भक्तिलक्षणकार्मणेन किङ्करीकृतः पतिर्यद्यपि तस्यां लालनपालनादिनाऽनुवर्त्तमानोऽप्यज्ञत्वेन तस्य तत्सर्वं निरर्थायैव न सामरस्यसुखायेत्यतोऽस्मद्दर्शितं स्त्रीतत्त्वमुपश्रुत्य श्रीपारमहंस्यलक्षणो रास आश्रयणीयः ।

युवते ! यत् पण्डितंमन्यैर्यतस्ततः स्त्री धिक्क्रियते तत्तु पुंसो विषयित्वनिवारणायैव न खलु तत् त्यागायेत्यावेद्यम् । यदि तु केनचित् पुंसा वैराग्यकथामाकर्ण्य मौर्ख्येण पतिव्रतपरायणा परिणीता पत्नी त्यज्येत । यद्वा तद्रूपमविज्ञायाश्रीयेत भोगलालसया तदुभयथापि दुःखभार एव । न हि क्वचित् सन् सुखलेशः ।

किञ्च ।

धिक्धिगज्ञस्य ज्ञानं यदुद्वाहसमये तया सह सख्यं कृत्वा पुनस्तां तित्यक्षति ।

**श्रुतिः ।**

सखा सप्तपदी भव । सख्यं ते गमेयं, सख्यं ते मायोषा, । सख्यं ते मायोष्ठ्याः । इति **व्याख्यायते ।**

पतिः कन्यां प्रार्थयते । हे कन्यके मम त्वं सखा-सखी समानख्याना सहाऽधिकारिणी भव । सप्तपदी-सप्तपदाक्रान्ता भव, अहं ते तव सख्यं मैत्री गमेयं-प्राप्नुयां सखा भवाप्रीत्यर्थः । ते तव मया सह सख्यं योषा अन्याः स्त्रियो माविच्छिन्दंत्विति शेषः । किञ्च ते तव सख्यं मायोष्ठ्याः-मयःसुखं तस्य उत्थानं मयोत्थं, तत्र भवा मायोष्ठ्यः-सुखकारिण्यः स्त्रियः याः तास्त्वया सह मम सख्यं कुर्वन्त्वित्यर्थः ।

अन्यत्रापि ।

पत्नी मनोरमां देहि मनोवृत्तानुसारिणीम् । तारिणी दुर्गसंसारसागरस्य कुलोद्भवाम् ।

इति कल्पान्तरे केनचित् पुंसा प्रार्थिता श्रीपराशक्तिः स्वयमेव कलया दुस्तरसंसारसागरतारणाय तरिरूपिणी समाश्रिता । अतस्तस्याः स्वरूपमबुद्ध्वा वैधेयो भवाम्बुधौ तद्धिकृत्या बुडत्येव । तदाश्रितस्तु जन्ममरणाद्यनेकविधदुःखोदधिं तरतीत्यास्वादयति च सामरस्यसुखम् ।

शङ्करश्च ।

परब्रह्माभिख्यं रसयति रसं त्वद्भजनवान् ।

किमुक्तम् ।

कलया प्रत्यक्षं वर्त्तमानायास्तव स्त्रीरूपिण्या भक्तः परमहंसो भूत्वा सामरस्यमास्वादयतीत्याशयः ।

किं बहुना ।

सुन्दरि ! अस्मत्सखायो यत्र यत्र ये ये तत्र तत्र ते तेऽखिलाः निःशङ्कतया विज्ञात तन्वीतत्त्वरूपास्तत्परायणा एव यावदायुस्तावदस्मिन् संसार आसताम् ।

न खलु काचिच्छङ्का ।

इतरे तु । अनभिज्ञा दिङ्मूढवत् किञ्चन शास्त्रान्तरमाश्रुत्येतस्ततस्तिरस्करिणीतिरस्कृतात्मज्ञाना बहिर्विरक्तवेषा मोक्षेच्छया यथेच्छं भिक्षुका भवन्तु । मोक्षस्वरूपज्ञानमौढ्यात् तदखिलं तेषां मोघमेवेति तन्व्या प्रतिपत्तव्यम् ।

ननु यत्र संयोगस्तत्र वियोग इति प्रसिद्धं, सत्यम् । मायाविवरनिर्मितेऽस्मिन्नवस्तुभूते त्वेतन्निर्ध्वंकितं तथ्यमेव । नहि तदतिरिक्ते सच्चिदानन्दोज्जृम्भिते श्रीसामरस्ये ।

'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्' ।

इति निवारितत्वान्न तत्र किञ्चित्कुतर्कैस्तर्कितव्यम् । श्रीपरमेश्वरस्य वाण्येव प्रमाणम् । नान्येषामनुमानादीनामतर्क्यैश्वर्ये प्रामाण्यमाश्रयितव्यम् ।

किंचात्रावस्तुभूतेऽपि स्त्रीपुंसशरीरे पृथग्भूतं लीलार्थं वस्तुरूपं शक्तिशिवयुगलमुल्लसति । आवरणविक्षिप्तवशान्न तादृग्विधं ज्ञानम् । अतः सद्गुरोः कृपया दीक्षितौ भूत्वा तद्दर्शितमात्मनः शक्तिशिवयोः स्वरूपं पृथग्भूतमनुभूय संयुक्तौ वियुक्तावपि जम्पती श्रीसामरस्यं निषेवेताम् ।

किमुक्तं, केवलं स्त्रियाथवा पुरुषेणात्मनः शक्तिस्वरूपं शिवरूपं च विभाव्य स्त्री चेच्छक्तिरेवाहं श्रीपरमशिवस्वामिना सार्द्धं विहरामीति, पुमांश्चेत् परमशिवोऽहं श्रीपराशक्त्या सहाविरतं विलसामीति च ।

नावयोर्जन्ममरणनामरूपवर्णाश्रमधर्मकर्मसुखदुःखसंयोगवियोगाद्यमवस्तुभूतं किमपि कालत्रयेऽस्त्येवंप्राये पूर्णपदे श्रीसामरस्यस्वरूपे तुरीयावस्थयाऽशेषसञ्चितप्रारब्धक्रियमाणकर्मफलपर्यवसानान्तं मन्त्रप्राप्त्यनन्तरं सुखेन स्थातव्यं न क्वचन कदृहैरीषदाशङ्क्यम् ॥

**श्रुतिः ।**

'तत्र को मोहः कः शोक एकत्वमनुपश्यत'इति ।

'शक्तिः शिवः शिवः शक्ति' रित्युक्तेस्तयोर्न खल्वेकत्वे भिन्नत्वेऽपि मनाग् भेदावकाश, येन संयोगवियोगावसरः प्रसज्येत । श्रीललितलीलाकलेवरे मा मर्त्यमनीषया मीमांसाश्रयणीयेति **सिद्धान्तः ।**

प्रिये ! । श्रीवासिष्ठदर्शितां ज्ञानस्य सप्तमी भूमिकां तुर्याभिधामारूढौ दंपती सदैव संयुक्तौ शक्तिशिवस्वरूपौ श्रीरासक्रीडां कुर्वातामित्या**गमशास्त्रराद्धान्तः ।**

अथ हंसी । भोः स्वामिन् ! **वासिष्ठ**प्रदर्शिता ज्ञानस्य सप्त भूमिकाः का ।

श्रीहंसः । शृणु शक्ते ।

**वासिष्ठे ।**

ज्ञानभूमिः शुभेच्छा स्यात्प्रथमा परिकीर्तिता ।
विचारणा द्वितीया च तृतीया तनुमानसा ॥ १ ॥
सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका ।
पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ॥ २ ॥

**लक्षणम् ।**

किं मूढ इव तिष्ठामि प्रेक्ष्येऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति **शुभेच्छे**त्युच्यते बुधैः ॥ १ ॥

**अर्थः**, आत्मतत्त्वं प्रेक्ष्ये, शेषं सुगमम् ॥ १ ॥

शास्त्रसज्जनसम्पर्कवैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा **विचारणा** ॥ २ ॥

**अर्थः**, शास्त्रसम्पर्कोऽध्यात्मशास्त्रविचारणा, सज्जनसम्पर्को ब्रह्मनिष्ठसेवा, शास्त्रसज्जनसम्पर्कै उपायैः वैराग्याभ्यासो नाम वैराग्यहेतुभूतदृश्यमिथ्यात्वाय दोषदर्शनाभ्यासः, सदाचारप्रवृत्तिः-अध्यात्मशास्त्रविचारः 'श्रोतव्यो मंतव्य'इति श्रुत्युक्तश्रवणमननरूपा ।

हंसी । श्रवणमननयोर्लक्षणमुच्यताम् ।

हंसः । श्रवणं नामाशेषवेदान्तानामद्वितीयवस्तुनि तात्पर्यावधारणम् ॥ १ ॥

मननं तु, श्रुतस्याद्वितीयवस्तुनो वेदान्तार्थानुगुणयुक्तिभिरनवरतमनुचिन्तनम् ॥ २ ॥

निदिध्यासनात्मिकां तृतीयां भूमिकां निर्वक्ति ।

विचारणाशुभेच्छाभ्यामिन्द्रियार्थेष्वरक्तता ।
यत्र सा तनुताभावात् प्रोच्यते **तनुमानसा** ॥ ३ ॥

यत्र यस्यामवस्थायां पूर्वोक्तशुभेच्छाविचारणाभूमिकाभ्यां हेतुभ्यामिन्द्रियार्थेषु अरक्तता उदिता, सावस्था तनुमानसोच्यते, तनु मानसं यस्यां सा ।

निदिध्यासनं तु । विजातीयदेहादिप्रत्ययरहिताऽद्वितीयवस्तुनि सजातीयवस्तुप्रत्ययप्रवाहः ।

एतच्च भूमिकात्रयं ब्रह्मज्ञानसाधनमेव । न तु ज्ञानकोटावन्तर्भवति । भेदसत्यताबुद्धेरविनष्टत्वात् । अत एव एतज्जागरणम् ॥ ३ ॥

भूमिकात्रितयाभ्यासाच्चित्तेर्थविरतेर्वशात् ।
सत्त्वात्मनि स्थितिः शुध्दे **सत्त्वापत्ति**रुदाहृता ॥ ४ ॥

**अर्थविरतिः**-अनात्मपदार्थेषु अरुचिः चित्ते निष्पन्नाया अर्थविरतेर्वशात् सत्त्वात्मनि सत्ताभावस्वरूपे ब्रह्मणि स्थितिः अवस्थितिः । इयं च स्वप्नाख्या चतुर्थी भूमिका, अपरोक्षज्ञानमेव, न साधनकोटावन्तर्भवति ॥ ४ ॥

दशाचतुष्टयाभ्यासादसंसर्गफलाय च ।
रूढसत्त्वचमत्कारा प्रोक्ताऽ**संसक्तिनामिका** ॥ ५ ॥

प्रागुक्तावस्थाचतुष्टयस्याभ्यासात् कारणात् रूढसत्त्वचमत्कारा-प्ररूढः दृढं निष्पन्नः सत्त्वस्यान्तःकरणस्य चमत्कारः-परमसूक्ष्मब्रह्मानन्दग्रहणवैदग्ध्यं यस्यां भूमिकायां सा । यद्वा । सत्त्वशब्देन सत्त्वगुणो गृह्यते, प्रवृद्धसत्त्वगुणचातुरी पञ्चमी भूमिः । असंसर्गफलाय, प्रातिभासिकविषयेषु रागाभ्यासस्यापि निवृत्तिफलायेत्यर्थः । निरतिशयानन्दानुभवफलाय चेति, चकारार्थः । इयं पञ्चमी भूमिः सुषुप्तिरित्युच्यते । अत्र समाधेः स्वयमेव व्युत्तिष्ठति ।

भूमिकापञ्चकाभ्यासात् स्वात्मारामतया दृढम् ।
आभ्यन्तराणां बाह्यानां पदार्थानामभावनात् ॥
परप्रयुक्तेन चिरं प्रयत्नेनात्मबोधनम् ।
**पदार्थाभावनी** नाम षष्ठी सञ्जायते गतिः ॥ ६ ॥

स्वात्मारामतया हेतुना आभ्यन्तराणां सुखदुःखादीनां बाह्यानां घटादीनां पदार्थानां दृढम् अभावनात् अनुपलम्भात् । चिरं परप्रयुक्तेन अन्यकृतेन प्रयत्नेन, आत्मबोधनं-समाधेः सकाशात् स्वव्युत्थानं, पदार्थानामभावना यस्यां सा, षष्ठी गतिः अवस्था । गूढसुषुप्तिरियम् ।

## समाधिर्द्विविधः, सविकल्पो निर्विकल्पश्चेति ।

तत्र **सविकल्पो** नाम-ज्ञातृज्ञानादिविकल्पभेदलयानपेक्षयाऽद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेः संस्थानम् । तदा मृण्मयगजादिभानेऽपि मृद्भानवद्द्वैतभानेप्यद्वैतं वस्तु भासते ।

**निर्विकल्पस्तु**-ज्ञातृज्ञानादिविकल्पभेदलयापेक्षयाऽद्वितीयवस्तुनि तदाकाराकारितायाश्चित्तवृत्तेरतितरामेकीभावेनावस्थानम् । तदा जलाकाराकारितलवणानवभासेन जलमात्रावभासवत् अद्वितीयवस्त्वाकाराकारिताचित्तवृत्त्यनवभासेनाद्वितीयवस्तुमात्रमेव भासते ॥ ६ ॥

## सप्तमीभूमिकामाह ।

भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भतः ।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया **तुर्यगा** गतिः ॥ ७ ॥

स्वभावैकनिष्ठत्वं, स्वो भावः स्वभावरूपः । तस्मिन्नेकस्मिन्नेवातितरां स्वतः परतो वा पुनरुत्थानं विनैव तिष्ठतीति स्वभावैकनिष्ठः-तस्य भावस्तत्त्वं, सा सप्तमी तुर्या अवस्था । मुमुक्षुषु वर्तमानमवस्थात्रयात्मकं जागरितम् । चतुर्थभूम्यात्मकं स्वप्नम् । पञ्चमषष्ठभूमिकात्मकं सुषुप्तम् । तदपेक्ष्य स्वरूपमेव तुरीयं चतुर्थं, तद्गच्छतीति तुर्यगा ॥ ७ ॥

एषा हि जीवन्मुक्तेषु तुर्यावस्थेह विद्यते ।
विदेहमुक्तविषयं तुर्यातीतमतः परम् ॥ ८ ॥

## इति ज्ञानभूमिकासप्तकम् ॥

तरुणि ! श्रीतुर्यावस्थापर्याप्तस्य श्रीरसिकस्यास्मिल्लोके विलासः कीदृश इत्यत्रापि **श्रीवासिष्ठं** शृणु ।

श्रीरामं प्रति **वसिष्ठः** ।

पूर्णां दृष्टिमवष्टभ्य ध्येयत्यागविलासिनीम् ।
जीवन्मुक्ततया स्वस्थो लोके विहर राघव ! ॥ १ ॥
अन्तः सन्त्यक्तसर्वाशो वीतरागो विवासनः ।
बहिः सर्वसमाचारो लोके विहर राघव ! ॥ २ ॥
उदारः पेशलाचारः सर्वाचारानुवृत्तिमान् ।
अन्तःसर्वपरित्यागी लोके विहर राघव ! ॥ ३ ॥
प्रविचार्य दशाः सर्वा यदतुच्छं परं पदम् ।
तदेकभावेनालम्ब्य लोके विहर राघव ! ॥ ४ ॥
अन्तर्नैराश्यमादाय बहिराशोन्मुखेहितः ।
बहिस्तप्तोऽन्तराशीतो लोके विहर राघव ! ॥ ५ ॥
बहिःकृत्रिमसंरम्भो हृदि संरम्भवर्जितः ।
कर्त्ता बहिरकर्त्तान्तर्लोके विहर राघव ! ॥ ६ ॥

कृत्रिमोल्लासहर्षस्थः कृत्रिमोद्वेगगर्हणः ।
कृत्रिमारम्भसंरम्भो लोके विहर राघव ! ॥ ७ ॥

इत्यादिलक्षणः ।

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे श्रीपुंसयोरद्वयविलास-लक्षणं नाम त्रयस्त्रिंशोल्लासः ।**

अथ श्रीहंसः । शृणोषि हंसि ! त्वमपीह श्रीरासदीक्षिता जाता, त्वयाऽस्मद्दत्तं श्रीगुरु-मन्त्रादिकं श्रीपराप्रासादविद्याद्यं च प्राप्तम् ।

किन्तु । विद्याप्राप्त्यनन्तरं प्रापञ्चिकनामात्मनो न श्रीरासमण्डले वक्तव्यम् । अतोऽत्रा-द्यारभ्य रसिका हंसी शक्तिरित्याद्याख्या स्त्वयि जाताः । तवेतः प्राग्गतमेव मायोपकल्पितं नाम रूपाद्यमखिलं लौकिकम् । त्वमिदानीमस्मदर्द्धाङ्गाधिकारिणी स्वरूपसंपन्ना । पश्य पश्य प्रिये ! पूर्णवैराग्यफलं, यदौपनिषद्यं परं रहस्यं भवत्या भाग्यवशादासादितम् । ब्राह्मणानामप्ये-तत्सुदुर्लभम् ।

किञ्च, विद्याप्राप्तिमात्रेणैव कर्तव्यावशिष्टं तु नास्त्येव, निवृत्त एव श्रीतिरस्करिणीनिद्रा-पटः । तदपि चेतोविलासविचित्रचमत्कृतये चायुषः पर्यवसानान्तं योगचतुष्टयं विधेयं, न तु पुनरुत्पत्तित्रासः । अद्यैवेदं शरीरं विशीर्यतु, म्रियतां वाऽन्यस्मिन् चिरकाले । किन्तु भूयो जन्मापत्तिर्नाशङ्क्या । एवं वर्त्तमानेऽपि श्रीसामरस्यस्वरूपसाक्षात्काराय योगचतुष्टय-मप्यनुष्ठेयं, नोचेत्कालनिर्वाहो न स्यात् ।

अतोऽत्र **श्रीयोगचतुष्टयं** वच्मः ।

योगिनि ! योगाश्चत्वारः । कर्मयोगः, भक्तियोगः, ज्ञानयोगः, राजयोगश्चेति ।

तत्रादौ कर्मयोगविधानं व्याचक्ष्महे । पुरश्चरणमित्येतस्य नामेत्यागमविदो वदन्ति मन्त्रयोगश्चेत्याद्यपि ।

अथैतस्य प्रशंसा ।

**आगमान्तरे ।**

जपयज्ञात् परो यज्ञो नापरोऽस्तीह कश्चन ।
तस्माज्जपेन धर्मार्थकाममोक्षांश्च साधयेत् ॥ १ ॥
सर्ववादान्परित्यज्य मन्त्रवादं समभ्यसेत् ।
अप्रमादाद्भवेत्सिद्धिः प्रमादः सिद्धिहानिकृत् ॥ २ ॥
भोगापवर्गौ सङ्कल्प्य व्रताचार्ययुतं जपेत् ।
जपध्यानमयं योगं तस्माद्देवि ! समभ्यसेत् ॥ ३ ॥
संसारे दुःखभूयिष्ठे यदीच्छेत्सिद्धिमात्मनः ।
पञ्चाङ्गोपासनेनैव मन्त्रयोगी सुखं व्रजेत् ॥ ४ ॥
इति ।

**पञ्चाङ्गानि तु ।**

जपश्चैव ततोहोमस्तर्पणं मार्जनं तथा ।
एवं ब्राह्मणभुक्तिश्च पुरश्चरणमुच्यते ॥ १ ॥
यद्यदङ्गविहीनश्चेत्तत्सङ्ख्याद्विगुणो जपः ।
कार्यो द्विस्त्रिश्चतुःपञ्चसङ्ख्याकः साधकैः शिवे ! ॥ २ ॥
कुर्वीत साङ्गसिद्ध्यर्थं तदशक्तस्तु भक्तितः ।
स चेदङ्गं विहीयेत मन्त्यनिष्टमवाप्नुयात् ! ॥ ३ ॥
न्यूनातिरिक्तकर्माणि न सिद्ध्यन्ति कदाचन ।
यथाविधि कृतानीह सत्कर्माणि फलन्ति हि ॥ ४ ॥
तद्विधानकृतं कर्म जपहोमार्चनादिकम् ।
देवताप्रीतिदं भूयाद्भुक्तिमुक्तिफलप्रदम् ॥ ५ ॥
सम्यक् सिद्ध्यति मन्त्रस्तु पञ्चाङ्गोपासनेन हि ।
सर्वे मन्त्राः प्रसिद्ध्यन्ति तत्प्रभावान् महेश्वरि ! ॥ ६ ॥
उपदेशस्य सामर्थ्यात् सद्गुरोस्तु प्रभावतः ।
मन्त्रप्रभावाद्भक्त्या च मन्त्रसिद्धिः प्रजायत ॥ ७ ॥
यो मन्त्रः सद्गुरोर्लब्धः स एव सिद्धिभाग्भवेत् ।
पूर्वजन्मकृताभ्यासान्मन्त्रो वा सर्व(शीघ्र)सिद्धिदः ॥ ८ ॥
दीक्षापूर्वं महेशानि ! पारम्पर्यक्रमागतम् ।
न्यायलब्धं तु यन्मन्त्र तच्च सिद्ध्यत्यसंशयम् ॥ ९ ॥

## ॥ अथ वर्ज्यम् ॥

व्यग्रतालस्यनिष्ठीवक्रोधपादप्रसारणम् ।
अन्यभाषाऽन्त्यजेक्षे च जपकाले त्यजेत्सुधीः ॥ १ ॥
स्त्रीशूद्रभाषणं निन्दां ताम्बूलं शयनं दिवा ।
प्रतिग्रहं नृत्यगीते कौटिल्यं वर्जयेत् सुधीः ॥ २ ॥
जाड्यं दुःखं तृणच्छेदं मनोऽस्वास्थ्यमधीरताम् ।
हसनं देहवाद्यं च जपकाले विवर्जयेत् ॥ ३ ॥
रसाचारोदिताशौचे न तु देहेनेत्यादिकमपि ।

## । अथ विधिः ।

भूशय्या ब्रह्मचर्यं च त्रिकालं देवतार्चनम् ।
नैमित्तिकार्चनं देवस्तुतिं विश्वासमाश्रयेत् ॥ १ ॥
आमध्याह्नं जपं कुर्यादुपांशुं वाथ मानसम् ।
हविष्यं निशि भुञ्जीत त्रिस्नाय्यभ्यङ्गवर्जितः ॥ २ ॥

प्रत्यहं प्रत्यहं तावन्नैव न्यूनाधिकं क्वचित् ।
रात्रौ चेदवकाशः स्यात्तावत्सङ्ख्याजपं चरेत् ॥ ३ ॥
भैक्ष्यं हविष्यं शाकानि शर्करा च फलं पयः ।
मूलं सक्तु यवास्पन्नमष्टावन्नानि मंत्रिणाम् ॥ ४ ॥

## ॥ अथ देशः ॥

पुण्यक्षेत्र नदीतीरं गुहा पर्वतमस्तकम् ।
तीर्थप्रदेशः सिन्धूनां सङ्गमः पावनं वनम् ॥ १ ॥
उद्यानानि विविक्तानि बिल्वमूलं तटं गिरेः ।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥ २ ॥
अथवा निवसेत्तत्र यत्र चित्तं प्रसीदति ।
सूर्यस्याग्रे पुरश्चेन्दोर्दीपस्य च जलस्य च ॥ ३ ॥
गोविप्रसुरवृक्षाणां सन्निधौ वाचरेज्जपम् ।

## । निषेधः ।

म्लेच्छदुष्टमृगव्याधशङ्काऽऽतङ्कादिवर्जितम् ॥ ४ ॥
जीर्णदेवालयोद्यानगृहवृक्षतलेषु च ।
नदीकूलादिकूपेषु भूच्छिद्रादिषु नोवसेत् ॥ ५ ॥

## ॥ अथ पृथ्वी ॥

स्फुटिता च सशल्या च वल्मीकारोहिणी तथा ।
दूरतः परिवर्ज्या भूः कर्त्तुरायुर्धनापहा ॥ १ ॥
स्फुटिता मरणं कुर्यात् सशल्या धननाशिनी ।
ऊषरा क्लेशदा नित्यं विषमा शत्रुतो भयम् ॥ २ ॥
ईशाकोणप्लवा सा च कर्तुः श्रीदा सुनिश्चितम् ।
पूर्वप्लवा वृद्धिकरी वरदा तूत्तरप्लवा ॥ ३ ॥
विद्वेषमरणव्याधीन्कुर्यादग्निप्लवा मही ।
धर्मराजप्लवा पृथ्वी नित्यं मृत्युभयप्रदा ॥ ४ ॥
गृहक्षयकरी सा च मन्त्रिणो नैर्ऋतिप्लवा ।
धनहानिकरी धात्री कीर्त्तिता वरुणप्लवा ॥ ५ ॥
वातप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी ।
श्वेतरक्तपीतकृष्णवर्णा विप्रादिकान् शुभा ॥ ६ ॥
घृतरसक्षारगन्धा विड्गन्धा तेषु च क्रमात् ।
एवं भूमि परीक्ष्यादौ स्वीकुर्यात् सिद्धये शुभाम् ॥ ७ ॥

राजानः सचिवा राजपुरुषाः प्रभवो जनाः ।
चरन्ति येन मार्गेण न वसेत्तत्र मन्त्रवित् ॥ ८ ॥
एकान्ते पावने दाररहिते भक्तसंयुते ।
सुदेशे धार्मिके राष्ट्रे सुभिक्षे निरुपद्रवे ॥ ९ ॥
रम्ये भक्तजनस्थाने निवसेन्न पराश्रये ।
गृहे शतगुणं विद्याद्गोष्ठे लक्षगुणं भवेत् ॥ १० ॥
कोटिर्देवालये प्रोक्तमनन्तं शिवसन्निधौ ।
एवं भूमिं समासाद्य कूर्मचक्रं ततो लिखेत् ॥ ११ ॥
चतुरस्रां भुवं मित्वा कोष्ठानां नवकं लिखेत् ।
लिखेत् पूर्वादिकोष्ठेषु सप्तवर्गाननुक्रमात् ॥ १२ ॥
लक्ष्मीशे मध्यकोष्ठे स्वरानुकक्रमाल्लिखेत् ।
दिक्षु पूर्वादितो यत्र क्षेत्राख्याद्याक्षरं स्थितम् ॥ १३ ॥
मुखं तत्तस्य जानीयाद्धस्तावुभयतः स्थितौ ।
कोष्ठौ कुक्षी उभे पादौ द्वे शिष्टं पुच्छमीरितम् ॥ १४ ॥
मुखस्थो लभते सिद्धिं करस्थः स्वल्पजीवितम् ।
उदासीनः कुक्षिसंस्थः पादस्थो दुःखमाप्नुयात् ॥ १५ ॥
पुच्छस्थः पीड्यते मन्त्री वन्धनोच्चाटनादिभिः ।
तस्मात्तदानने स्थैर्यं नान्यस्मिन्दुःखदे स्थले ॥ १६ ॥

## इति देशः ।

दीपनाथमनत्वा यो जपपूजां समाचरेत् ।
तत् फलं गृह्यते तेन तस्यायासफलं भवेत् ।
तस्मादीशानदेशस्थं प्रणमेत्तं तु मन्त्रवित् ।

## अथासनम् ।

तृणपल्लवकाष्ठानि पाषाणो मृत्तिका प्रिये ! ।
वशः कर्पटवस्त्रं च तथैव क्षितिरासनम् ॥ १ ॥
एतदष्टविधं देवि ! वर्जयेदासनं सदा ।
तृणासने भवेद्रोगः पल्लवे चित्तविभ्रमः ॥ २ ॥
काष्ठासनं मृत्युदं स्यात् दृषदुच्चाटनं भवेत् ।
ज्वरागमो मृत्तिकायां दारिद्र्यं वंशजासने ॥ ३ ॥
वस्त्रासने स्थाननाशो महापीडा धरासने ।
तस्मात्सर्वप्रयत्नेन साधयेच्छुभमासनम् ॥ ४ ॥
कुशः कम्बलवस्त्रं च पट्टव्याघ्रमृगाजिनम् ।
कल्पयेदासनं धीमान् सौभाग्यज्ञानसिद्धिदम् ॥ ५ ॥

पद्मस्वस्तिकवीरादिष्वासनेषूपविश्य च ।
जपार्चनादिकं कुर्यादन्यथा निष्फलं भवेत् ॥ ६ ॥

## अथ माला ।

अक्षमाला द्विधा प्रोक्ता कल्पिताऽकल्पिताऽपि च ।
कल्पिता मणिभिः प्रोता मातृका स्यादकल्पिता ॥ १ ॥
आदिक्षान्ताक्षरात्मत्वादक्षमालेति कीर्तिता ।
अनुलोमविलोमाभ्यां गणयेन्मन्त्रवित्तमः ॥ २ ॥
अनामामध्यरेखातः प्रादक्षिण्येन मन्त्रवित् ।
गणयेन्मध्यमामध्यमूलरेखाद्वयं त्यजन् ॥ ३ ॥
प्रोदिता करमालैषा सिद्धिदा मन्त्रिणां जपे ।
एकैकमङ्गुलीभिः स्यात् रेखाभिर्दशधा फलम् ॥ ४ ॥
मणिभिः शतसाहस्रं मालिन्यानन्तमुच्यते ।

## मणिश्च ।

सौवर्णं राजतं ताम्रं मौक्तिकं विद्रुमं तथा ।
पद्माक्षं च तथा शंखं रुद्राक्षं सर्वसिद्धिदम् ॥ १ ॥
चन्द्रकान्तिब्रह्मवर्तिकुशग्रन्थिभिरीरिता ।
शतं वै शङ्खमणिभिः प्रवालैश्च सहस्रकम् ॥ २ ॥
स्फाटिकैर्दशसाहस्रं स्वर्णैः कोटिगुणं स्मृतम् ।
कुशग्रन्थिभिरुद्राक्षैरनन्तफलमश्नुते ॥ ३ ॥
त्रिंशद्भिः स्याद्धन पुष्टिः सप्तविंशतिभिर्भवेत् ।
पञ्चविंशतिभिर्मोक्षः पञ्चदश्यभिचारकी ॥ ४ ॥
पञ्चाशद्भिर्महेशानि ! सर्वसिद्धिरुदाहृता ।
अष्टोत्तरशतेनापि मणीनां मालिका शुभा ॥ ५ ॥
अङ्गुष्ठेन जपेन्मोक्षस्तर्जनी शत्रुमर्दिनी ।
मध्यमा तु महादेवि ! सर्वसौभाग्यदायिनी ॥ ६ ॥
जपेदनामिका शान्तौ कनिष्ठा स्तम्भकारिणी ।

## अथ मालासंस्कारः ।

असंस्कृता कल्पिता चेदक्षमाला तु निष्फला ।
तस्मात् संस्कृत्य तामादौ जपेन्मत्रं न चान्यथा ॥ १ ॥
श्रीगुरोराज्ञया मन्त्री मालासंस्कारमाचरेत् ।
अथवा गुरुणा दत्ता संस्कृता सा शुभा मता ॥ २ ॥

आदायाश्वत्थवृक्षस्य पत्राणां नवकं शुभम् ।
अष्टदिक्षु तथा मध्ये प्रत्येकं स्थापयेत्ततः ॥ ३ ॥
भवेदष्टदलं पद्मं मध्ये मालां निधाय ताम् ।
क्षालयेत्पञ्चगव्येन मातृकां मूलमुच्चरन् ॥ ४ ॥
सद्यो जातेति मन्त्रेण पुन प्रक्षालयेज्जलैः ।
वामदेवेति मन्त्रेण तर्पयेच्चन्दनादिना ॥ ५ ॥
धूपयेत्तु दशाङ्गेन धूपेनाघोरमन्त्रतः ।
जपन् तत्पुरुषायेति मन्त्रं गन्धेन लेपयेत् ॥ ६ ॥
ईशान इति मन्त्रेण शतधा चाभिमन्त्रयेत् ।
पुनरेकैकवारं तां मन्त्रैस्तैरभिमन्त्र्य हि ॥ ७ ॥
आवाहयेद्विधानेन तस्यां स्वमनुदेवताम् ।
पूजयेदुपचारैस्तु मन्त्री षोडशभिश्च ताम् ॥ ८ ॥
वाणीन्दिराक्षमालायै नम इत्यभिमन्त्रयेत् ।
शतवारं चानुलोमविलोममातृकाणुना ॥ ९ ॥
होमं कृत्वा यथाशक्ति ब्राह्मणान् भोजयेतत ।
गुरवे दक्षिणां दद्याद्रहसि स्थापयेत्तु ताम् ॥ १० ॥
इत्थं सुसंस्कृता माला सर्वमन्त्रसमृद्धिदा ।
पुनस्तां गोपयेन्नित्य गुरोरपि न दर्शयेत् ॥ ११ ॥

। अन्यच्च ।

सङ्कल्पेन विना मन्त्रो न प्रिये ! सिद्धिदः कदा ।
एतावच्च जपिष्यामीत्यादौ सङ्कल्पयेत्ततः ॥ १ ॥
अकृत्वा न्यासजालं यो मूढात्मा प्रजपेन्मनुम् ।
सर्वविघ्नैः स बाध्येत व्याघ्रैर्मृगशिशुर्यथा ॥ २ ॥
यो न्यासकवचच्छन्नो मन्त्रं जपति तं प्रिये ! ।
दृष्ट्वा विघ्नाः पलायन्ते सिंह दृष्ट्वा यथा गजाः ॥ ३ ॥
आगमोक्तेन मार्गेण नित्यं न्यासान् करोति यः ।
स देवभावमाप्नोति मन्त्रसिद्धिश्च जायते ॥ ४ ॥
प्राणायामादिशुद्धात्मा यद्यत्कर्म करोति वै ।
तत्तत्फलत्यसन्देहं चान्यथा निष्फल प्रिये ! ॥ ५ ॥
तपांसि तीर्थयात्रादि मखदानव्रतानि च ।
प्राणायामस्य देवेशि ! कलां नार्हन्ति षोडशीम् ॥ ६ ॥

मानसं वाचिकं पापं कायिकं चापि यत् कृतम् ।
तत्सर्वं निर्दहेन्मन्त्री प्राणायामत्रयेण वै ॥ ७ ॥
दह्यन्ते ध्मायमानानां धातूनां तु यथा मलाः ।
तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥ ८ ॥
प्राणानायम्य तारेण पूरकुम्भकरेचकैः ।
द्वात्रिंशता चतुःषष्ट्या क्रमात् षोडशसङ्ख्यया ॥ ९ ॥
सूतकद्वयसंयुक्तो यो मन्त्रः स न सिध्यति ।
आद्यन्तरहितं कृत्वा मन्त्रमावर्त्तयेत्सुधीः ॥ १० ॥
जातसूतकमादौ स्यादन्ते वै मृतसूतकम् ।
सूतकद्वयनिर्मुक्तो मन्त्रः सर्वार्थसिद्धिदः ॥ ११ ॥
तद्दोषशान्तये धीमान् प्राणायामत्रयं चरेत् ।
तदा सूतकमुक्तः स्यान्मन्त्रोऽभीष्टफलप्रदः ॥ १२ ॥
कुण्डलीशिवसंयोगान्निष्पन्नामृतधारया ।
आनन्दमस्तकं देवि ! प्लावयेत्स्वकलेवरम् ॥ १३ ॥
मनसा यः स्मरेत्स्तोत्रं वचसा यः पठेन्मनु ।
उभयं निष्फलं देवि ! भिन्नभाण्डोदकं यथा ॥ १४ ॥
अतिह्रस्वो व्याधिहेतोरतिदीर्घस्तपःक्षये ।
अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ॥ १५ ॥
उच्चैर्जपोऽधमः प्रोक्त उपांशुर्मध्यमः स्मृतः ।
उत्तमो मानसो देवि ! त्रिविधः कथितो जपः ॥ १६ ॥

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे कर्मयोगे जपलक्षणं नाम चतुस्त्रिंशोल्लासः ॥ ३४ ॥**

## । अथ होमलक्षणम् ।

तत्रादौ कुण्डलक्षणम् ।

### आगमान्तरे ।

कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः ।
मध्यस्य दीर्घमानेन मानाङ्गुलमुदीरितम् ॥ १ ॥
अङ्गुलं चाष्टभिर्यवैरिति ।
बद्धमुष्टिः करो रत्निररत्निरकनिष्ठिकः ।
एकविंशत्यङ्गुलात्मा रत्निः ।
सार्द्धत्रयोविंशत्यङ्गुलमिताऽरत्निः ।
चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः ॥ २ ॥
किञ्च ।

रत्निमात्रमितं कुण्डं शतार्द्धे सम्प्रचक्षते ।
शतहोमेऽरत्निमात्र हस्तमात्रं सहस्रके ॥ १ ॥
द्विहस्तमयुते लक्षे-चतुर्हस्तमुदीरितम् ।
दशलक्षेषु षट्‌हस्तं कोट्यामष्टकरं स्मृतम् ॥ २ ॥

दशहस्तमपि ।
एकहस्तादीनां क्रमादङ्गुलादयोऽन्यत्र ।
वेदाक्षीणि २४ युगाग्नयः ३४ शशियुगा ४१ न्यष्टाब्धय ४८ स्त्रीपवो ।
५३ ष्टाक्षा ५८ वह्निरसाः ६३ स्वराङ्ककमिता ६७ नेत्रर्षया ७२ क्षस्वराः ७५
अङ्गुल्योऽथ यवाः ख० मभ्र० मिषवः ५ खं० पञ्च ५ षट् ६ सागराः ७ ।
सप्ता ७ भ्रं० मुनय ७ स्त्वमी निगदिता वेदास्त्रके बाहवः ॥ ३ ॥

## अथ कुण्डनवकनामानि ।

## आगमान्तरे ।

चतुरस्त्रं योनिरर्द्ध-चन्द्रं ऽयस्रं च वर्तुलम् ।
षडस्रं पङ्कजाकारमष्टारं नामभेदतः ॥ १ ॥
क्रमात् पूर्वाद्यष्टदिक्षु कुण्डान्यष्ट विदुर्बुधाः ।
आचार्यकुण्डं मध्येस्याद्गौरीपतिमहेन्द्रयो ॥ २ ॥

एतेषां मध्ये चतुरस्रमेवात्रोच्यते ।
अन्येषां रचना फलविशेषश्चान्यत्र द्रष्टव्य. ग्रन्थविस्तरभयात् ।
'सर्वसिद्धिकरं कुण्डं चतुरस्रमुदाहृतमि'ति प्राशस्त्यात् ।

विप्राणां चतुरस्र स्याद्राज्ञा वर्तुलमिष्यते ।
वैश्यानामर्द्धचन्द्राभ शूद्राणां ऽयस्रमीरितम् ।
चतुरस्रं तु सर्वेषां केचिदिच्छन्ति तान्त्रिका. ।
इत्यतश्चतुरस्रं कुण्डं दर्शयामः ।
हस्तमानमितां भूमिं पूर्ववत् परिसूत्रयेत् ।
समन्तात्कुण्डमेतत् स्याच्चतुरस्रं शुभावहम् ॥ १ ॥
यावत् कुण्डस्य विस्तारः खनन तावदेव हि ।
कुण्डस्य यादृशं रूपं मेखलानां च तादृशम् ॥ २ ॥
किमुक्तं ।

पञ्चदशाङ्गुलमितः खातः, नवाङ्गुलमिता मेखला इति चतुर्विंशत्यङ्गुलगर्त्तं कुण्डं सर्वत्र ।
बहूनामप्यङ्गुलानां चतुर्विंशत्यङ्गुलान्येव कल्प्यानि ।
तदात्मक एव हस्तश्च तावन्मितमेव कुण्डम् ॥

कुण्डानां मेखलास्तिस्रो मुष्टिमात्रे तु ताः क्रमात् ।
उत्सेधायामतो ज्ञेया द्व्येकार्द्धाङ्गुलसम्मिताः ॥ १ ॥

अरत्निमात्रे कुण्ड स्युस्तास्त्रिद्व ेकाङ्गुलात्मिकाः ।
एकहस्तमिते कुण्डे वेदाग्निनयनाङ्गुलाः ॥ २ ॥
कुण्डे द्विहस्ते ताः ज्ञेया रस ६ वेद ४ गुणाङ्गुलाः ।
चतुर्हस्ते तु कुण्डे ता वसु ८ तर्क ६ युगाङ्गुलाः ॥ ३ ॥
कुण्डे रसकरे ताः स्यु-र्दशाष्टर्त्वङ्गुलान्विता. ।
वसुहस्तमिते कुण्डे भानु १२ पङ्क्त्य १० ष्टकाङ्गुलाः ॥ ४ ॥
दशहस्तमिते कुण्डे मनु १४ भानु१२दशा१०ङ्गुलाः ।
विस्तारोत्सेधतो ज्ञेया मेखला सर्वतो बुधैः ॥ ५ ॥
मेखलानां भवेदन्तः परितो नेमिरङ्गुलात् ।
एकहस्तस्य कुण्डस्य वर्द्धयेत्त क्रमात्सुधीः ॥ ६ ॥
दशहस्तान्तमन्येषामर्द्धाङ्गुलवशात् पृथक् ।

**इति कण्ठः।**

होतुरग्रे योनिरासामुपर्यश्वत्थपत्रवत् ।
मुष्ट्यरत्न्येकहस्तानां कुण्डानां योनिरीरिता ॥ १ ॥
षट्चतुर्द्व्यङ्गुलायामविस्तारोन्नतशालिनी ।
एकाङ्गुलं तु योन्यग्रं कुर्यादीषदधोमुखम् ॥ २ ॥
एकैकाङ्गुलतो योनि कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयक्रमेणैव योन्यग्रमपि वर्द्धयेत् ॥ ३ ॥
स्थलादारभ्य नालं स्यात् योन्या मध्ये सरन्ध्रकम् ।
नार्पयेत् कुण्डकोणेषु योनि ता तन्त्रवित्तमः ॥ ४ ॥
योनिकुण्डे योनिमब्ज-कुण्डे नाभिं विवर्जयेत् ।
कुण्डानां कल्पयेदन्त-र्नाभिमम्बुजसन्निभम् ॥ ५ ॥
तत्तत्कुण्डानुरूपं वा मानमस्य निगद्यते ।
मुष्ट्यरत्न्येकहस्तानां नाभिरुत्सेधतारत ॥ ६ ॥
द्वित्रिवेदाङ्गुलोपेता कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयक्रमेणैव नाभिं पृथगुदारधीः ॥ ७ ॥
नाभिक्षेत्रं त्रिधा भित्त्वा मध्ये कुर्वीत कर्णिकाम्
बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत् ॥ ८ ॥

**इति नाभिः।**

कुण्डस्य रूपं जानीयात् परमं प्रकृतेर्वपुः ।
प्राच्यां शिरः समाख्यात बाहू दक्षिणसव्ययोः ।
उदरं कुण्डमाख्यातं योनिः पादौ च पश्चिमे ॥ १ ॥

मेखलात्रितयं योनिः खातं नाभिश्चतुर्दिशः ।
इत्थं दशाङ्गकुण्डं स्याद्वह्नेर्दशकलात्मकम् ।
स्थलनालसमेतं च द्वादशाङ्गं रवेः कला ।
चतुःकोणैस्तदेव स्यात् षोडशाङ्गं विधोः कला ॥ २ ॥

## इति कुण्डलक्षणम् ।

## तद्भेदे स्थण्डिलं च ।

हस्तमात्रेण तत् कुर्यात् वालुकाभिः सुशोभनम् ।
अङ्गुलोत्सेधसंयुक्तं चतुरस्रं समन्ततः ॥ १ ॥
कुण्डाभावे स्थण्डिलं स्यात्तन्मानं चतुरस्रकम् ।
द्वित्रिवेदाङ्गुलोत्सेधं सैकतं दर्पणोन्नतम् ॥ २ ॥
नित्यं नैमित्तिकं होमं स्थण्डिले वा समाचरेत् ।
तत्तत्कल्पोदितैर्द्रव्यै-स्तद्विधानमुदीर्यते ॥ १ ॥
प्राणायामं षडङ्गं च कृत्वा मूलेन मन्त्रवित् ।
कुण्डे वा स्थण्डिले कुर्यात् संस्काराणां चतुष्टयम् ॥ २ ॥
मूलेनेक्षणमस्त्रेण-प्रोक्षणं ताडनं कुशैः ।
वर्मणा मुष्टिनाऽऽसिञ्च्य लिखेद्यन्त्रं तदन्तरे ॥ ३ ॥
वह्निकोणषडस्राष्ट दलं भूमन्दिरात्मकम् ।
मध्ये तारपुटां मायां लिखित्वा पीठमर्चयेत् ॥ ४ ॥
मण्डूकात् परतत्वान्तं पीठशक्तीर्जयादिकाः ।
वागीशीवागीश्वरयो-र्योगपीठात्मने नमः ॥ ५ ॥
मायादिकः पीठमन्त्रस्तयोस्तेनासनं दिशेत् ।
यजेत्तौ तारमायाभ्यां गन्धाद्यैरुपचारकैः ॥ ६ ॥
लक्ष्मीनारायणौ त्वर्चेद्वैष्णवे होमकर्मणि ।
सूर्यकान्तादरणितः श्रोत्रियागारतोऽपि वा ॥ ७ ॥
पात्रेण पिहितं पात्रे वह्निमानाययेत्ततः ।
अस्त्रेणादाय तत्पात्रं वर्मणोद्घाटयेत्तु तम् ॥ ८ ॥
अस्त्रमन्त्रेण नैर्ऋत्ये क्रव्यादांशं ततस्त्यजेत् ।
मूलेन पुरतो धृत्वा संस्कारांश्चतुरश्चरेत् ॥ ९ ॥
वीक्षणाद्यान् पुरा प्रोक्तानल्पं प्रोक्षणमाचरन् ।
परमात्माऽनलेनाथ जाठरेणापि वह्निना ॥ १० ॥
स्मरन्नैक्यं वह्निबीजाच्चैतन्यं योजयेत्ततः ।
तारेण चाभिमन्त्र्याग्निं सुधया धेनुमुद्रया ॥ ११ ॥

अमृतीकृत्य संरक्षेदस्त्रमन्त्रेण मन्त्रवित् ।
मुद्रया त्ववगुण्ठिन्या कवचेनावगुण्ठयेत् ॥ १२ ॥
कुण्डोपरि ततो वह्निं भ्रामयेत्त्रिर्ध्रुवं पठन् ।
शय्यागतामृतुस्नातां नीलेन्दीवरधारिणीम् ॥ १३ ॥
देवेन भुज्यमानां तां स्मृत्वा तद्योनिमण्डले ।
ईश्वरेतोधिया वह्निं स्थापयेदात्मसम्मुखम् ॥ १४ ॥
मूलं नवार्णञ्च पठन् जानुस्पृष्टधरातलः ।
रमाधीशेन्दुसंयुक्तं गगनं वह्निचै ततः ॥ १५ ॥
तन्यायहृदयान्तोयं नवार्णोऽग्निनिधापने ।
विश्राण्याचमनं देवी-देवयोर्ज्वालयेद्वसुम् ॥ १६ ॥
चतुर्विंशतिवर्णेन मन्त्रेण क्षपणादिभिः ।
चित्पिङ्गलहनद्वन्द्वं दहयुग्मं पचद्वयम् ॥ १७ ॥
सर्वज्ञाज्ञापयस्वाहा मन्त्रो वेदभुजाक्षरः ।
प्रदर्श्य ज्वालिनीमुद्रामुत्थाय विहिताञ्जलिः ॥ १८ ॥
श्लोकरूपेण मन्त्रेणोपतिष्ठेत हुताशनम् ।
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ १९ ॥
सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ।
अथाग्निमन्त्रं विन्यस्येत्तद्विधानमुदीर्यते ॥ २० ॥
वैश्वानरान्ते जातेति-वेदान्ते स्यादिहावह ।
लोहिताक्षपदात्सर्व-कर्माण्यन्ते तु साधय ॥ २१ ॥
वह्निप्रियान्तो मन्त्रोऽयं षड्विंशत्यक्षरान्वितः ।
ऋषिश्छन्दोदेवताऽस्य भृगुगायत्रपावकाः ॥ २२ ॥
रं बीजं ठद्वयं शक्तिर्हवने विनियोजनम् ।
लिङ्गे पायौ मूर्ध्नि वक्त्रे नसि नेत्रेऽखिलाङ्गके ॥ २३ ॥
वह्निजिह्वाः स्वबीजाद्या न्यसेद् ङेता नमोन्विताः ।
दीपिकानलवायुस्थाः साद्या वर्णा विलोमतः ॥ २४ ॥
सेन्दवः सप्तजिह्वानां सप्तानां बीजताङ्गताः ।
गीर्वाणपितृगन्धर्व-यक्षनागपिशाचकाः ॥ २५ ॥
राक्षसाश्चेति जिह्वानां देवतास्तत्स्थले न्यसेत् ।
न्यासेऽर्चने व्युत्क्रमः स्याद्बहुरूपातिरक्तयोः ॥ २६ ॥
नेत्रेऽतिरक्ता न्यस्तव्या सर्वाङ्गे बहुरूपिका ।
सहस्रार्चिषे हृदयं स्वस्तिपूर्णाय मस्तकम् ॥ २७ ॥

उत्तिष्ठपुरुषायेति शिखामन्त्रोऽयमीरितः ।
धूमान्ते व्यापिने वर्म सप्तजिह्वाय नेत्रकम् ॥ २८ ॥
अस्त्रं धनुर्धरायेति षडङ्गानि समाचरेत् ।
मूर्ध्नि वामांसके पार्श्वे कटौ लिङ्गे कटौ पुनः ॥ २९ ॥
दक्षपार्श्वेंऽसके न्यस्येन्मूर्त्तीरष्टौ विभावसोः ।
ताराग्नयेपदाद्यःस्ताश्चतुर्थी हृदयान्तिकाः ॥ ३० ॥
जातवेदाः सप्तजिह्वो हव्यवाहन इत्यपि ।
अश्वोदरजसंज्ञोऽन्यस्तथा वैश्वानराह्वयः ॥ ३१ ॥
कौमारतेजाः स्याद्विश्वमुखदेवमुखावपि ।
ततो न्यस्येन्निजे देहे पीठं हाटकरेतसः ॥ ३२ ॥
वह्निमण्डलपर्यन्तं मण्डूकादि यथोचितम् ।
पीता श्वेतारुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी ॥ ३३ ॥
रुचिरा ज्वालिनी चेति कृशानोः पीठशक्तयः ।
बीजं वह्न्यासनायेति हृदन्तः पीठमन्त्रकः ॥ ३४ ॥
एवं विन्यस्य पीठान्तं पावकं चिन्तयेत्तनौ ।
त्रिनेत्रमारक्ततनुं सुशुक्लवस्त्रं सुवर्णस्रजमग्निमीडे ।
वराभयस्वस्तिकशक्तिहस्तं पद्मस्थमाकल्पसमूहयुक्तम् ॥ ३५ ॥
एवं ध्यात्वाऽर्चनं कुर्यात् मानसं विधिवद्वसोः ।
परिषिञ्चेत्ततस्तोयैः कुण्डं स्थण्डिलमेव वा ॥ ३६ ॥
दर्भैः परिस्तरेदग्निं प्रागग्रैरुदगग्रकैः ।
प्रत्यगुदक्षिणसौम्यासु न्यसेत्रीन् परिधीन् क्रमात् ॥ ३७ ॥
पालाशान् बिल्वजांस्तेषु ब्रह्मविष्णुशिवान् यजेत् ।
वह्नौ तत् पीठमभ्यर्च्यावाहयेत्स्वहृदोऽनलम् ॥ ३८ ॥
गन्धादिभिः समभ्यर्च्य पूजयेत् पावकावृतीः ।
षट्सु कोणेषु मध्ये च जिह्वात्मदेवता यजेत् ॥ ३९ ॥
ईशानादिकवाय्वन्तकोणेषु षट् समर्चयेत् ।
हिरण्याद्यतिरिक्तान्तं मध्ये तु बहुरूपिणीम् ॥ ४० ॥
हिरण्या गगना रक्ता कृष्णा सुप्रभयान्विता ।
बहुरूपातिरिक्तेति जिह्वा वह्नेरिमा मताः ॥ ४१ ॥
केसरेष्वङ्गपूजा स्याद्दलेष्वष्टसु मूर्त्तयः ।
मातरोऽष्टौ दलान्तेषु भैरवाः स्युस्तदग्रतः ॥ ४२ ॥

---

१ स्तंद्दे इति पाठ 'क' पुस्तके ।

ब्राह्मी माहेश्वरी चापि कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा सप्तमी मता ॥ ४३ ॥
अष्टमी तु महालक्ष्मीः प्रोक्ता विश्वस्य मातरः ।
असिताङ्गो रुरुश्चण्डः क्रोध उन्मत्तसंज्ञकः ॥ ४४ ॥
कपाली भीषणश्चापि संहारश्चाष्टभैरवाः ।
धरापुरे तु शक्राद्या वज्राद्यायुधसंयुताः ॥ ४५ ॥
देवतापूजने प्राची मध्ये पूजकपूज्ययोः
इन्द्रादयः स्वदिक्ष्वेव पूजनीया दिगीश्वराः ॥ ४६ ॥
इन्द्रः कृशानुः कीनाशो निर्ऋतिर्वरुणोऽनिलः ।
सोम ईशाननामाधोऽनन्त ऊर्ध्वे चतुर्मुख. ॥ ४७ ॥
वज्रं शक्तिर्दण्डखड्गौ पाशोऽङ्कुशगदे अपि ।
त्रिशूलचक्रपद्मानि दशदिक्पालहेतयः ॥ ४८ ॥
एवमावरणैर्युक्तं सप्तभिः पावकं यजेत् ।
वामे कुशानथास्तीर्य तत्र वस्तूनि निक्षिपेत् ॥ ४९ ॥
प्रणीताप्रोक्षणीपात्रे आज्यस्थाली स्रुवं स्रुचम् ।
अधोमुखानि चैतानि होमद्रव्यं घृत कुशान् ॥ ५० ॥
समिधः पञ्चपालाशीरन्यदप्युपयोगि यत् ।
कृत्वा पवित्रे मूलेन प्रोक्ष्य तानि शुभाम्भसा ॥ ५१ ॥
उत्तानानि विधायाथ प्रणीतां पूरयेज्जलैः ।
तीर्थमन्त्रेण तीर्थानि सृण्या तत्राह्वयेत्सुधीः ॥ ५२ ॥
पवित्रे अक्षतांस्तत्र निक्षिप्योत्पवनं चरेत् ।
अथोदीच्यां निधायैतां प्रोक्षिण्यां तज्जलं क्षिपेत् ॥ ५३ ॥
हवनीयं द्रव्यजातमुक्षेत्तोयैः पवित्रगैः ।
मूलेन मूलगायत्र्या यद्वा हृदयमन्त्रतः ॥ ५४ ॥
दक्षिणे पीठमासाद्य तत्र ब्रह्माणमाह्वयेत् ।
अणिमाद्या. सिद्धयोऽष्टौ ब्रह्मणः पीठदेवताः ॥ ५५ ॥
तारो हृत्पूर्वको ङेन्तो ब्रह्मा मन्त्रोऽस्य पूजने ।
हस्ताभ्यां स्रुक्स्रुवौ धृत्वा तापयेन्निरधोमुखौ ॥ ५६ ॥
वामहस्तेन तौ धृत्वा दर्भैर्दक्षेण मार्जयेत् ।
सम्प्रोक्ष्य प्रोक्षणीतोयैः प्रताप्य पूर्ववत् पुनः ॥ ५७ ॥
न्यस्याग्रौ मार्जनान् दर्भास्तयोः शक्तित्रयं न्यसेत् ।
इच्छाज्ञानक्रियासंज्ञं चतुर्थी-नमसान्वितम् ॥ ५८ ॥

दीर्घत्रयेन्दुयुग्व्योमपूर्वकं स्थानकत्रये ।
हृदा स्रुचि न्यसेच्छक्तिं स्रुवे शम्भुं ततस्तु तौ ॥ ५९ ॥
सूत्रत्रयेण संवेष्ट्य सम्पूज्य कुसुमादिभिः ।
कुशोपरि न्यसेद्दक्षे तयोः संस्कार ईरितः ॥ ६० ॥
अस्त्रोक्षितायामाज्यस्य स्थाल्यामाज्यं विनिक्षिपेत् ।
वीक्षणादिकसंस्कारसंस्कृतं मूलमन्त्रितम् ॥ ६१ ॥
गोमुद्रयाऽमृतीकृत्य षट्संस्कारांस्ततश्चरेत् ।
कुण्डोद्धृते वायुकोणस्थितेऽङ्गारे विनिक्षिपेत् ॥ ६२ ॥
हृदेतितापनं प्रोक्तं दर्भयुग्मं प्रदीपितम् ।
हृन्मन्त्रेण क्षिपेदाज्ये पवित्रीकरणं मतम् ॥ ६३ ॥
आज्यं नीराजयेद्दीप्त-दर्भयुग्मेन वर्मणा ।
अभिद्योतनमुक्तं तत् दीप्तं दर्भत्रयं घृते ॥ ६४ ॥
दर्शयेदस्त्रेणोद्योतो गृहीत्वा घृतपात्रिकाम् ।
संयोज्याग्नौ तदङ्गारान् सलिलं संस्पृशेत्सुधीः ॥ ६५ ॥
अङ्गुष्ठाऽनामिकाभ्यां तु दर्भावादाय निक्षिपेत् ।
त्रिरग्निसंमुखं त्वाज्यमस्त्रेणोत्पवनं त्विदम् ॥ ६६ ॥
हृदात्मसंमुखं तद्वदाज्यक्षेपस्तु सम्प्लवः ।
पावित्र्यादिकसंस्कारेष्वग्नौ दर्भान् विनिक्षिपेत् ॥ ६७ ॥
दर्भद्वयं ग्रन्थियुतं घृतमध्ये विनिक्षिपेत् ।
वामदक्षिणयोः पक्षौ स्मृत्वा नाडीत्रयं स्मरेत् ॥ ६८ ॥
दक्षिणाद्वामतो मध्यात् हृदादाय घृतं सुधीः ।
अग्नयेऽग्निप्रियासोमा य स्वाहेत्यग्निनेत्रयोः ॥ ६९ ॥
जुहुयादग्नीषोमाभ्यां स्वाहेत्यक्षिण तृतीयके ।
पातयेदाहुतेः शेषमाहुतिग्रहणस्थले ॥ ७० ॥
भूयो हृदाद्दक्षभागादादायाज्यं मुखे यजेत् ।
अग्नये,स्विष्टकृते,तन्नेत्रास्योद्घाटनं मतम् ॥ ७१ ॥
महाव्याहृतिभिर्व्यस्तसमस्ताभिश्चतुष्टयम् ।
आहुतीनां त्रयं वह्निमन्त्रेण च ततश्चरेत् ॥ ७२ ॥
घृताहुतिभिरष्टाभिरेकैकां संस्कृतिं चरेत् ।
ओमस्याग्नेरमुं संस्कारं करोम्यग्निवल्लभा ॥ ७३ ॥
इत्थं मनुं जपन् गर्भा-धानं पुंसवनं ततः ।
सीमन्तोन्नयनं जात-कर्म कृत्वा ततश्चरेत् ॥ ७४ ॥

वह्नौ पञ्चसमिद्धोमान्नालापनयनं वसोः ।
कुर्याद्देवाभिधानेन पूर्ववत् नाम शुष्मणः ॥ ७५ ॥
नामानन्तरमेतस्य पितरौ स्वेऽर्पयेद्धृदि ।
अन्नप्राशनचौलोप-नयने दारयोजनम् ॥ ७६ ॥
संस्काराः स्युर्विवाहान्ता-मृत्यन्ताः क्रूरकर्मणि ।
एकैकामाहुतिं हुत्वा वह्नेर्जिह्वाङ्गमूर्त्तिभिः ॥ ७७ ॥
इन्द्रादिभिश्च वज्राद्यैर्ङेठान्तैर्जुहुयात्ततः ।
स्रुवेणाज्यं चतुर्वारं निधाय स्रुचि तां सुधीः ॥ ७८ ॥
अपिधाय स्रुवेणैव गृह्णीयात् करयुग्मतः ।
तिष्ठन् मूलं तयोर्नाभौ कृत्वाऽग्नौ कुसुमं क्षिपेत् ॥ ७९ ॥
वामस्तनान्तं तन्मूलं कृत्वाग्निमनुना सुधीः ।
जुहुयाद्वौ-षडन्तेन सम्पत्त्यर्थमतन्द्रितः ॥ ८० ॥
महागणेशमन्त्रेण व्यस्तेन दशधा ततः ।
जुहुयाच्च समस्तेन चतुर्वारं घृताहुतिम् ॥ ८१ ॥
पूर्वपूर्वयुता वीजषट्कबाणाश्च सायकाः ।
मुनयो मार्गणाश्चेति विभागस्तन्मनोः स्मृतः ॥ ८२ ॥
तारो लक्ष्मीर्गिरिसुता कामो भूर्गणनायकः ।
चतुर्थ्यन्तो गणपतिर्वरान्ते वरदेति च ॥ ८३ ॥
सर्वान्ते जनमित्युक्त्वा मेवशान्ते तु मानय ।
स्वाहान्तो वसुयुग्मार्णो महागणपतेर्मनुः ॥ ८४ ॥
एवं कृत्वाऽग्निसंस्कारं पीठं देवस्य पूजयेत् ।
तत्रेष्टदेवमावाह्य मुद्रा आवाहनादिकाः ॥ ८५ ॥
प्रदर्श्य वह्निरूपस्य देवस्य वदने पुनः ।
मूलेन जुहुयात् पञ्च नेत्रसङ्ख्या घृताहुतीः ॥ ८६ ॥
वक्त्रैकीकरणं वह्निदेवयोस्तेन जायते ।
नाडीसन्धानसिद्ध्यर्थं वह्निदेवतयोस्ततः ॥ ८७ ॥
जुहुयान्मूलमन्त्रेण रुद्रसङ्ख्या घृताहुतीः ।
इष्टदेवस्यावृतीनामेकैकामाहुतिं चरेत् ॥ ८८ ॥
ततस्तु मूलमन्त्रेण जुहुयाद्दशधा घृतम् ।
ततः कल्पोक्तद्रव्येण दशांशं जुहुयाज्जपात् ॥ ८९ ॥
होमं समाप्य कुर्वीत पूर्णाहुतिमनन्यधीः ।
होमावशिष्टनाज्येन पूरयित्वा स्रुचं सुधीः ॥ ९० ॥

पुष्पं फलं निधायाग्रे स्त्रुवेणाच्छाद्य तां पुनः ।
उत्थितो वौषडंतेन मूलेन जुहुयाद्वसौ ॥ ९१ ॥
तद्द्रव्येणावृतीनां च जुहुयादाहुति पृथक् ।
देवं विसृज्य स्वहृदि वह्नेर्जिह्वाङ्गमूर्त्तिभिः ॥ ९२ ॥
जुहुयाद्व्याहृतीर्हुत्वा पवित्रे निक्षिपेद्वसौ ।
प्रणीताम्बु भुवि क्षिप्त्वा ब्रह्मणे दक्षिणा ददेत् ॥ ९३ ॥
विधिं विसृज्य वह्निं तं प्रोक्षेच्च प्रोक्षणीजलैः ।
सम्प्रार्थ्यानेन मनुना नत्वा तं विसृजेद्धृदि ॥ ९४ ॥
भो भो वह्ने महाशक्ते सर्वकर्मप्रसाधक ।
कर्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु सादरम् ॥ ९५ ॥
ततः परिस्तरयुतान् परिधीन् विसृजेद्वसौ ।

## इति होमः ।

एवं होमं समाप्याथ तर्पयेद्देवतां परम् ॥ ९६ ॥
आवाह्य तद्दशांशेन तर्पणादभिषेचनम् ।
तर्पयामि नमश्चेति द्वितीयान्तेष्टपूर्वकम् ॥ ९७ ॥

## इति तर्पणम् ।

मूलान्ते तु पदं देयं सिञ्चामीत्यभिषेचनम् ।

## इति मार्जनम् ।

ततो नानाविधैरन्नैर्भोजयेद् द्विजसत्तमान् ॥ ९८ ॥
इष्टरूपान् समाराध्य तेभ्यो दद्याच्च दक्षिणाम् ।

## इति ब्राह्मणभोजनम् ।

## इति साधारणपञ्चांगपुरश्चरणविधिः ।

## । श्रीदेवीरहस्येऽपि ।

जीवहीनो यथा देहः सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनोऽपि तथा मन्त्रो निरर्थकः ॥ १ ॥
**वर्णलक्षं जपे**न्मन्त्रं तदर्धं वा कुलेश्वरि ! ।
**एकलक्षावधिं** कुर्यान्नातो न्यूनं कदाचन ॥ २ ॥
सुदिने शुभनक्षत्रे सुमुहूर्ते महेश्वरि ! ।
स्वगुरुं पूजयित्वाऽऽदौ पुरश्चर्यां समाचरेत् ॥ ३ ॥
गुरोराज्ञां समादाय स्नात्वा वेदीं चरेत्सुधीः ।
चतुःकोणामीशदेशे स्वहस्तपरिविस्तृताम् ॥ ४ ॥

तत्र लिप्त्वा महादेवि ! सिन्दूरेणाष्टगन्धकैः ।
लिखेद्विन्दुं त्र्यस्रमादौ षडस्रं वृत्तमण्डलम् ॥ ५ ॥
वसुपत्रारवृत्ताढ्यं भूगृहेनोपशोभितम् ।
पुरश्चर्यायन्त्रमेतद्गदितं गिरिजे ! मया ॥ ६ ॥
सर्वसाधारणं पूज्यं साधकैस्तत्त्वदर्शिभिः ।
इन्द्राग्नियममांसादवरुणानिलवित्तदाः ॥ ७ ॥
सेश्वरा लरमक्षावयसहं बीजमण्डिताः ।
पूज्याः सहेतयो देवि ! धराभुवनमण्डले ॥ ८ ॥
ब्राह्मी च वैष्णवी रौद्री कौमारी नारसिंहिका ।
वाराही चण्डिका देवि ! पूजनीयाऽपराजिता ॥ ९ ॥
सभैरवा वसुदले वामावृत्त्या मुमुक्षुभिः ।
पार्वती कुब्जिका दुर्गा चामुण्डा नीलतारिणी ॥ १० ॥
कात्यायनी पूजनीया षडस्रेषु महत्तमैः ।
गङ्गा च यमुना चैव पूज्या त्र्यस्रे सरस्वती ॥ ११ ॥
पूज्या च सशिवा बिन्दौ साधकैरिष्टदेवता ।
मूलमन्त्रेण गन्धार्घपुष्पधूपप्रदीपकैः ॥ १२ ॥
तत्र बिन्दौ न्यसेद्यन्त्रं स्वेष्टदेवस्य सुन्दरि ! ।
वेद्या विदिक्षु संस्थाप्य मध्ये घटचतुष्टयम् ॥ १३ ॥
मूलेन साधको देवि ! यवान् संमन्त्र्य वापयेत् ।
वह्निनैर्ऋतिवातेश-क्रमेणैव समर्चयेत् ॥ १४ ॥
गणेशं भारती दुर्गा क्षेत्रपालं घटेषु तु ।
स्वस्वमूलेन देवेशि ! तत्र पूजां तथाह्निकीम् ॥ १५ ॥
कृत्वा तदग्रतो देवि ! पुरश्चरणमारभेत् ।
श्रीचक्रं पूजयित्वाऽऽदौ ततः कुर्याज्जपं सुधीः ॥ १६ ॥
शान्तो दम्भं तथा लौल्यं त्यजेन्मन्त्रस्य सिद्धये ।
ब्रह्मचर्यधरो मन्त्री ध्यायन् देवीं वरप्रदाम् ॥ १७ ॥
जपेन्मूलं वर्णलक्षं नियमेन समाहितः ।
हविष्याशी महेशानि ! ततः सिद्धिरनुत्तमा ॥ १८ ॥
जप्त्वा मन्त्री मन्त्रराजं हुत्वा देवि ! दशांशतः ।
तर्पयेत्तद्दशांशेन मार्जयेत्तद्दशांशतः ॥ १९ ॥
भोजयेत्तद्दशांशेन ब्राह्मणान् ब्रह्मवित्तमान् ।
एवं कृते कुलेशानि ! मन्त्रसिद्धिर्भवेद्ध्रुवम् ॥ २० ॥

## । प्रकारान्तरम् ।

सूर्योदयात् समारभ्य यावत् सूर्योदयान्तरम् ।
तावज्जप्त्वा निरातङ्को मन्त्रः कल्पद्रुमो भवेत् ॥ २१ ॥

अन्यच्च ।

सूर्योपरागवेलाया जपेन्मन्त्रं महेश्वरि ! ।
जप्त्वा होमादिकं कृत्वा मन्त्रसिद्धिं लभेत सः ॥ २२ ॥
चन्द्रोपरागे देवेशि ! जपेन्मूलं यथाविधि ।
दशांशसंस्कृतो मन्त्रो भवेच्चिन्तामणिः क्षणात् ॥ २३ ॥
यस्य नास्ति जपे शक्तिः पञ्चरत्नेश्वरी जपेत् ।
वर्णलक्षपुरश्चर्या-फलमाप्नोति साधकः ॥ २४ ॥

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे पुरश्चरणलक्षण-कर्मयोग-कथनं नाम पञ्चत्रिंशोल्लासः ।**

## अथ श्रीभक्तियोगः ।

श्रीहंसः-श्रुतं सीमन्तिन्या, कनिष्ठमुमुक्षुयोग्यो दर्शितः प्राक्कर्मयोगः । ऐहिकामुष्मिककर्मयोगः श्रीभक्तियोगोल्लसितसामरस्यमाविःकर्त्तुं पर्याप्तो भवति ।

किञ्च, एके तु शठा हठादेनमनादृत्यैवमेव भक्तियोगमध्यारोढुमुत्फलन्ति । ते त्वनधिकारित्वादुभयतोऽपि भ्रश्यन्त्येव । न हि कर्मयोगमन्तरेणावलेढुं कनिष्ठमुमुक्षुः श्रीभक्तिरसमुन्मत्तः कल्पते । अधिकाराधिक्ये तु लिङ्घात् श्रीपरमेश्वरस्येत्याज्ञा । ईश्वराज्ञाभङ्गे तु न शोभनमत्राऽमुत्रेत्यतः सद्गुरोराज्ञयाऽऽदौ याथातथ्येन तन्मुमुक्षुः कर्मयोगमनुष्ठाय श्रीसामरस्यालयभूतं भक्तियोगमनुतिष्ठन् कृतकृत्यतामेतु मन्मित्रमित्यतः श्रीभक्तियोगोऽलिपष्ठ, स्मर्यते, न खल्वखिलभक्तियोगस्मरणे क्षमः क्षणावस्थायि मनः स्थिरीकर्त्तुमहम् । अहह!!!काहमैहिको मोहमुग्धः कान्दिशीकः, क्वावरणवर्जिता पारलौकिकी श्रीललितलीला, कृष्णसदाशिवयोरप्यगोचरा ।

तथापि-मम मानसे सरसि यदृच्छया प्रस्फुरित, श्रीभक्तिरसः श्रवणचुलुकाभ्यामास्वाद्य प्रहृष्यतु हंसीत्युक्त्वा शिवशिवेत्युच्चैरुच्चरन्निदमाह ।

भोः सुन्दरि ! श्रीमान् भक्तियोगोऽधुना भण्यते । श्रीहंसी-त्वं ममैव शरणं रसिकाया इति नमस्कृत्य भण्यतामित्यूचे ।

अथ श्रीहंसः ।

साम्यतां भक्तियोगेन नैति योगोऽपरः प्रिये ! ।
सत्यं सत्यं पुनः सत्यं कलौ भक्तिर्विशिष्यते ॥ १ ॥
विघ्नयन्तीह सर्वत्र कुटिलाः कलिकिङ्कराः ।
विलोक्य भक्तियोगं तु पलायन्ते पराङ्मुखाः ॥ २ ॥
न कर्मयोगो न हि राजयोगो न ज्ञानयोगोऽपि न मन्त्रयोगः ।
श्रीराजहंसैर्हि विराजमानो मुदे सदास्ता मयि भक्तियोगः ॥ ३ ॥

अरेरे। अरा ! निसर्गोऽसौ कलिर्म्लेच्छ इवोग्रः सत्कर्मापाकर्त्तुं प्रवृत्तः। क्वचित्सतः कर्मयोगमनुष्ठातुमुद्यतान्निरीक्ष्यामर्षसंशयप्रमादालस्याऽविश्वासाश्रद्धाऽभिध्याऽभिमानावमाननेर्ष्याऽसूयाविद्वेषविप्रतीकारादीन्नानानुचरानाकार्य, ससम्भ्रमं 'आःपापाः केनचिच्छालिशेनास्मदाज्ञामवज्ञाय कर्मयोगोऽनुष्ठीयते, तत्तत्र गत्वांतरयन्तु सत्वरमिति। स कलिः सर्वत्र सर्वथा प्रतिबध्नात्येवमेवाश्रमधर्मेषु ज्ञानयोगादिष्वपि प्रत्यूहयत्येवेत्यतः शिवशिवशिवेति शब्दमात्रोच्चारणमेवास्मिन् समये तु समीचीनं, न तत्र प्रत्यर्थयितुं समर्थः स दुष्टः।

किञ्च।

घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमः।
कुलं शीलं तथा जातिरष्टौ पाशाः प्रकीर्तिताः॥ १॥

किमुक्तम्।

हृदि कृत्रिमां दयामानीय क्वचिन्मायाप्रपञ्चभूतेष्वनुकम्पमानस्याहं दयालुरिति यत्र तत्र जल्पनं, दुष्टदर्शनोत्पन्नकम्पोऽपि **घृणापाशः**॥ १॥

लोभाविश्वासादिना च निजप्रयोजनस्य कृते विशिष्टमाशङ्क्य तत्र विक्रियाकरणं **शङ्का**॥ २॥

पापपुण्ययोः स्वरूपमनुपलभ्य शुद्धस्याऽशुद्धधिया धिक्करणं **भयम्**॥ ३॥

विषयिशिष्टाचारमाश्रित्याहं शिष्ट इत्यभिमत्याऽसदाचारस्यापवारणं **लज्जा**॥ ४॥

उत्तमाऽधमाविवेकतो व्याकुलीभूयाहं शुचिरित्याद्याग्रहो **जुगुप्सा**॥ ५॥

स्वकुलोद्गतस्य कस्यचित् प्राक्तनविषयिपुरुषस्य पुरुषार्थमहिम्नाऽऽत्मन्यपि तद्वदुन्नत्यारोपणं **कुलम्**॥ ६॥

नित्यनैमित्तिकाह्निककर्माचरणेनाहं सुशील इति स्वकर्मप्रकाशनं **शीलम्**॥ ७॥

शिखासूत्रादिवेषवैशिष्ट्येनाहं ब्राह्मण इत्यभिमानं **जातिः**॥ ८॥

क्वचिद्व्रतमपि जातिस्थाने।

तत्तु यमनियमोपवसनतपस्यादिना मयि फलसिद्धिरीदृशीतीतस्ततः पामराग्रे लपनं **व्रतम्**॥ ८॥

## इत्यष्टौ पाशाः।

रमणि!। मादृक्षेषु तु न तथा, किन्तु न मे विषयिषु सभ्यता न च कलत्रपुत्रादिषु विषयरसप्रसितेषु तात्त्विकी **करुणा**।

नापि श्रीरसिकचरणनिर्णेजनजलाचमने **शङ्का**।

नहि निशीथे मध्याह्नेऽपि श्रीपरमहंसैः सार्धं महाप्रसादास्वादने पित्रादिभ्यो **भयम्**।

गायनवादनादिषु श्रीरासकृत्येषु न मेऽखिललोकतो **लज्जा**।

किञ्च। एष दुःशीलः स्वकुलपारम्पर्यमपास्य स्वाच्छन्द्येन निन्द्याचारमाचरत्यत एनं ज्ञातेर्बहिष्कुरुतेत्येवंप्राया लोकवाक्योत्थिता **जुगुप्सा**पि न मया श्रूयते।

पशुशास्त्रं प्रशस्य स्नानसन्ध्याद्याधानादिजनितसौशील्यख्यापनमपि मयि नो स्वादते प्रयागगयागोदावरीगोमत्यादिषु भुक्तिमुक्तिप्रदेषु नानातीर्थेषु स्नानदानाद्यं, तथा च शैवशाक्त-वैष्णवादि-दिव्यमन्दिरेषु षोडशोपचारपुरःसरमर्चनादिकं परमैश्वर्यनिष्पत्तये पुरश्चरणहठयोगाद्यमपि चैकादश्यादिषु विशेषदिवसेषु चोपोषणजागरणादिलक्षणो महाव्रतव्रातश्चैवमाद्यं कतिविधं बाह्यलोककृत्यं वहिर्मुखानामेव रुच्यं न मामकेषु। मदीयैस्तु प्रागेतत् कृत्स्नं निष्पादितमेवास्ति, नो चेच्छ्रीभक्तिरसास्वादने रुचिरेव न स्यादतः सर्वं पुरानुष्ठितं न साम्प्रत तादृग्विधाचरणे श्रीभक्तिमतां प्रीतिरस्मद्विधानां सपर्यापर्यायेऽपि।

**श्रीशङ्करः।**

कति कति तरवो मे नार्चनालूनपत्राः कति कति न सरस्यस्तर्पणोत्कीर्णतोयाः।
कति कति न हरीशाद्यालयाः क्रान्तपूर्वा विदितपरमतत्त्वो नाधुना किञ्चिदीहे॥

इत्युक्तवान्।

किमुक्तम्।

विज्ञाते श्रीभक्तितत्त्वे प्रागनुष्ठित एव पुरोदितः कर्मयोग इति।

किञ्च। प्रवृत्तिप्रसङ्गतो विकसितं पाशाष्टकं श्रीभक्तेरन्तरायभूतं निवृत्त्याश्रितमानसशस्त्रेण छित्त्वा स्वात्मानमपि विक्षेपावरणवर्जितमेव मत्वा स्वविलसितं श्रीशिवं साङ्गमङ्गीकृत्य शुद्धमनसा श्रीभक्तियोगमभ्यसेत्।

श्रूयते शक्त्या स्वयमेव शिवोऽपि प्रारब्धफलपाकान्तं भिन्न इव भूत्वा लीलाविग्रहेण केनचित् परमशिवेन सममहैतुक्या भक्त्या श्रीरासं साधयेत्।

बाललीलावन्न किञ्चिन्निमित्तं, न च फलम्, नापि बाधः। तदपि कलिप्राबल्यादावरणशङ्कया चास्मिन् समये तु भक्तत्वेन भवितव्यं, नायं ज्ञानयोगावसरः।

हंसी। भो भर्त्तः! श्रीभक्त्यर्थं उद्घाट्यताम्।

श्रीहंसः।

भवदुःखप्रशमनान्मोक्षज्ञानप्रदानतः।
तीव्रार्थकरणाद्देवि! भक्तिरित्यभिधीयते॥ १॥

**। उपास्तिरपि।**

कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा।
सामीप्यादिविधानत्वादुपास्तिरिति कथ्यते॥ २॥

**। भक्तश्च।**

भजनात् परया भक्त्या मनोवाक्कायकर्मभिः।
तरत्यखिलदुःखानि तस्माद्भक्त इतीरितः॥ ३॥

**। साधकोऽपि।**

सारसङ्ग्रहणाच्चैव धर्ममार्गप्रवर्त्तनात्।
करणग्रामनियमात् साधकः सोऽभिधीयते॥ ४॥

अथ हंसी। भो भट्टारक! श्रीभक्तियोगोपदेशविश्राणनेन मामात्मसाद्विधेहि।

श्रीहंसः। भो भगवति! भक्तियोगस्त्रिधा मानसिको वाचिको मिश्रश्च।

केवलं मनसैव भावनात्मकं यद्भजनं स मानसिकः।

गद्यपद्यात्मकवचनवैचित्र्येण विरचितो यः स **वाचिक** इत्युच्यते।

मनोवाक्कायैर्यो भक्तिः स **मिश्रः।**

किञ्च। भो रसिके! सेवायां तु सेव्यं सेवा सेवक इति त्रिकुट्युपपत्तये देशविशेषो मूर्त्तिविशेषाद्यं चापेक्ष्यम्।

उक्तं **चागमे।**

चिन्मयस्याप्रमेयस्य निर्गुणस्याशरीरिणः।
सेवकाना हितार्थाय ब्रह्मणो रूपकल्पना॥ १॥
अमृतार्णवमध्योद्यत्-सुवर्णद्वीपशोभित **इत्यादि च।**
अरूपं रूपिणं कृत्वा कर्मकाण्डरता जनाः।
नानास्थानेषु देवेशि! यजन्ते परमं शिवम्।
इत्याद्युक्तेश्च।
किमुक्तं, स्वयमेव शिव इत्यत्र तु भक्तिर्न सम्भवति। पारमार्थिकं त्वेतदेव।
**श्रुतिश्च।**

अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानामिति।

'आत्मैव देवताः सर्वा'इति **स्मृतेश्च।**

तरुणि, ! तदपि कल्पितव्यवहारमाश्रित्य भक्तरूपेण पृथगिव श्रीपरमशिवः सशक्तिकोऽनन्तलीलः श्रीसामरस्य-चमत्कारानुभूतये नानाविधैः प्रापञ्चिकैरुपचारैरिह रमयितव्यः।

शक्ते!।

निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः। निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः।

**इत्यागमोक्तेः।**

श्रीसकललक्षणे शिवे भक्तियोगः प्रसज्यते।

तदिदानीं सकलशिवस्य सद्भक्तसम्भजनीयं विलासभूमिकास्वरूपं वर्ण्यते।

चतुरे! किञ्चित्तदत्र विचारणीयम्। यथैहेन्द्रियकं सार्वभौमपदं सर्वतः समुन्नतमीक्ष्यते तद्वदतीन्द्रियपदमप्युपर्युपरि यत्तदुत्तमोत्तममिति प्रत्येतव्यम्। यथा, सार्वभौमपदा त्रिविष्टपं श्रेष्ठम्। एवमेव विचार्यमाणे ब्रह्माण्डाधिपतेर्ब्रह्मणः पदं सर्वतः सुन्दरम्। ततोऽपि वैष्णवं वैकुण्ठपदं वन्द्यम्। तस्माद्रौद्रं कैलासलक्षणं रम्यम्। रौद्रादपीश्वरपदमुत्कृष्टम्। अण्डबाह्यत्वात् तथैव श्रीसदाशिवसदनं सुषमं, जगदादिमत्वात्। ततोऽक्षरपदं श्रेष्ठं, सकलजगद्बीजभूतत्वात्।

किञ्च।

आधारशक्तेः प्रभृति अक्षरान्तं सकलं प्रपञ्चजालं श्रीशिवशक्त्यद्वैतयुगलमूर्त्तविलासाय पदं भवति।

।उक्तं **चागमे।**

न चक्राङ्कं न पद्माङ्कं न वज्राङ्कमिदं जगत्।
लिङ्गाङ्कं च भगाङ्कं च तस्माच्छक्तिशिवान्तकम्॥

प्रपञ्चरूपमाविर्भूय क्षरमिति संज्ञां धत्ते।

किञ्च।

तदेव चेतनात्मकमक्षरमित्युच्यते।

अकारादिक्षकारान्तवर्णोद्भूतविचित्रतत्त्वोज्जृम्भितप्रपञ्चजातेषु चेतनत्वेन यद्रमते तदक्षरम्।

'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यत'इति भगवदुक्तिः।

कूटं मायाप्रपञ्चः। तत्र तिष्ठतीतिकूटस्थः।

किमुक्तम्।

क्षरात्मकं यदर्द्धनारीश्वरस्वरूपं तद्बीजमोमित्यक्षरं चैतन्यप्रचुरमिति।

तदुल्लसितं यत् चैतन्यात्मकं तत्स्वरूपं तदक्षरमित्याशयार्थः।

'ओमित्येतदक्षरमि'ति श्रुतेः।

'ॐकार एवेदं सर्वमि'ति च।

समस्तं व्यस्तं त्वां शरणद! गृणात्योमिति पदमि'ति पुष्पदन्तोऽपि।

प्रिये! प्रोक्तलक्षणोऽशेष. प्रपञ्चः कयाचित्तिरस्करिण्याऽऽवृतोस्ति। सर्वेषामावरणानामुपरि मायावरणम्।

सा माया श्रीमदर्द्धनारीश्वरानुज्ञयाऽक्षरमारभ्याधारशक्तिपर्यन्तं समग्रं तत्प्रपञ्चरूपमज्ञानकाण्डपटेनावृत्यात्मपदे क्रीडति।

किमुक्तम्।

अक्षरपदोपरि श्रीतिरस्करिण्याः पदमस्ति, यस्याश्छाया सदसद्रूपाऽज्ञानात्मिकाऽखण्डप्रपञ्चजातेषु व्याप्ताऽस्ति।

तद्वशात् शिवशक्त्यात्मकचैतन्यस्य विक्षिप्तिः।

तत्प्रभावादेव तस्मिन् नानानामरूपवर्णाश्रमजन्ममरणाद्यनंतविधायकं कल्प्यते।

हंसी। कति स्वामिन्नावरणानि?।

हंसः। शृणोतु शक्तिः। ब्रह्माण्डं पार्थिवमस्ति।

तदभितो दशगुणं जलावरणम्।

जलस्य परितो दशगुणं ज्योतिरावरणम्।

सर्वतस्तेजोऽनिलावरणम्।

तत्परितस्तद्दशगुणमाकाशावरणम्।

तदभितोऽन्धतमसावरणं भवति।

तदेव मायावरणम्।

अन्यदपि।

मायाप्रपञ्चान्तःपतिताः सर्वेऽपि चेतनाः श्रीशिवांशास्तथापि यदृच्छया मायोत्थसप्तावरणैरावृता इव वर्तन्ते।

### । सप्तावरणानि तु ।

अविद्या चापि विक्षेपः क्लेशश्चिन्ता भ्रमस्तथा।
मत्तत्वमपि विद्या च देहिष्वावृतिसप्तकमिति॥ १॥

प्रिये ! एष तिरस्करिण्याः प्रभावः ।

पुरा श्रीकृष्णेनापीह व्रजवनिताभिः सार्द्धं लोकविरुद्धं ग्राम्यधर्ममारब्धं श्रीतिरस्करिणी-समुपाश्रिता । व्रजलोको मा ज्ञास्यतीत्याशङ्क्य मा व्रजौकसो मत्कर्म जानन्त्विति तदुपाश्रयेण निःशङ्को परकीयाभिर्व्रजवल्लवीभिः सह श्रीरासविहारं कृतवान् । तथाऽपि सन्तुष्टया सर्वो व्रजलोकस्तदैव तिरस्कृत इति ।

उक्तं च श्री **भागवते ।**

भगवानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः । वीक्ष्य रन्तुं मनश्चक्रे योगमायामुपाश्रित इति ।

ऐन्द्रजालिकोऽपि मायानिर्मितेन मन्त्रौषध्यादिना पुरा परदृष्टिमपवार्य खेलायतीति लोक-प्रसिद्धम् ।

शास्त्रेऽपि **कक्षपुटे ।**

दृष्टिं निबध्य पूर्वं तु पश्चात् कौतुकमाचरेत् ।
विना दृष्टिनिबन्धेन यः करोति स सीदति ॥ १ ॥

**। मार्कण्डेयोऽपि ।**

ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥ १ ॥
सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ।
संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी ॥ २ ॥
इत्यादि ।

**आगमेऽपि ।**

नीलं हयं समधिरुह्य पुरं प्रयान्ती नीलांशुकाभरणमाल्यविलेपनाढ्या ।
निद्रापटेन भुवनानि तिरोदधाना खड्गायुधा भगवती परिपातु भक्तान् ॥
इति ।

किमुक्तम् ।

श्रीमदर्धनारीश्वराज्ञया निजपदे स्वशिवेन साकं विलसन्ती श्रीतिरस्करिणी यथाविध-तत्स्वरूपज्ञानपूर्वकं संस्मृता सती विष्णोरिव रसिकजनान् निजकलां निवारयेत् ।

हंसी । भोः प्रेयः ! । विष्णोरिवेति किम् ? ।

हंसः । शक्ते ! कस्मिंश्चित् कल्पान्ते विष्णुरविद्याभिया शयनान्नोत्थितः । सर्गसमये तन्नाभिकमले विधिराविर्भूतः । तत्कर्णमलजौ मधुकैटभावपि । ततस्तौ तं कमलासनं दृष्ट्वा हन्तुमुद्यतौ, तदा विधात्रा तत्रासाकुलतया विष्णुमुत्थापयितुं सा महामाया संस्तुता । स्रष्टुः स्तोत्रेण सन्तुष्टा सा विष्णोः स्वरूपान्मोहपटीमात्मकलामपाहरत् ।

विष्णुरपि तत्क्षणान्निःशङ्कत्वेन तल्पादुदतिष्ठत् ।

**। उक्तं च मार्कण्डेये ।**

नेत्रास्यनासिकाबाहु-हृदयेभ्यस्तथोरसः ।
निर्गम्य दर्शने तस्थौ ब्रह्मणोऽव्यक्तजन्मनः ॥ १ ॥

उत्तस्थौ च जगन्नाथस्तया मुक्तो जनार्दनः ।

इति । किञ्च ।

## शङ्करोऽपि ।

विकीर्णचिकुरोत्करे विगलिताम्बराडम्बरे। मदाकुलितलोचने विमलभूषणोद्भासिनि । तिरस्करिणि ! तावकं चरणपङ्कजं चिन्तयन्। करोमि पशुमण्डलीमधिकमोहमुग्धाशयाम् ॥ १ ॥

इति ।

तत्स्मृत्या द्वेषक्लेशदोषरोषादीन् पशून् धिगकारि ।

किञ्चोक्तम् ।

यैस्तिरस्करिणी न ज्ञायते तेषां पशुत्वमिति मोहावृतत्वात् ।

ब्रह्मादयो जगति जीवगणास्तृणान्ता-

मायाविमोहितधियः पशवः प्रदिष्टाः ।

इत्युक्तत्वात् ।

हे मात ! त्वन्मोहावरणं पशुष्वेवास्तां मा भवत्या भक्तजनेष्वित्याशय. । शृणोषि रसिके ! यथोक्तप्रभावा श्रीतिरस्करिणी तावत् क्षणं भवत्या स्मर्यताम् ।

हंसी । भो राजहंस ! कथम् ।

वल्लभः—इत्थम् ।

नवीनजलमुग्निभे ! जननि ! कोटिविद्युत्प्रभे ।

तमःपटभुजाम्बुजे ! स्फुरदखण्डसंविद्वजे ! ।

तिरस्करिणि ! मद्वृतं भ्रमपटं भृशं वारय

श्रुतोच्चपदवीलसद्युगलदर्शनं कारय ॥ १ ॥

इति ।

हंसी । स्वामिन् ! मयाऽपि सा माता यथामति संस्मृता । इत्युक्त्वा 'जय जय श्रीतिरस्करिणि! मातः ! त्रायस्व मां शरणागतामि ' ति नमश्चकार ।

**इति श्रीहंसमिट्टुविरचिते श्रीहंसविलासे भक्तियोगवर्णने षट्त्रिंशोल्लासः ॥ ३६ ॥**

श्रीहंसः । भार्यायां भावभरं निर्भाल्य पुनराह ।

अयि आर्ये ! श्रीतिरस्करिणीपदोपरि अमृतसमुद्र उल्लसति, केचन कृपणास्त्विहैव सुरासमुद्र एव सुधासमुद्रः नेतरत्र क्वचित् सुधासमुद्र. श्रुत इति विकत्थन्ते । तेषां तदेव दौर्बल्यं यददीर्घदर्शित्वं, कुतः—सुरासागरस्तु प्रलये शुष्यति, किं सुधानिधौ कालस्य प्राबल्यं, परमाण्वादिकेन कालेन तु-तदक्षरपदादध एवावस्थीयते, न तत्र तस्य नाममात्रमपीत्यतः सुधासुरयोरतितरां भूमिकाभेदः । ये तु मोहावरणवैवश्येन मूढमतयस्तेषामेव सुरासागरः सुधासिन्धुत्वेनास्तां, नास्मदादीनां दूरदर्शिनां, यदि सुरासमुद्र एव सुधासिन्धुः स्यात् तदमृतनिमित्तं सुरादयः क्षीरार्णवं न मथ्नीयुः । किञ्च । सुरासुधयोर्महदन्तरं, सुरा तु मदिरेतिलोके प्रसिद्धम् । अमृतं खलु नेह लोके क्वचित्प्रत्यक्षम्, अमृतजातिमात्रं त्रिविष्टपस्थैरीषदास्वादितमिति शास्त्रतः श्रूयते । शुद्धसुधास्वरूपं त्वीश्वरादीनामप्यगोचरं कथं प्राकृतप्रपञ्चे कल्पयितुं पामरैः शक्यं, शिवशक्त्योः क्रीडार्णवः कथमुत्तमरसिकैर्मायावरणान्तराले युक्तो वक्तुम् ।

कर्मी योगी च विद्वांसो ह्यन्तरालं सुरालयः ।
सत्यं वैकुण्ठं कैलासः क्षीराब्धिर्भैरवस्तथा ॥ १ ॥
विश्वरूपं च चैतन्यमेतन्मायास्वरूपकम् ।
मायापरं भवेद्ब्रह्म तत्परं ब्रह्म केवलम्
इत्याद्युक्तेः ॥ २ ॥

भूगोलखगोललक्षणोऽसौ निःशेषोऽसत्प्रपञ्चः कयाचिन्महामाययाऽऽवृतोऽस्तीति शास्त्रेष्वाश्रूयते ।

किञ्च ।

## शङ्करोऽपि ।

विरञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्रा माहेन्द्री विततिरपि संमीलति दृशां महासंहारेऽस्मिन् विलसति सति त्वत्पतिरसौ ॥१॥
जगत्सूते धाता हरिरवति रुद्रः क्षपयते तिरस्कुर्वन्नेतत्स्वमपि वपुरीशः स्थगयते ।
सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिवस्तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥ २ ॥
इत्यादिना श्रीशिवशक्त्योर्विलासः सत्यत्वेन महाप्रलयेप्युदीरितवान् ।

किञ्च ?

**शिवेनापि** । अमृतार्णवमध्योद्यदित्यत्र सुरासमुद्रमध्योद्यदिति, **शङ्करेणापि** सुधासिन्धोर्मध्ये इत्यत्र सुरासिन्धोर्मध्ये इति कुतो नोक्तं चेत्सुरैव सुधास्यादित्यतः सुधासमुद्रः खलु श्रीतिरस्करिणीपदोपरिभागे एव वर्तते ।

श्रीशिवशक्त्योर्विहारभूमिका नार्हत्येव ब्रह्माण्डोदरे भवितुम् ।

उक्तं च **त्रिशत्यादौ** ।

अनेककोटिब्रह्माण्डकोटीनां बहिरूर्ध्वतः ।
सहस्रकोटिविस्तीर्णसुधासिन्धोस्तु मध्यमे ॥ १ ॥
रत्नद्वीपे मणिद्वीपे शतकोटिप्रविस्तरे ।
शतयोजनमुच्चैश्च गोपुरद्वारमण्डपैः ॥ २ ॥

त्रिलक्षयोजनायाममहापद्मवनावृते । यत्तु, आगमे सुरायां सुधाशब्दो दृश्यते तत् साङ्केतिकं सुधासिन्धुस्थितममृतं तस्यां चिन्त्यते । न चैतावता सुरैवामृतमिति मन्तव्यम् ।

हंसी-भोः स्वामिन् ! दुग्धघृतादीन्नानारसानपास्य सुरायामेव किममृतत्वं विचिन्त्यते ? ।

हंसः । सत्यं, यथेह सुरायामुल्लासो दृश्यते न तथा क्षीरादिषु क्षुद्ररसेषु । सुरातः सुधायां तु सहस्रगुण उल्लासः । अतो मनागमृतधर्मित्वदर्शनादागमैः सुरायाममृतकल्पनोदीरिता । अपरेष्वपि जलादिष्वमृतत्वकल्पना नानारसेषु तैरेव दर्शिताऽस्ति । सुरायामेवामृतत्वं कल्पनीयमिति तु नास्त्येव नियमः ।

किञ्च । प्रिये ! ।

यद्यपि ब्रह्माण्डं तदतिरिक्तं च यत् किञ्चित् शास्त्रे लोके च श्रूयतेऽथ दृश्यते तत् समग्रं शिवशक्तिस्वरूपमेव ।

तदपि श्रीरसिकानां मानसनिवासाय श्रीसच्चिदानन्दार्द्धनारीश्वरमूर्त्तिविनिर्मितं मायया अगोचरमखण्डं दिव्यपदमपेक्ष्यम् ।

नोचेदेवं तद्विरामो न स्यात् । एतत् सालम्बनज्ञानं भक्तियोगोपयोगीत्युपलभ्यम् । नास्मिन्नवसरे तु निरालम्बनज्ञाने शक्यं मनः पर्यवसितुमतोऽनश्वरं श्रीरासेश्वर्याः स्थलं निश्चितमभ्युपगम्योपरमन्तु मनांसि श्रीपरमहंसानाम् ।

रमणि ! । श्रीसुधासमुद्रः स्मर्यते ।

ललामैरुल्लासैर्जलजयुगलौघैश्च लसितः स्फुरन्नानारत्नोत्करग्चितपोतैस्तरलितः ।

कथञ्चित् कुर्वाणो ललितलहरीभिर्विहरण सुधासिन्धुः स्वान्तं रसनिहितमाल्हादयतु नः ॥१॥

। शङ्करश्च ।

व्याप्तं हाटकविग्रहैर्जलचरैरारूढदेवव्रजैः
पोतैराकुलितान्तरं मणिधरैर्भूमीधरैर्भूषितम् ।
आरक्तामृतसिन्धुमुद्धतचलद्वीचीचयव्याकुल-
व्योमानं परिचिन्त्य सन्ततमहो चेतः कृतार्थीभव ॥ इति ॥ २ ॥

भोः प्रेयसि ! पुनरवेक्षस्व श्रीपीयूषपारावारस्यान्तरे रत्नप्राचुर्योदञ्चितमन्तरीयं वर्त्तते ॥ महाज्योतिर्मण्डलं न शक्यं तत्कथयितुं कठोरकर्मभिरतस्तच्चिन्तनमाचक्ष्महे ॥

कनकमयममूल्यै राजितं रत्नजालैश्चरणकमलचिह्नैश्चिह्नितं चैणबालैः ।
मृगयुगलगणाना गर्जितं तानतालैर्भज इह रसभावैरन्तरीयं विशालैः ॥ ३ ॥

। शङ्करः ।

तस्मिन्नुज्ज्वलरत्नजालविलसत्कान्तिच्छटाभिः स्फुरं ।
कुर्वाणं वियदिन्द्रचापनिचयैराच्छादितं सर्वतः ।
उच्चैःशृङ्गनिषण्णदिव्यवनितावृन्दाननप्रोल्लसद्
गीताकर्णननिश्चलाऽखिलमृगं द्वीपं नमस्कुर्महे ॥ ३ ॥

महिले ! किं विलोक्यते ?

श्रीललिताविलासस्थली मलिननयनैर्न क्षमा निरीक्षितुं, रसनिष्ठानां श्रीराजहंसानां तु सन्निकृष्टमेव समग्रं श्रीरासस्थलमतोऽन्यदप्याकर्ण्यावधूतबुद्ध्योर्ध्वपदवीमालम्बस्व । महामूल्यमणिद्वीपस्य मध्ये श्रीचन्द्रकान्तविरचितो महाकैलाससंज्ञकः पर्वतो वर्तते तस्येदं स्मरणम् ।

श्रीचन्द्रकान्तोत्थितमप्रमेयम् ।
रत्नैर्विचित्रैश्च विराजमानम् ।
ज्योतिःसमूहं च सहस्रशृङ्गं ।
कैलाससंज्ञं प्रणमामि शैलम् ॥ ४ ॥

अत्र हंसी । भोः प्राणनाथ ! भवतामभिप्रायस्तु निरावरणदेशे, कैलासस्तु आवरणान्तराले सकलशास्त्रेभ्य आकर्ण्यते, सत्यं वैकुण्ठं कैलास इत्यपि भवद्भिरेव प्रागुदीरितम् । अतोऽत्र किमपि समाधाय पुरःपठ्यताम् ।

श्रीहंसः । शक्ते ! मा शङ्कस्व, रुद्रपरमशिवयोर्मूर्त्यादिभेदेऽपि नास्त्यन्तरमवगन्तव्यम् ।

श्रीपरशिवस्य लीलानुरूपैव श्रीरुद्रस्यापि विलासस्थली लक्ष्यते । आवरणाभ्यन्तरे कल्पिताऽपि निरावरणैव विचार्या ।

श्रीमहारुद्रोऽपि पूर्णरसिकः शृङ्गारादिरसचातुर्येण श्रीरसिकैरवलोक्यते । बहिर्मुखैस्तु नो तथा ।

। रुद्रार्थश्च ।

रुजः सर्वगता यस्माद् द्रावयामि जगत्यहम् ।
रोदनं हन्मि यस्माच्च रुद्रस्तस्मादहं प्रिये ! ॥ १ ॥

किमुक्तम् ।

श्रीसामरस्यरसायनार्पणेन सर्वगतजन्ममरणादीना रोगाणां द्रावणात् ।

अथवा ।

सामरस्यदर्शनेन शोकक्लेशादिलक्षणरोदनहरणाद्रुद्र. ।

। कैलासार्थोऽपि ।

केलिः प्रयोजनमस्य केलः, आस्यतेऽत्रेति आसः, केलश्चासावासश्चेति ।

अथवा । कं जलं इला भू. आसनमस्य केलास.=स्फटिकः, तस्यायं कैलास इति ।

श्रीपरमहंसाना मानसं सर्वत्र साम्यम् । भ्रान्तास्तु भ्रमन्त्येव । श्रीशिवयोः सामरस्यमेव सर्वत्र स्फुरति । भूमिकान्तरं तु चेतसा चमत्कारमात्रम् । अतो नाशङ्क्यमत्रामुत्रापि विभिन्नमिति किञ्चित् ।

इदानीमुपक्रान्तमाकर्ण्यतां श्रीमति रत्नाचलस्य शिखरे सहस्रशो वनान्युपवनानि च विद्यन्ते ।

चम्पकवनं केतकीवनं मालतीवनं वृन्दावनं जपावनं मल्लिकावनमशोकवनं मधूकवनं द्राक्षावनं, नालिकेरवनं, नागवल्लीवनमाम्रवणं, तमालवनं, श्रीखण्डवनं, लवङ्गवनं, कदलीवनं, दाडिमवनं, कुङ्कुमवनं, कमलवनं, बकुलवनं, कदम्बवनं, मन्दारवनं, पारिजातकवनमिक्षुवनमेवमादीना नानावनानां नन्दनवनमिति साधारणं नामोच्यते ।

तस्येयं स्मृतिः ।

क्वचित्कैलासाद्रेः शिखरसमभूमौ रसघनं प्रफुल्लं सत्पुष्पैर्दलफलललामैर्मम धनम् ।
मयूराणां सारीशुकमधुलिहा रुच्यवचनं नमस्कुर्वे नित्यं सरसमनसा नन्दनवनम् ॥ ५॥

आचार्यः ।

जातीचम्पकपाटलादिसुमनःसौरभ्यसम्भावितं ह्रीङ्कारध्वनिकण्ठकोकिलकुलप्रोल्लासिचूतद्रुमम् ।
आविर्भूतसुगन्धिचन्दनवनं दृष्टिप्रियं नन्दनं चञ्चच्चञ्चलचिञ्चिरीकचटुलं चेतश्चिरं चिन्तय इति ॥ ५ ॥

तन्मध्यप्रदेशे कल्पद्रुमोद्यानमस्ति ।

तत्स्मरणमपि ।

वन्यान्तरे मन्त्रिमनोरथप्रदं यदृच्छयोल्लासिसुधारसोन्मदम् ।
नित्यं स्फुरत्पुष्पफलोज्ज्वलच्छदं कल्पद्रुमाक्रीडमुपास्महे वयम् ॥ ६ ॥

**शङ्करश्च ।**

परिपतितपरागैः पाटलक्षोणिभागो विकसितकुसुमाद्यैः पीतचन्द्रार्करश्मिः ।
अलिशुकपिकराजीकूजितैः श्रोत्रहारी स्फुरतु हृदि मदीये नूनमुद्यानराजः ॥ ६ ॥

तदन्तरे रत्नप्राकारः प्रेक्ष्यते । तद्वर्णनेन निजात्मा समाधीयते ।

अत्र **श्रीशङ्करपद्यम् ।**

रम्यद्वारक ! सुप्रचारिततमःसंहारकारिप्रभा–स्फूर्जत्तोरणभारधारक ! महाविस्तारहारिद्युते ! ।
क्षोणीमण्डलहेमहार ! विलसत्संसारपारप्रद ! प्रोद्यद्भक्तमनोविहार ! कनकप्राकार ! तुभ्यं नमः ॥
इति ॥ ७ ॥

रमणि ! । श्रीरत्नप्राकाराभ्यन्तरे मणिमण्डपं मन्वते श्रीमहानुभावाः तस्यैषा स्मृतिः ।

**श्रीशङ्कराचार्यः ।**

उद्यत्कान्तिकलापकल्पितनभःस्फूर्जद्वितानभ्रमः
सत्कृष्णागरुधूमवासितवियत्काष्ठान्तरो विस्तृतः ।
सेवायस्तसमस्तदैवतगणै–रासेव्यमानोऽनिशं
सोऽयं श्रीमणिमण्डपोऽनवरतं मच्चेतसि द्योतताम् ॥
क्वापि प्रोद्भटपद्मरागकिरणव्रातेन सन्ध्यायितं
कुत्रापि स्फुटविस्फुरन्मरकतद्युत्या तमिस्रायितम् ।
मध्यालम्बिविशालमौक्तिकरुचा ज्योत्स्नायितं कुत्रचित्
मातः ! श्रीमणिमण्डपं तव सदा वन्दामहे सुन्दरम् ॥ ८ ॥

विदुषि ! । श्रीमणिमण्डपस्य मध्यप्रदेशे विद्वद्वन्द्या श्रीवेदिका विद्यते । तस्याः स्मरणमेतत् ।

**। शङ्करः ।**

कल्पान्ते तरसैकदासमुदितानेकार्कतुल्यप्रभा-
रत्नस्तम्भनिबद्धकाञ्चनगुणस्फूर्जद्वितानोत्तमाम् ।
कर्पूरागरुगर्भवर्त्तिकलिकां दीपप्रदीपावली
श्रीचक्राकृतिमुल्लसन्मणिगणा वन्दामहे वेदिकाम् ॥ ९ ॥

दयिते ! । वेदान्तैर्वन्दितायां श्रीवेदिकायां परमहंस-
सेव्यं श्रीसिंहासनं सम्पश्यामहे । तस्यैतच्चिन्तनम् ॥
स्वर्णजं सुन्दरं वै सहस्रांघ्रिकं रत्नजालाञ्चितं पीठशक्त्याकुलम् ।
चारुचित्रं हृदम्भोरुहाह्लादकं दिव्यसिंहासनं हृत्कजेऽहं भजे ॥ १० ॥

भो महिले ! । संस्मृतसिंहासनमध्ये कोटिदलं कनककमलमुल्लसति ।
तद्ध्यानं तु ।

वेदान्तोद्यल्ललितयुगलश्रीसदानन्दकन्दं
संविन्नालं विमलमुकुलेनापि तत्त्वात्मकेन ।
युक्तं पत्रैः प्रकृतिभिरथाढ्यं विकारैरुपासे-
किञ्जल्कैस्तत् कनककमलं मातृकाकर्णिकाकमिति ॥ ११ ॥

कलावति ! । आकर्ण्यते, श्रीमत्कनककमलकर्णिकायां निखिलनिगमान्ततत्त्वं श्रीनगरं वर्त्तते, तस्यैतत्स्मरणम् ॥

इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे श्रीभक्तियोगकथने सप्तत्रिंशोल्लासः ॥ ३७ ॥

श्रीहंसः ।

सेव्यं श्रीनगरं सद्भिः शिवशक्त्यात्मकं शुभम् ।
क्रीडार्थं कर्णिकामध्ये वर्त्तते हि यदृच्छया ॥ १ ॥
न वेदैर्नागमैर्गम्यं न पुराणैश्च विस्तृतैः ।
न मीमांसादिभिः शास्त्रैर्ज्ञेयं श्रीगुरुसेवया ॥ २ ॥
यस्मिन् स्यात् साध्वसं व्रीडा मन्दाक्षेर्ष्याशुचश्चिरम् ।
रुडुन्मादश्च विद्वेषो मानाभिध्यातृषः सदा ॥ ३ ॥
कार्पण्यं कपटः शाठ्यं विसंवादोऽथ वेपथुः ।
दौर्जन्यं चापि नास्तिक्यं क्वापि प्राप्यं न तेन तत् ॥ ४ ॥
प्रोच्यमाने मनाग् यस्मिन् स्याद्रोमाञ्चः परापुरे ।
उद्धर्षोऽध्यवसायश्च प्रेमोत्कण्ठादिकं प्रिये ! ॥ ५ ॥
तस्य श्रीनगरं शक्ते ! सुलभं भावुकस्य तु ।
सामरस्योपदिष्टस्य नान्यथा रासनायिके ! ॥ ६ ॥
वैकुण्ठं विशिनष्ट्येकः कैलासं कश्चिदङ्गने ! ।
स्वर्गमुत्कर्षयन्त्येके स्थगितास्तव मायया ॥ ७ ॥
एकेऽतिशेरते तद्वद्गोलोकं कृष्णपालितम् ।
निजधामापि तान् धिग् धिग् यतस्तेऽदीर्घदर्शिनः ॥ ८ ॥
उद्भूतं शिवशक्तिभ्यां तत् सर्वं यद्यपीश्वरि ! ।
तथाप्यज्ञानावृतत्वान्नश्वरं निखिलं स्मृतम् ॥ ९ ॥
तेजःपुञ्जान्तरे रम्यं शश्वच्छ्रीनगरं मतम् ।
कोटिजन्मार्जितब्रह्मविद्यया प्रतिभासते ॥ १० ॥
विपर्येति मनो यावत् संसारेऽस्मिन् शरीरिण. ।
न तावत्तस्य निर्भाति शिवशक्त्यो. परं पदम् ॥ ११ ॥
कोटिसूर्यप्रतीकाशैः शशिकोटिसमैरपि ।
कोटिवह्निनिभैर्नूनं विद्युत्कोटिसमप्रभैः ॥ १२ ॥
अगण्येरप्रमेयैर्मणिभिर्निर्मितं पुरं ।
अर्धनारीश्वरेणैव सामरस्यसुखास्पदम् ॥ १३ ॥
रसाऽसौ रसिकैः सेव्या सामरस्यमयी सदा ।
यस्यां वै शिवशक्तीनां रासः सुन्दरि ! शाश्वतः ॥ १४ ॥

धन्या श्रीधरणी यत्र सामरस्याय सन्ततम् ।
निर्मितो निवहो ध्याम्नामसङ्ख्यानां कुलेश्वरि ! ॥ १५ ॥
पुरैः परिवृतं नानाविधैः श्रीनगरं प्रिये ! ।
भुवनानि च निर्भान्ति यत्रामूनि चतुर्दश ॥ १६ ॥
दृश्यन्ते दिव्यदुर्गाणि विचित्राणि विचक्षणे ! ।
कतिचिच्चतुरस्राणि वर्तुलानि तु कानिचित् ॥ १७ ॥
अनर्घ्यरत्नघटितैर्गोपुरैरन्वितान्यपि ।
स्वर्णदुन्दुभिसन्दोहैरुच्चैः सर्वत्र संस्थितैः ॥ १८ ॥
दिक्पालैर्द्वारपालैश्च नगरं परिरक्ष्यते ।
भैरवैर्भैरवीभिस्तु सन्ततं शस्त्रपाणिभिः ॥ १९ ॥
त्रैलोक्यमोहनं पूर्वं सर्वाशापरिपूरकम् ।
सर्वसंक्षोभणं नाम सर्वसौभाग्यदायकम् ॥ २० ॥
सर्वार्थसाधकं पश्चात् सर्वरक्षाकरं ततः ।
सर्वरोगहरं रम्यं सर्वसिद्धिप्रदं पुरम् ॥ २१ ॥
सर्वानन्दमयं मध्ये सर्वेषां नवमं पुरं ।
एकैकाभ्यन्तरे हंसि ! नवैतानि पुराणि हि ॥ २२ ॥
नवाङ्गैर्निर्मितं त्वेतैः सम्पूर्णं श्रीपुरं प्रिये ! ।
स्वं स्वं पुरं पालयन्त्य-धिराज्यस्त्रिपुरादयः ॥ २३ ॥
त्रैलोक्यमोहनं नित्यं पिपर्त्ति त्रिपुराभिधा ।
द्वितीयं त्रायते तद्व-दङ्गने ! त्रिपुरेश्वरी ॥ २४ ॥
सर्वसंक्षोभणं भव्यं पाति त्रिपुरसुन्दरी ।
गोपायति चतुर्थं तु तथा त्रिपुरवासिनी ॥ २५ ॥
भुनक्ति त्रिपुराश्रीस्तु प्रथितं पञ्चमं पुरम् ।
तद्वत् पालयति प्रेम्णा षष्ठं त्रिपुरमालिनी ॥ २६ ॥
रक्षति त्रिपुरा सिद्धा रसिके सप्तमं पुरम् ।
त्रिपुराम्बाष्टमं चापि वनिते ! ऽवति विश्वतः ॥ २७ ॥
नवमन्त्रायते नित्यं तन्वि ! त्रिपुरभैरवी ।
स्वैः स्वैः शिवैः समायुक्ता यान्ति श्रीनगरं परम् ॥ २८ ॥
अधिकारमधिष्ठाय तप्यते त्रिपुरादिकम् ।
निजे निजे पुरे नित्यं नवकं तत् प्रतिष्ठितम् ॥ २९ ॥
वास्तूनि वस्तुभूतानि सद्रत्नरचितानि वै ।
हीरकैरिन्द्रनीलैश्च विद्रुमैर्भूषितान्यपि ॥ ३० ॥

महामरकतैस्तत्र पद्मरागैः स्यमन्तकैः ।
कौस्तुभैः सूर्यकान्तैश्च वैडूर्यैः स्फाटिकैस्तथा ॥ ३१ ॥
निकाय्या वनिते ! ऽनेके रचिताः काञ्चनैरपि ।
शशिकान्तसमुद्भूता नगरे निलयाः कति ! ॥ ३२ ॥
गृहा गारुत्मतैः केचित् प्रवालैरालयाः परे ।
निशाम्यामि निशान्तानि सूर्यकान्तोत्थितान्यपि ॥ ३३ ॥
सिन्दूरवर्णमणिभिः शृणुमः सद्नानि तु ।
अग्नितुल्यैरगाराणि रत्नैश्च कति लक्षये ॥ ३४ ॥
निकेतनान्यङ्कितानि कौस्तुभैरपि कानिचित् ।
बहूनि हीरगेहानि मुक्तोदवसितान्यपि ॥ ३५ ॥
पश्यामि वरवेश्मानि सम्भूतानि स्यमन्तकैः ।
वैडूर्यसद्मनां व्यूहो विहाराय विनिर्मितः ॥ ३६ ॥
तथा मरकतोत्थानि मन्दिराणि मनीषिणि ! ।
भवनानीन्द्रनीलैस्तु कति निर्भालयामहे ॥ ३७ ॥
क्वचित् सुवर्णवरणैः प्राचीरै रत्ननिर्मितैः ।
विचित्रै रचितं वप्रैर्नगरं निर्मलानने ॥ ३८ ॥
भासुरा भवनेष्वेवं क्वचित् कनकभित्तयः ।
नानावर्णमणिव्रातैर्विचित्रा वरवर्णिनि ! ॥ ३९ ॥
शोभमानाः श्रीनगर्याः शालाः सर्वाः सदात्मिकाः ।
नो सभानां कदा भङ्गो भक्तैर्भाव्यो मनागपि ॥ ४० ॥
वासाः श्रीशिवशक्तीना विलासायैव विश्रुताः ।
सत्यः शिवविलासोऽस्ति सगुणोऽपि हि निर्गुणः ॥ ४१ ॥
क्वचित् सञ्जवनं सम्यग् निरीक्षे निगमान्तरे ।
विचित्राणि तु चैत्यानि चिन्तय त्वमचञ्चले ! ॥ ४२ ॥
लक्षये क्वचिदालिन्दानुदञ्चद्रत्ननिर्मितान् ।
अजिराणि विराजन्ते सर्वत्र शिवसद्मसु ॥ ४३ ॥
तोरणास्तत्र रत्नोत्था बहवो द्वारतो बहिः ।
वातायनानि रम्याणि हर्म्येषु सकलेष्वपि ॥ ४४ ॥
हिरण्यपटसम्भूता ध्वजाश्च स्वस्वसद्मसु ।
स्वस्वयानाङ्किताः कान्ते ! प्रेक्ष्यन्ते सुप्रतिष्ठिताः ॥ ४५ ॥
पताकाः सन्ति तत्रापि चिह्निताः स्वायुधैः सदा ।
सद्रत्नघटितास्तेषु कलशाः काञ्चनोद्भवाः ॥ ४६ ॥

लोच्यन्ते काञ्चनोल्लोचाः प्रतिसीराश्च सर्वतः ।
क्वचिद्रत्नकुटीराणि प्रमदे ! मन्दिरेषु च ॥ ४७ ॥
पीयूषकलशाद्याढ्याः पद्मरागोद्भवाः प्रपाः ।
स्वापशालाः सोपबर्हरत्नतल्पसमन्विताः ॥ ४८ ॥
भव्याः सद्भोजनसभा नानाभक्ष्यविभूषिता ।
भवनं भूषणानां च स्नानशाला विशोभिताः ॥ ४९ ॥
यानागाराणि रम्याणि शस्त्रशालाः सदोज्ज्वलाः ।
वन्द्यं सद्वाद्यसदनं वाद्यैर्नानाविधैर्युतम् ॥ ५० ॥
सभा सुमणिसम्भूताः स्थूलाः स्तम्भाः सहस्रशः ।
स्थितास्तत्र तथा स्थूणाः स्थानीये स्थावराः प्रिये ! ॥ ५१ ॥
जातरूपमयान् जाने पक्षिणां पञ्जरव्रजान् ।
यत्र शक्ते ! शिवेत्येवं कूजन्ति कीरसारिकाः ॥ ५२ ॥
द्योतन्ते दिव्यमणिभिर्दोलाश्च प्रतिमन्दिरम् ।
यत्रोपविष्टं युगलं त्वाल्यः प्रेङ्खोलयन्ति हि ॥ ५३ ॥
चत्वरेषु विचित्रेषु चपलः परिचारकः ।
परितः परिवाराणां पुण्यानि सदनानि च ॥ ५४ ॥
आलीनामालयाः कान्ते ! पुरतः प्रथिताः कति ।
आरामास्तु विशोभन्ते नीपरम्भादिभिर्भृशम् ॥ ५५ ॥
कदल्युपवनं क्वापि कदम्बोपवनं क्वचित् ।
जपाजातीमल्लिकानामारामास्तत्र तत्र ह ॥ ५६ ॥
कुन्दोपवनमन्यत्र तद्वन्मरुबकोत्थितम् ।
रोचन्ते रुचकारामा जम्बीरोपवनान्यपि ॥ ५७ ॥
आरामाः पारिजातानां मन्दारोपवनानि तु ।
निष्कुटाः शिवमल्लीना दाडिम्युपवनानि हि ॥ ५८ ॥
कोटिशो वाटिकाः कान्ते ! ज्ञेयाः श्रीनगरान्तरे ।
पुष्पैः फलैर्दलैराढ्याः सौरभौघसमन्विताः ॥ ५९ ॥
निकुञ्जा हि विराजन्ते सल्लतापल्लवादिभिः ।
वल्लीवृक्षादयश्चान्ये सकलोपवनेष्वपि ॥ ६० ॥
स्वर्णाकारैरङ्कुरैश्च पीयूषौषधिभिः स्तुताः ।
विचित्रैरालवालैश्च भ्राजन्ते वनभूमयः ॥ ६१ ॥
तेषु कुञ्जकुटीराणि कतिचित्तु चकासति ।
क्रीडन्ति कलशब्दैश्च पुण्याः पक्षिमृगादयः ॥ ६२ ॥

कुरङ्गयुगलं क्वापि प्लवङ्गयुगलं क्वचित् ।
क्वचिच्च वञ्चकद्वन्द्वं गन्धर्वमिथुनान्यपि ॥ ६३ ॥
नानापशव्यद्वन्द्वानि निर्वैराणि वसन्ति हि ।
शिवशक्त्यात्मकान्येव क्रीडारामेषु नित्यशः ॥ ६४ ॥
तद्वत् कलरवा. केचित् खेलन्ति खञ्जनाः क्वचित् ।
किकीदिवियुगान्येवं कलिङ्गविहगाः कति ॥ ६५ ॥
स्तोककास्ताम्रचूडाश्च पुण्याः पिकशकुन्तयः ।
कतिचित् कलविङ्का वै विलसन्ति वने वने ॥ ६६ ॥
क्वचित् कीरशकुन्तानां मोदन्ते मिथुनान्यपि ।
चक्रवाकास्तथा क्रौञ्चाः पुष्कराह्वविहायसः ॥ ६७ ॥
कलहंसा राजहंसा रमन्ते मानसौकसः ।
द्विरेफा नीलकण्ठाश्च क्रीडन्ते विसकण्ठिकाः ॥ ६८ ॥
एवं नानाविधास्तेषु सङ्क्रीडन्ते पतत्रिणः ।
निखिलोपवनेषूच्चैः कूजन्तः श्रीशिवेत्यपि ॥ ६९ ॥
चूडावर्हगरुत्कोटिप्रोड्डीनाद्यैः सुलक्षणैः ।
सर्वे स्वस्वकुलायेषु विलसन्ति विलासिनः ॥ ७० ॥
उद्यानोपवनेष्वेवं सरस्यस्तु सहस्रशः ।
निबद्धा दिव्यवज्राद्यैस्तत्तन्नाम्ना प्रतिष्ठिताः ॥ ७१ ॥
क्वचित् श्यामासरः प्रोक्तं कुत्रचित्त्रिपुरासरः ।
कासारः शारदायास्तु सुन्दर्यास्तु सरः शुभम् ॥ ७२ ॥
तटाको ललितायाश्च परा-पद्माकरः क्वचित् ।
सरसी राजमातङ्ग्याः कामेश्वर्यास्तथा सरः ॥ ७३ ॥
सहस्राणि सरांस्येवं श्रीपुरे प्रथितानि हि ।
प्रिये ! पीयूषपूर्णानि नित्यं जानीमहे वयम् ॥ ७४ ॥
कह्लारैः कति राजन्ते क्वचित् कुवलयान्यपि ।
इन्दीवरैः कैरवैश्च विशोभन्ते सरांसि वै ॥ ७५ ॥
पुण्डरीकाणि तु क्वापि तद्वत्कोकनदान्यपि ।
विचित्राण्यपराण्येवं कासारेषु निरीक्ष्यते ॥ ७६ ॥
मृणालकन्दकिञ्जल्कै-र्मकरन्दैर्दलैरपि ।
वराटकैर्विशोभन्ते ह्यब्जखण्डान्यहर्निशम् ॥ ७७ ॥
मनोज्ञैः कोटिलक्षैश्च मन्दिरैर्मञ्जुलं पुरम् ।
उद्यानोपवनोल्लासि सरोभिः सुन्दरं सदा ॥ ७८ ॥

शक्के ! श्रीनगरं रम्यं निगमानामगोचरम् ।
नन्दचक्रात्मकं नित्यं भास्वत्सद्भुवनात्मकम् ॥ ७९ ॥
तस्याभ्यन्तरतस्तन्वि ! सर्वानन्दमये पुरे ।
हेतो. श्रीमन्महाराज्ञ्याः श्रीचिन्तामणिमन्दिरम् ॥ ८० ॥
अत्युच्चं निखिलोत्कृष्टं यत्रास्ते परम. शिवः ।
पूर्णानन्दो हि परया शक्त्याऽऽश्लिष्टशरीरकः ॥ ८१ ॥
अर्द्धनारीश्वरः सोऽपि चित्सदानन्ददेहभाक् ।
तत्कायकान्तिभिर्नित्यं ज्योतीरूपं हि तत्पुरम् ॥ ८२ ॥
न कथञ्चित् कथयितुं शक्यं श्रीराजमन्दिरम् ।
किञ्चित्तथापि तन्वङ्गि ! वर्णयामि प्रवृत्तये ॥ ८३ ॥
चञ्चच्चिन्तामणिव्रातै-रचितं चारुचिन्मयम् ।
विशालवलयाकारं ज्योतिर्जालमनुत्तरम् ॥ ८४ ॥
विचित्ररत्नरचिता यत्र शालाः सहस्रशः ।
भ्राजमानमहामूल्यमणिभिर्भाविताः सभाः ॥ ८५ ॥
स्फटिकोत्थकुटीराणि कल्पितान्यपि कोटिशः ।
नानामणिसमूहेन घटितानि नृपालये ॥ ८६ ॥
नानारत्नचूर्णमय्या मृत्स्नया मञ्जुलान्यपि ।
मणिभिर्मण्डपा कृताः सहस्रस्तम्भशोभिताः ॥ ८७ ॥
प्रसन्नः सर्वदा श्रीमान् प्रासादः खलु दीव्यति ।
कोटिशः स्वर्णकलशाः शोभन्ते शेखरेष्वपि ॥ ८८ ॥
धन्योऽसौ साधितः सौधः स्यन्दते हि यतः सुधा ।
ध्वजैः पूतपताकाभिरुल्लसत्युपकारिका ॥ ८९ ॥
क्वचित्तु स्वस्तिकाकारः सर्वतोभद्रचिह्नितः ।
नन्द्यावर्ताकृति. क्वापि दिव्यमण्डललाञ्छितः ॥ ९० ॥
राजराजेश्वरस्य श्रीप्रासादः समुदञ्चितः ।
कोटिसूर्यप्रतीकाशः शशिकोटिसुशीतलः ॥ ९१ ॥
वाह्निकोटिदुराधर्ष-स्तडित्कोट्युज्ज्वलः सदा ।
गारुत्मतैश्च गोमेदैर्वज्रैश्च गजमौक्तिकैः ॥ ९२ ॥
पद्मरागैरिन्द्रनीलैस्तथा मरकतैरपि ।
वैदूर्यैर्विद्रुमैश्चापि घटितस्तेजसां निधिः ॥ ९३ ॥
साधितास्तत्र शुद्धान्ताः सद्रत्ननिकराञ्चिताः ।
चन्द्रातपादिभिर्युक्ताः सुन्दरीणां सहस्रशः ॥ ९४ ॥

श्रीहंसः शक्ते ! इत्थमनिर्वचनीये श्रीनगरे पञ्चाशदक्षरोल्लसितनानामन्त्रबीजविद्यावृन्देषु समुल्लसितानि शक्तिशिवमिथुनानि निखिलागमदर्शितानि श्रीनगरे ज्ञातव्यानि । शिवोऽपि नो शक्तः सकलं वक्तुमित्यत. किञ्चिद्ब्रूमः ।

मातृका, भूतलिपिर्वाग्वादिनी, परतेजोमयी, परज्योतिःस्वरूपिणी, परनिश्चलाऽजपा-ललिता, त्रिपुरा, कामेश्वरी, रक्तनेत्रा, सञ्जीविनी, वज्रप्रस्तारिणी, पारिजातेश्वरी, पञ्चबाणेश्वरी, पञ्चकामेश्वरी, पञ्चरत्नेश्वरी, मातङ्गेश्वरी, भुवनेश्वरी, पञ्चमीलक्ष्मीर्महालक्ष्मीः, त्रिशक्ति., सर्वसाम्राज्याऽन्नपूर्णा, भगमालिनी, नित्यक्लिन्ना, भेरुण्डा, वह्निवासिनी, महावज्रेश्वरी, शिवदूती, त्वरिता, कुलसुन्दरी, नित्या, नीलपताका, विजया, सर्वमङ्गला, ज्वालामाला, विचित्रा, काली, तारा, सुमुखी, शारिका, शारदा, पीताम्बरा, तुर्या, राज्ञी, ज्वालामुखी, भीट्टाविर्णी, भवानी, पद्मावती, कुब्जिका, गौरी, गायत्री, खेचरी, त्रिपुटा, शुद्धविद्या, हसन्ती, सौभाग्या, लोपामुद्रा, महादेव्यम्बा, कामकला, महार्घा, मिश्राम्बा, परा, गोपालसुन्दरी, त्रिपुरसुन्दरीत्याद्याः कोटिशः शक्तयः सशिवाः सपरिजना. स्वस्वयन्त्रलक्षणमन्दिरेष्वविरतं सामरस्यं रसयन्ति श्रीनगरे । तद्वदनेकशो मिथुनमालोदितान्यपि शक्तिशिवद्वन्द्वानि च विचारचातुर्येण विचिन्त्यानि । एवं नाना नामरूपात्मकं मिथुनसमुदायं श्रीरासनगरे निरन्तरं निवसतीति दिक् ।

किञ्च-श्रीनगरोल्लसितानां सर्वेषां मिथुनानां शक्तिशिवाविति नामसाम्यम् । शक्तिप्राधान्यमेतत् सर्वम् ।

प्रिये, ! यद्यपि निखिलमिथुनाना नानामन्त्रा, बहुविधं ध्यानं, पृथग् भूतानि कर्माणि च यन्त्राणि तथापि जलानां जलधिरिव, नानारसानां मध्वपूप इव, वृक्षवल्लीनां वनमिव समष्टिदृष्ट्या श्रीनगरमेव सामरस्याय विद्यते । फललिप्सया चेदाश्रयेत् तर्हि तु नानाभेदः प्रसज्यते । श्रीसामरस्योपासकानां तु नेषदपि भेदाशङ्का ।

शक्ते ! श्रीनगरमन्तरेण न खलु शक्तिशिवमिथुनानां क्वचिन्निवासभूमिका; यतः सर्वेषां शिवमिथुनानां श्रीमहाराज्ञी-महाराजौ श्रीनगरे एव विद्येते । अतस्तदङ्गभूतानां तेषां सर्वेषां तदेव क्रीडापदम् । किञ्च । सर्वासा शक्तीनां मलभूता महाराज्ञी श्रीपराशक्तिरेव नाना-नामरूपात्मिका श्रीनगरे च मायाप्रपञ्चे परिक्रीडते ।

तथैव सर्वेषा शिवानां मूलभूतः श्रीपरमशिवोऽनन्तनामरूपात्मकश्चेति ।

किमुक्तम् ।

श्रीनगरे या याः शक्तयस्ताः सर्वाः श्रीपराशक्तेः कलाः । तद्वन् मायाप्रपञ्चेऽपि या याः स्त्रियस्तास्ताः सर्वाः पराशक्तेरेव कला., अधिष्ठानवैचित्र्याद्वैलक्षण्यम् । तथैव श्रीनगरे च मायाप्रपञ्चे ये ये पुमांसस्ते ते सर्वे श्रीपरमशिवरश्मय एव । किमुच्येत । अनन्तलीलः खलु श्रीपरमशिवः नात्र किमपि शङ्क्यं; श्रीविद्यैव पराशक्तिः, सैव राजराजेश्वरी, सैव श्रीनगरस्य महासाम्राज्ञीत्यधिगम्यताम् । कामेश्वर एव श्रीपरमशिव., स एव राजराजेश्वरः, स एव श्रीनगरस्य महासम्राडिति, एतच्छिवशक्तिद्वन्द्वादधिकं न कश्चिदित्यखिलागमरहस्य सिद्धान्तः ।

। उक्तं चागमान्तरे ।

सर्वमन्त्राधिका देवि ! पञ्चायतनमन्त्रकाः ।
तेभ्यो गजाननाः श्रेष्ठाः सूर्यविद्या ततोऽधिका ॥ १ ॥

सूर्यविद्याऽधिका देवि ! विष्णुविद्या विशिष्यते ।
विष्णुविद्याऽधिका तद्वच्छिवविद्या विशिष्यते ॥ २ ॥
शिवविद्याऽधिका देवि ! शक्तिविद्या विशिष्यते ।
शक्ते श्रेष्ठैव श्रीविद्या नातः श्रेष्ठं तु किञ्चन ॥ ३ ॥
सर्वविद्याशिरो यस्माच्छ्रीविद्यैव न संशयः ।
तस्मात्सर्वत्र विद्यानां श्रीविद्या श्रेयसी प्रिये ! ॥ ४ ॥

इति ।

शृणोषि हंसि ! श्रीनगरगर्भगतसर्वानन्दमयपुरान्तश्चश्चच्चिन्तामणिमन्दिरेऽनिर्वचनीयं श्रीतल्पमुल्लसति तस्य स्मृतिः ॥

## । श्रीशङ्करः ।

कनकरचिते पञ्चप्रेतासनेन विराजिते
मणिगणचिते रक्तश्वेताम्बरास्तरणोत्तमे ।
कुसुमसुरभौ तल्पे दिव्योपधानसुखावहे
हृदयकमलप्रादुर्भूतां भजे परदेवताम् ॥ १ ॥
स्वस्थानस्थितदेवतागणवृते बिन्दौ मुदा स्थापितं
नानारत्नविराजिहेमविलसत्कान्तिच्छटादुर्दिनम् ।
चञ्चत्कौसुमतूलिकासनयुतं कामेश्वराधिष्ठितं
नित्यानन्दनिदानमेव सततं वन्देम सिंहासनम् ॥ २ ॥

इति ।

भो वल्लभे ! श्रीमति केलितल्पे समुपविष्टस्य श्रीपरमशिवस्य रम्योत्सङ्गे श्रीविद्योल्लसति । तद्ध्यानमेतत् ।

## श्रीमदागमरहस्ये ।

उद्यद्भास्वत्समाभासा जपाकुसुमसन्निभा ।
सद्यःसन्तप्तहेमाभा दाडिमीकुसुमोज्वला ॥ १ ॥
पद्मरागप्रतीकाशा कुङ्कुमोदरसन्निभा ।
स्फुरन्मुकुटमाणिक्यकिङ्किणीजालमण्डिता ॥ २ ॥
मणिरत्नप्रभापूर्णकिरीटेन्दुविराजिता ।
कल्पप्रसूनकोत्तंसकबरीभारशोभिता ॥ ३ ॥
तरुकेतकसंराजन्नीलभ्रमरकुन्तला ।
भृङ्गरेखास्फुरन्मुक्तामाणिक्यतिलकोज्वला ॥ ४ ॥
कलालिकुलसंकाशकुटिलालिकपल्लवा ।
किञ्चिदर्द्धेन्दुकुटिलललाटमृदुपट्टिका ॥ ५ ॥
पिनाकिधनुराकारभ्रूलता परमेश्वरी ।
राजच्चन्द्रकलास्फूर्तितिलकाञ्चलललाटिका ॥ ६ ॥

आनन्दमुदितोल्लोललीलान्दोलितलोचना ।
कर्णचुम्बिस्फुरन्नीलोत्पलाक्षक्षेपसुन्दरी ॥ ७ ॥
हीरमुक्तावलीराजत्स्वर्णताटङ्कराजिता ।
कर्णभूषणतेजोभिः कपोलस्थलमण्डिनी ॥ ८ ॥
स्फुरन्मयूखसङ्घातविलसद्गण्डमण्डली ।
सुगण्डमण्डलाभोगजितेन्द्वामृतमण्डला ॥ ९ ॥
विश्वकर्मादिनिर्माणसूत्रसुस्पष्टनासिका ।
मुखचन्द्रोज्ज्वलन्मुक्ताकारमौक्तिकराजिता ॥ १० ॥
ताम्रविद्रुमबिम्बाभरक्तोष्ठी ह्यमृतेश्वरी ।
स्मितमाधुर्यविजितब्रह्मविद्यारसप्रभा ॥ ११ ॥
दाडिमीबीजवज्राभदन्तपङ्क्तिविराजिता ।
रत्नदीपशिखाभासा जिह्वाललनभासुरा ॥ १२ ॥
कर्पूरशकलोन्मिश्रताम्बूलपूरितानना ।
महामृगमदोद्दामकुङ्कुमारुणविग्रहा ॥ १३ ॥
अनौपम्यगुणोपेताचिबुकोद्देशशालिनी ।
कम्बुग्रीवा महादेवी मृणालललितैर्भुजैः ॥ १४ ॥
राजद्विद्रुमवल्लीव बाहुवल्लिविराजिता ।
रक्तोत्पलदलाकारसुकुमारकराम्बुजा ॥ १५ ॥
कराम्बुजनखज्योत्स्ना–वितानितनभस्तला ।
बाहुमूलाप्तकेयूरकटकोर्मिविराजिता ॥ १६ ॥
भुवनोत्पत्तिकल्याणकण्ठसूत्रसमन्विता ।
सुवृत्तनिबिडोत्तुङ्गकुचभारालसा शिवा ॥ १७ ॥
मुक्ताहारलतोपेत–समुन्नतपयोधरा ।
दिव्यकञ्चुकसंराजद्रत्नचित्रविचित्रिता ॥ १८ ॥
शातोदरी निम्ननाभी क्षाममध्यमसुन्दरी ।
त्रिवलीवलनायुक्तमध्यदेशसुशोभिता ॥ १९ ॥
अनर्घ्यरत्नघटितकाञ्चीदामनितम्बिनी ।
नितम्बबिम्बद्विरदरोमराजीवराङ्कुशा ॥ २० ॥
रत्नाङ्कुरस्फुरत्तेजो–व्याप्तत्रैलोक्यमण्डली ।
कदलीललितस्तम्भसुकुमारोरुराजिता ॥ २१ ॥
लावण्यकदलीतुल्य–जङ्घायुगलमण्डिता ।
गूढगुल्फपदद्वन्द्वप्रपदाजितकच्छपा ॥ २२ ॥

तनुदीर्घाङ्गुलीभास्वन्नखचन्द्रविराजिता ।
नवरत्नस्फुरत्तेजो-मञ्जीरव्याप्तदेवता ॥ २३ ॥

ब्रह्मविष्णुमहेशानस्फुरन्मौलिपदाम्बुजा ।
पीतवस्त्रपरीधाना राजद्रक्तोत्तरीयका ॥ २४ ॥

रौहित्यजितसिन्दूरजपादाडिमरागिणी ।
रक्तपुष्पनिविष्टाऽपि रक्ताभरणभूषिता ॥ २५ ॥

पर्यङ्कबन्धनश्लाघ्य-स्वस्तिकासनशालिनी ।
सर्वश्रृङ्गारवेषाढ्या सर्वालङ्कारशोभिता ॥ २६ ॥

जगदाह्लादजननी जगद्रञ्जनकारिणी ।
जगदाकर्षणकरी जगत्कारणरूपिणी ॥ २७ ॥

सर्वदेवमयी देवी सर्वमन्त्रमयी परा ।
सर्वतीर्थमयी देवी सर्वशास्त्रमयी प्रिये ! ॥ २८ ॥

सर्वतन्त्रमयी देवी सर्वाचारस्वरूपिणी ।
सर्वसौभाग्यजननी सर्वसौभाग्यसुन्दरी ॥ २९ ॥

प्रिये ! । प्रोक्तलक्षणा श्रीपराशक्ति. श्रीरासे द्विभुजा । अन्यत्र चतुर्भुजाऽपि ।
' कनककटकयुग्मं बाहुयुग्मे निधेही ' त्यादिशङ्करोक्तेर्द्विभुजा ।
' धनुर्बाणान् पाशं सृणिमपि दधाना करतलैरि ' त्याद्युक्तेश्चतुर्भुजाऽपि ।
एवमेव सर्वास्वपि शक्तिषु श्रीरासे तु संश्रोतव्यम् ।
तद्वद् द्विनेत्रा एव सर्वाः, तृतीयं नेत्रं त्वलक्ष्यम् क्वचिद्विकचति ।

श्रृणोषि तन्वि ! एतत् किञ्चित् श्रीरासेश्वर्याः पराशक्तेः स्वरूपं वर्णितं, समग्रं वर्णयितुं शिवोऽपि न शक्तः ।

रसिके ! इदानीं श्रीरासेश्वरस्य परमशिवस्य स्वरूपं प्रेक्ष्यतां, लीलाकलेवरं न केनापि शक्यं कलयितुं, तथापि मानसविलासाय मनागुच्यते ।

शुद्धस्फटिकसङ्काशः शीतरश्मिसमप्रभः ।
कुन्दपुष्पाभधवलः कर्पूरद्युतिसन्निभः ॥ १ ॥

तुषारकणसङ्काशः क्षीरफेनोज्ज्वलच्छविः ।
महामुक्तानिभः स्वच्छो मालतीकुसुमोज्ज्वल· ॥ २ ॥

कोटिकन्दर्पलावण्यः सदा षोडशवार्षिकः ।
नवीनयौवनोन्मत्तो ज्योतिर्ज्वालोल्लसत्तनुः ॥ ३ ॥

नातिह्रस्वो नातिदीर्घो नातिपीनो न वा कृशः ।
रुचिरावयवः शश्वत्सच्चिदानन्दविग्रहः ॥ ४ ॥

न क्षुधा न तृषा तस्य न जरा जातु जन्म वा ।
न कालो नाङ्गवैकृत्यं पूर्णानन्दमयः प्रभुः ॥ ५ ॥

विचित्ररत्नविभ्राजि-किरीटाञ्चितमस्तकः ।
शशिखण्डसमुल्लासिचूडामणिविमण्डितः ॥ ६ ॥
सुवर्णतन्तुखचितदिव्यवस्त्रोत्तमाङ्गकः ।
सुगन्धोल्लासितिलकैः कस्तूरीबिन्दुदीपितैः ॥ ७ ॥
लसद्विशालभालः श्रीनिवासेन समन्वितैः ।
कन्दर्पधनुराकारस्फुरद्भ्रूलतिकाञ्चितः ॥ ८ ॥
कन्दर्पकेलिकल्लोललसल्लोचनपङ्कजः ।
कीरचञ्चुस्फुरन्नासः कर्णाञ्चद्रत्नकुण्डलः ॥ ९ ॥
सद्रत्नकुण्डलोदञ्चत्-कपोलतलमण्डितः ।
अनङ्गपूर्णराकेशस्फुरदाननमण्डलः ॥ १० ॥
आरक्तोष्ठयुगश्चापि रत्नाञ्चद्रदनावलिः ।
श्रीरसोल्लासलसितरसनः सस्मिताधरः ॥ ११ ॥
प्रोदञ्चच्चिबुकः कान्ते ! कम्बुग्रीवाविराजितः ।
शोभमानस्कन्धयुग्मो राजमानकराम्बुजः ॥ १२ ॥
स्वर्णोदञ्चद्यज्ञसूत्रस्फुरत्सव्याससुन्दरः ।
रत्नाङ्गदैश्च कटकैः स्फुरद्धस्तोऽङ्गुलीयकैः ॥ १३ ॥
ध्वजाम्बुजादिसल्लक्ष्मप्रोल्लसत्करपल्लवः ।
चिदानन्दब्रह्मरस-स्रवद्धस्ततलः शिवे ! ॥ १४ ॥
इन्द्रनीलमहामुक्ताप्रवालावल्युरःस्थलः ।
चञ्चच्चिन्तामणिव्रातलसदेकावलिः प्रिये ! ॥ १५ ॥
अनौपम्योदरः श्रीमन्निम्ननाभिविशोभितः ।
रोमराजीराजमानः शृङ्खलाप्रोल्लसत्कटिः ॥ १६ ॥
पट्टकूलोपसंव्यानो राजमानोत्तरीयकः ।
बहुमूल्योल्लसच्चैलरोचमानकलेवरः ॥ १७ ॥
सौगन्धिघनलिप्ताङ्गोऽम्लानपुष्करमालिकः ।
योनिलिङ्गादिसन्मुद्रा-लाञ्छितोरःस्थलादिकः ॥ १८ ॥
रत्ननूपुरयुग्मेन प्रोदञ्चच्चरणद्वयः ।
उद्यद्दिनेशलक्षांशुजालतुल्यनखावलिः ॥ १९ ॥
चामराम्भोरुहच्छत्र-ध्वजाद्यङ्कितपत्तलः ।
चिदानन्दब्रह्मविद्याप्रोदञ्चद्रत्नपादुकः ॥ २० ॥
विरञ्चिविष्णुरुद्रेश-सदाशिवकिरीटकैः ।
नीराजितपदाम्भोजः पूर्णात् पूर्णः परात्परः ॥ २१ ॥

सखिभिर्वेष्टितः श्रीमान् सरूपैः शतकोटिभिः ।
सहस्रकोटिभिस्तद्वद्रमणीभिर्विराजितः ॥ २२ ॥
विचित्ररत्नपर्यङ्के ब्रह्माद्यङ्घ्रिविशोभिते ।
निषण्णो रासशालायामनिशं परमः शिवः ॥ २३ ॥
रासैश्वर्याब्धिलहर्या शक्तौ शृङ्गारतत्पर. ।
पीयूषोल्लासकल्लोलैर्विलसन्नयनाननः ॥ २४ ॥
कामकेलिकलालुब्ध. कन्दर्पकुतुकान्वितः ।
भावुकैर्भोगमोक्षाद्यैः पूजितः परिचारकैः ॥ २५ ॥
वेदान्तागमसद्विद्यासन्दोहैरभिवादितः ।
सर्वात्मा सर्वमन्त्रात्मा सर्वबीजमयोऽव्ययः ॥ २६ ॥
सर्वशक्तिमयः साक्षादुद्यत्सर्वशिवात्मकः ।
निष्प्रपञ्चः प्रपञ्चात्मा पुरुषः पुरुषोत्तमः ॥ २७ ॥
अक्षरोप्यक्षरातीत-स्तुर्यातीतस्तुरीयकः ।
शब्दानिर्वचनीयोऽपि सम्राट् श्रीनगरस्य वै ॥ २८ ॥
अर्द्धनारीश्वरः सोऽपि सकलो निष्कलश्च सः ।
चराचरप्रपञ्चस्थ-समग्रमिथुनात्मकः ॥ २९ ॥

श्रूयते शक्त्या ?

दिङ्मात्रमेतच्छ्रीपरमशिवस्य स्वरूपं दर्शितम् । न किल सकललक्षणदर्शने श्रीमहासरस्वत्यपि समर्था ।

भो राजहंसि ! समग्रोपनिषद्रहस्यं महावाक्यार्थभूतं परमहंसैः सेव्यं श्रीशक्तिशिवद्वन्द्वं श्रीरासशालाया शृङ्गारादिभी रसैरनवरतं रमते । न चासौ लीलामूर्त्तिः किलार्यहलं दीक्षितैरपि द्रष्टुमुत मन्तुं शक्या पशुभिः । किन्तु ।

गुरोः कृपा यत्र भवेत् प्रभूता श्रीदेवतायाश्च महान् प्रसादः ।
तस्यैव पुंसो रसशास्त्रबोधस्तस्यात्र भक्तिर्न खलापनोद्येति ॥ १ ॥
यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ २ ॥

किमुक्तम् ?

केचिदत्र नीरसाः पाशाष्टकव्यानद्धबुद्धयो जीवन्मुक्ताभिमानिनो दिङ्मूढाः पातञ्जलमीमांसासाङ्ख्यवेदान्तादिषु शुष्कशास्त्रदर्शनेषु कापथापथप्रान्तरकान्तारादिलक्षणेषु सरन्ति । न हि ते त्वस्मद्दर्शितायां बत परमशिवशक्तिलीलामूर्तौ श्रद्दधते । विक्षिप्तत्वात् । अतस्ते सर्वे पशव एव । वेदाः प्रमाणमितिजल्पन्तोऽपि परमेश्वरप्रणीताखिलवेदार्थभूतागमातिरहस्यशक्तिशिवाद्वयस्वरूपं नो प्रतियन्ति । यद्यत् सावयवं तत्तद्विनाशीत्यनेककुत्सिततर्काकुलमतिभि. किमस्मद्दर्शितं श्रीसामरस्यस्वरूपं प्रतीयेत ?

शक्ते ! श्रीपरमहंसा एव निरवयवसावयवपरिच्छिन्नादिविविधान्धमोहैर्न शक्यमवबोद्धु- मैहिकामुष्मिके. पशुभिरिति निविडं निर्णीय सामरस्योपदेशेन पशुत्वं पराकृत्य श्रीपराशक्तिं परमशिवसंलग्नाममलैरुपचारैरर्चयन्ति ॥

**इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे भक्तियोगे श्रीशक्ति-शिवमूर्तिवर्णनं नामैकोनचत्वारिंशोल्लासः ॥ ३९ ॥**

श्रीहंसः । शृणोतु शक्तिः । **भक्तिर्नवधा** यथा ।

श्रवणं स्मरणं शक्ते ! कीर्त्तनं पादसेवनम् ।

अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनमिति ॥

श्रीरसिकैरिह प्रोक्तनवविधभक्त्या श्रीशक्तिशिवमिथुनमुपास्यम् ।

श्रीभक्तेर्नवप्रकारास्तु तत्तत्समयैस्तत्तल्लक्षणैर्विज्ञातव्याः ।

अथात्र त्रिविधभक्तियोगतो मिश्रभक्तियोगोऽधुना भण्यते । मनोवाक्कायैरेष साध्यः ।

प्रिये ! यद्यपि नित्यावदातो नित्यार्चितो नित्यतृप्तः श्रीपरमशिवः क्षुल्लकैरैहिकैरपारैः पदार्थैः पूजयितुमयुक्तः । मायामयेऽसद्देशे तस्यावाहनाद्यमप्ययोग्यम् । तदप्य**ागमरहस्य** विहितत्वान्न किमप्यनुचितमिति मन्तव्यम् । शक्तिशिवात्मकमेव सर्वं जगदित्यतस्तद्दृष्ट्या तु न कश्चित् काप्यपराधः, जीवस्त्वर्चनविधावपराध्नोत्येवेत्यतस्तद्भावं व्युदस्य हंसोऽहमिति सान्द्रं विभाव्येह समग्रं विधेयम् ।

किञ्च ।

स्वाधीनोऽपि श्रीभगवान् भक्ताधीन इति सर्वत्र श्रुतत्वाद् भगवद्भक्तयोरीषदपि नो दोषाशङ्का । यत्र भगवान् तत्र भक्तः, यत्र भक्तस्तत्रापि भगवान् प्रेमसम्बन्धत्वात् । दिव्यदृशैव विलोक्यं नेतरदृष्ट्या । चेद्रसिकाना पशुदृक् स्यात् तदा पशुरसिकयोः को विशेषः । एव- मादीन्यादौ **श्रीपरागम**वचनान्याकर्ण्य शक्तिशिवयो **रहस्यार्चन**माचरणीयमिति शिक्षा ।

ललने ! अर्चनोपक्रमे तदनुरूपं स्थलं निर्मातव्यम् ।

तत्रेदं तत्त्वम् ।

प्रागुदीरितं श्रीतिरस्करिण्याद्यं श्रीचिन्तामणिमन्दिरान्तमिहैव क्वचिन्निष्पादितदेशे यथाविभवं विभाव्य, तत्तत्तत्त्वं यथोक्तवर्त्मना स्मरणार्चननमस्कारस्तुतिभिः सन्तोष्य हंसी- हंससन्दोहसमावृतः स्वयं सह शक्त्या सुस्नातः शोभनाभरणभूषितो मनोज्ञानार्द्रोपचारान् सम्पाद्य वक्ष्यमाणविधानेन श्रीपरमहंसगुरुमिथुनाज्ञयाऽर्चनं विरचयेत् ।

प्रिये ! तत्र तु प्राक् सपर्यासम्भारं साधयेत् । कूर्मादिलक्षणाः कतिचनाधाराः कानिचित् कनकरजतताम्रादिनिष्पन्नानि पृथग्-विधानि पात्राणि । यथाविभवमासनादीनि । पाद्यः, सौगन्धिद्रव्यम्, अञ्जनं, पक्वतैलं, स्वर्णदोरकाः, कङ्कतिकाः, अलङ्काराः, अक्षताः पुष्पमालिकाः, दशाङ्गधूपः, अनेके दीपाः, नानाविधं पक्वान्नलक्षणं नैवेद्यं, ताम्बूलादिर्मुखवासः, आरार्त्तिकं, निर्मलं दर्पणं, छत्रं, चामरे, तालवृन्तके, वीणा, मृदङ्गः, वेणुः, झल्लर्यः, काहलानि च विवि- धानि वादित्राणि, हिरण्यदक्षिणाः; एवमादीनि विचित्रवस्तूनि यथाक्रममासादयेत् । सर्वेषां वस्तूनामासादनं **त्वागमरहस्यपद्धति**भेदेन विधातव्यम् ।

प्रिये ! तवापि तत्पद्धतिस्तु विदिताऽस्ति अतोऽत्र न भण्यते ।

किञ्च ।

स्वपरित साङ्गं श्रीनगरं विचिन्त्य श्रीचिन्तामणिमन्दिरान्तर्गतमात्मानमपि विभाव्य, आत्मसंमुखं सुवर्णादिसमुद्भूत सिंहासनमासाद्य तदुपरि कौसुमतूलिकाद्यास्तीर्य, तद्वायुकोणे स्वगुर्वर्थमासनं निधाय तत्परित. यावन्ति हंसमिथुनानि तावन्त्यासनान्यासाद्य, सकलत्रस्य स्वस्याप्यासनमासादयेत् ।

भोः कलत्राकर्णयसि ?

हंसी । निशम्यते स्वामिन् ! उच्यतामग्रतः ।

श्रीहंसः-अयि अङ्गने ! अपचितौ चराचरलक्षणा प्रत्यक्षं श्रीमूर्तिरपेक्ष्या । आगमादिषु शास्त्रेषु तु विशेषतोऽचेतना नानामूर्तयो निरूपिताः । कुतः । यथा दृषदाद्युद्भूतासु प्रतिमास्वचेतनासु भक्तजनाना भावस्तिष्ठति न तथा चेतनासु ।

किञ्च । बुभुक्षा-पिपासा-शोकमोहजरारागद्वेषाद्यनेकविधं दुःखजालं न सामञ्जस्येनाचरास्वालोच्यते । म्लिष्टविस्पष्टह्याद्रिकं च न किञ्चन वचनं; क्वचित्कदाचिच्चरवदाचरन्त्योऽपि परिचर्यावशान्न तथापि तदाचरणस्य सर्वत्र प्रासिद्ध्यम्; एवमादीन्यनेकलक्षणान्यालोक्य शास्त्रकारैरर्चाविधावचरा मूर्तयः सम्भाविताः ।

ललने ! अस्तु तेषा तादृग्लक्षणास्वश्मादिसमुद्भूतास्वचरासु नानाप्रतिमासु शास्त्रोदितत्वात् सद्भावः ।

नास्मत्प्रभृतिषु श्रीहंसेषु तु तद्रोचते ।

यद्यपि सर्वत्र ब्रह्माण्डे चैतन्यं चिद्विलासविद्भिरालोच्यते न क्वचित् किमप्यचेतनम् । चिन्मयशिवशक्त्युत्पन्नत्वात् । तदपि स्तोकतस्त्वोज्जृम्भिततनुषु चित्स्फूर्त्यदर्शनादचेतनत्वमित्युच्यते । समग्रतत्त्वसमुल्लसच्छरीरेषु तु स्फुटमेव चैतन्यमालोच्यते अतश्चेतनमचेतनं चेति जगति द्वैविध्यमवबुध्यते विबुधः ।

'अशनानशने अभीत्यादि **श्रुतेः** । चेतनाऽचेतनविभागो हि सर्वत्र श्रूयते च दृश्यते ।

किञ्च ।

चतुर्विधो भूतग्रामः । उद्भिज्जस्वेदजाण्डजजरायुजलक्षणः ।

तत्रोद्भिज्जे गूढचैतन्यादचेतनत्वं, अन्यत्र तु चेतनत्वम् ।

यद्यपि स्वेदजाण्डजयोः स्फुटं चैतन्यमालोच्यते, तदपि जरायुजे यथा चित्स्फूर्तिर्न तथा तयोरित्यतस्तस्यैव श्रेष्ठ्यम् । तत्रापि मानुष्यं श्रेष्ठम् । तत्रापि च श्रीसामरस्योल्लासिजनेष्वौत्कर्ष्यम् । यथा श्रीविद्योल्लासिनि मानुषे चिदुल्लासो न तथाऽन्यस्मिन्दृष्टः श्रुतो वेत्यतः श्रीपरमहंसेष्वेव चैतन्यं न तादृगन्यत्र कुत्रचिच्चैतन्यमिति सिद्धम् ।

किमुक्तम् ?

हंसि ! ब्रह्मादिस्तम्बपर्यन्तेषु प्रपञ्चान्तःपतितेषु शरीरिषु यत्र श्रीसामरस्योल्लासः समुल्लसति तच्चेतनमन्यच्चेतनवदाचरदप्यचेतनमेवेत्यवैतु भवती । 'दृतय इव श्वसन्त्यसुभृत' इति **भागवतेऽपि**

यद्यपि । सर्वत्रैव सामरस्योल्लासः स्फुरति, तथापि तद्रूपमन्तरेण तत्स्वरूपज्ञानराहित्यात् नान्यत्र चैतन्यम् । अतोऽचेतनाभ्यो मूर्तिभ्यश्चेतना मूर्त्तय. समीचीना. ।

प्रिये ! एवं पौर्वापर्येण पारमार्थिकं पारम्पर्यमालोच्य हंसशरीरेष्वेव श्रीशिवार्चनमुचितम्। यद्यपि हंसवियोल्लसितचेतनस्य तत्. पिपासाबुभुक्षाशोकमोहजरामरणाद्यनेकविधैर्दोषैर्दुष्टाऽस्ति, तथापि तद्गतश्चेतनोऽपि तद्गतदृपणैर्दर्पणप्रतिविम्बवन्न दुष्यते तर्हि तादृङ्मूर्त्तावाहूत. श्रीपरमेश्वरस्तद्दोषै. कथं दुष्येत।

उक्तञ्च

सर्वयायी यथा सूर्यः सर्वभक्षी यथाऽनलः ।
योगी भुक्त्वाऽखिलान् भोगांस्तथा पापैर्न लिप्यते ॥ १ ॥
क्रियमाणानि कर्माणि ज्ञानप्राप्तेरनन्तरम् ।
न स्पृशन्ति हि तत्त्वज्ञं जलं पद्मदलं यथा ॥ २ ॥
योगी लोकोपकाराय भोगान् भुङ्क्ते न काङ्क्षया ।
अनुगृह्णन् जनान् सर्वान् भोगार्थमटति क्षितौ ॥ ३ ॥

इत्यादि ।

किञ्च

चराचरलक्षणेऽस्मिन्प्रपञ्चे सर्वत्र शिवावेव स्वेच्छया स्वकलाया मोहमायाया वशे भूत्वा-विलसतः ।

किन्तु भ्रान्त्या देवोऽहं दानवोऽहं मनुष्योऽहं ज्येष्ठोऽहं कनिष्ठोऽहं पापिष्ठोऽहमिति भूताद्यावेशेनेव वदन्तावुच्चावचभोगैर्दुष्येते । स्वास्थ्येन शिवावावामिति ब्रुवतोर्भोग-भोगायतन-भोगसाधन-भोक्त्राद्युद्भूता न काचित्दोषाशङ्का ।

हंसी । ननु कस्यचित् शरीरमाविश्य कश्चन प्रेतः परैर्दत्तखाद्यपेयादिना तुष्यति, ताडनादिना च दुःखायते तद्वदीश्वरोऽपि स्यात् ।

श्रीहंस. । मैवम् । अतृप्तत्वादुक्तलक्षणमखिलं खलु प्रेतस्य तु स्यात्।

नेश्वरे नित्यतृप्ते निःसङ्गेऽस्मच्छरीराधिष्ठितेऽपि शक्यं किञ्चित् कल्पयितुं, स्वतन्त्रत्वात्।

प्रेतस्तु परायत्तत्वात् सर्व शारीरमासाद्यते । न हि श्रीशः ।

हंसी । भो. स्वामिन् ! एवं चेच्छ्रीरसिकशरीराधिष्ठिते परमेश्वरे तत्सम्पादितसदसत्कर्म तोषाय च रोषाय नो स्यात् तर्हि तत्सर्व व्यर्थीभवेत् ।

बहुविधैर्बलिभिः समर्चितोऽपि हंसकलेवरे नेश्वरस्तुष्येत् । कुत्सितकर्मभिश्च नापि क्लिश्येत् । तदा विधिनिषेधलक्षणेषु कर्त्तव्याकर्तव्येषु प्रवृत्त्यादिकमेव न स्यात् । नैष्फल्यात् अतोऽत्र समाधातव्यम् ।

श्रीहंसः-साधु साधु शोधयित्रि ! श्रूयताम् आत्मरूपः श्रीपरमशिव. सर्वत्र साक्षितया विलसन् सदसत्कर्मभ्यां मौढ्यात्तोषरोषोत्थं सुखदु.खलक्षणं फलं पश्यतीव ।

किमुक्तं, सत्कर्मणा परमात्मा तुष्ट इव लक्ष्यते, रुष्ट इवासत्कर्मणेति प्रतिफलितवत् ।

किञ्च, मनसाऽपि परमात्मा यादृग्रूपो भाव्यते तादृश एव दृश्यते । नैतावता तात्त्विकौ तोषरोषौ तस्मिँस्तः, मानसविलासमात्रमेवैतत् प्रतिपत्तव्यम ।

किञ्च, यावदर्च्योऽर्चनमर्चक इतीषज्जीवत्वाङ्गीकृतत्वाद्भेदव्यवहारः, तावदसच्छरीरे परिच्छिन्ने नित्यमूर्त्तिरपरिच्छिन्नोऽपि निध्यातः, परिच्छिन्नोऽसत्कलेवर इव परमशिवो विधि-निषेधलक्षणाभ्यां कर्मभ्यां तुष्टो रुष्ट इवापि दृश्यत एव, तदनुरूपं फलमपि ततः प्राप्यत एव, तदपि परमात्मभूते श्रीपरमशिवे मा वास्तवी तुष्टी रुष्टिश्च कल्पयितव्या। शारीरोपाधिवशात् सर्वा व्यवहृतिः।

अतोऽक्षरक्षरलक्षणायां श्रीहंसरूपायां साम्बशिवमूर्तौ पूज्यायां कुतर्कैः शङ्कावकाशो न कश्चित् प्रसज्यते।

चतुरे! चतुरे! अतःपरं प्रस्तुतं प्रतिपद्यस्व।

हंसी–धन्याऽहं धन्याऽहम् अधुनारब्धं भणत।

श्रीहंसः। क्वचित्सामान्यासनोपवेशिते श्रीहंसमिथुने श्रीविद्याप्रदे ध्यानोक्तलक्षणां श्रीगुर्वीं श्रीगुरुं च विचिन्तयेत्।

तदनुज्ञयाऽन्यत्र कस्मिंश्चिल्ललितलक्षणान्विते श्रीरसिकद्वन्द्वे पुरोक्तलक्षणां श्रीपराशक्तिं तादृग्लक्षणं श्रीपरमशिवं च संस्मृत्य, अपरत्र निखिलेषु श्रीरसिकमिथुनेषु त्रिपुराद्यान् परिवारान्निध्याय, श्रीस्वगुर्वनुज्ञया पुरासंस्थापितपाद्यपात्रत. पाद्यमानाय्य कोष्णं तदन्यत्र किञ्चिदुद्धृत्य कनकादिनिष्पन्ने कस्मिंश्चिन्महतिपात्रे श्रीगुर्व्याश्चरणारविन्दद्वयमाधाय तेन पाद्येन शनैः स्वयं निक्षिप्तेन स्वस्त्रिया मर्द्दनपूर्वकं वाद्यवादनविशिष्टानि सामाद्यगायनानि च श्रीगायकैर्गापयन् धावयित्वा सूक्ष्मांशुकेन च मार्जयित्वा रत्नपादुकोपरि निधाप्य नमस्कृत्य, स्वस्त्रीप्रक्षिप्तया पाद्यजलधारया स्वयं च श्रीगुरोश्चरणकमलयुगलं शनैर्विमर्द्दनपूर्वकं निर्णेनिज्य प्रमृज्य च स्वर्णपादुकोपरि निवेश्य नमस्कुर्यात्। श्रीगुरुपूजने गुरुमन्त्र एव सर्वत्र, तदनन्तरं श्रीपराशक्तेश्चरणनलिनप्रक्षालनं तदवशिष्टपाद्यपाथसा तन्मन्त्रेण प्राग्वद्विधाय। श्रीपरमशिवस्यापि पादावनेजनमेव तन्मन्त्रेणैव विधातव्यम्। परिवाराणां चानुक्रमेण शनैः शनैः पृथक् पृथक् शक्तिपूर्वाणां चरणकमलानि तेनैव नेनिज्यात्, नाममन्त्रैः, **इति पाद्यदानम्।**

अथ सस्त्रीकः ससखः स्वयं तत्पादोदकं स्वमूर्ध्नि नेत्रयोश्च न्यस्याचम्य चार्घमानयेत्। पूर्वस्थापितार्घ्यपात्रतस्तदाहार्य पूर्ववत् स्तोकं स्तोकमन्यत्र नीत्वा स्वस्वमन्त्रैः श्रीगुर्व्याः प्रभृति सर्वेषां मस्तकेषु शनैः समर्प्य प्रणमेत्। **इत्यर्घ्यदानम्।**

अथ मधुपर्कमानीय यथोक्तप्रकारेण पृथक् पृथग् रसिकानामास्येषु मन्दं मन्दं तत्तन्मन्त्रैः समर्प्य प्रणामं कुर्वीत **इति मधुपर्कदानम्।**

तथैवाचमनीयमानीय प्राग्वन्मन्त्रपूर्वकं श्रीरसिकद्वन्द्वाना वदनकमलेष्वेव विश्राणयेत्। **इत्याचमनम्।**

ततः साष्टाङ्गं प्रणम्य रत्नमुकुरं दर्शयित्वा दन्तधावनविधिनाऽऽननशुद्धिं विधाय वक्त्रनेत्राद्यं च निर्मलचैलखण्डैः पृथक् पृथक् परिमार्ज्य। ततः श्रीकलशत. स्तोकं स्तोकममृतं चानीय पृथक् पृथक् पानपात्रेषु कृत्वा हंसवृन्दं पाययित्वा ताम्बूलवीटिकां दत्वा दर्पणं दर्शयित्वा प्रणमेत्।

**इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे भक्तियोगे पूजनविधिवर्णनं नाम चत्वारिंशोल्लासः॥ ४०॥**

श्रीहंसः । श्रूयते हंस्या ?

अथ क्वचिद्रहसि स्फटिकादिनिष्पादितं पीठं परितः प्रतीसीरां प्रसार्य स्वालीनामंसेषूभयतः सर्वासां हंसीना हस्ताम्बुरुहाणि धारयित्वा पुरतो मुरलीमृदङ्गवीणादीनि वादित्राणि वादयन्तीभिर्गीतकानि च गायन्तीभिर्गायिकाभि. सार्कं, विना स्वामिना, केवलं कान्तैव जवनिकान्तरे सम्पादितं स्नानपीठं सकलाः शक्तीः शनैर्नयेत् । तत. सा श्रीमज्जनासनस्य समीपे संस्थापितसामान्यासनेषु ताः समुपवेश्य क्रमेण सर्वासां निचोलान् शनैरुत्सार्य वेणीग्रथितकनकदोरकांश्च सहचरीभिश्छोटयित्वा काञ्चनरचितकङ्कतैः केशान् प्रसारयित्वा कङ्कोलामलकादिपङ्केन च निघृष्य श्रीखण्डागरुकुङ्कुमादिनिष्पादितेन यक्षकर्दमेन च शरीराणि चम्पकमल्लिकादिनानाकुसुमसुवासितस्नेहाभ्यङ्गपूर्वकं शनैरुद्वर्त्य । स्नानपीठोपरि पुरा श्रीगुर्वीमुपवेश्य प्रागासादितस्नानामृतघटीरानीय तन्मन्त्राद्यमुच्चरन्ती सा स्वसखीभि. कनककलशोध्धृततद्घटामृतधारापातान् कारयन्ती तत्कलेवरं केशादिपत्तलान्तं बहुलजले. प्रक्षालयेत् ।

अथ मृदुलचैलेनाकेशनखं तद्वपुः परिमार्ज्यार्द्रवस्त्रं च परित्याज्य झटित्यन्यत् साधारण प्रावरणमावृत्य पृष्ठतश्चिकुरान् विकीर्य क्वचित्तत्रैवोपवेशयेत् । एवमेव मूलं सञ्जपन्ती साऽर्चकी गायनवादनपुर.सरं श्रीमहाराज्ञी पराशक्ति स्नानविधिना सुस्नाप्य तत्परिवाररूपाश्चेतराः शक्ती मूलेनैव स्नपयेत् । **इतिस्नानम्**

इत्थं सकलाः शक्तीः स्नपयित्वा तदाचमनीयेन चाचमनं कारयित्वा पुरस्सादितं विचित्रममूल्यं नूतनं सौवर्णतन्तुभिरूतं मुक्ताजालिकाभिरुल्लालितं हीरककणिकाभिर्मनोहारिवस्त्रवृन्दमुपानीय यत्नतः संवस्त्रयेत्, **तत्रैवं क्रमः ।**

प्राग्गुरुपत्नी चण्डातककूर्पासकोत्तरासङ्गादिलक्षणानि बहुमूल्यानि चैलानि परिधापयित्वा श्रीरासेश्वरी पराशक्ति च चामीकरवर्णचण्डातकं रत्नमुक्ताजालिकोल्लसितनीलचोलीदाडिमीकुसुमसन्निभाप्रपदीनप्रावारमित्थंविधानि कनकतारमुक्तालताहीरकादिविचित्रमहार्घरत्नखचितान्याच्छादनानि परिधाप्य । तत्कलात्मिकाश्चेतरा. शक्तीर्विविधांशुकविशेषान् परिधापयेत् । **इति वस्त्रदानम् ।**

किमुक्तं कान्ते ! आकर्ण्यते भवत्या ? यस्मिन्नवसरे आप्लाव्यार्थं तिरस्करिण्यन्तरे मज्जनमन्दिरे वा स्वशक्त्या शक्तयो नीयन्ते तत्समय एवार्चको यथाविधि क्वचिद्विरचितं पृथगाप्लाव्यपीठं प्रति श्रीगुरुं श्रीरासेश्वरं च तद्रश्मिरूपानपरान् रसिकांश्च स्नानार्थं नीत्वा सुगन्धितैलेन तत्कलेवराणि म्रक्षयित्वा कपीतनाद्यजनितपङ्केनोद्वर्त्तयेत् । इत्थं परिकर्मपूर्वकं श्रीगुरुमुख्यं सकलं शिववृन्दमाप्लाव्यविधिना स्नापयित्वा शुचिना वाससा चोपसंस्कृत्य सामान्यवसनमापाद्य आर्द्रवासो विहाप्यान्यत्रानीय वस्त्राणि च परिधापयेत् ।

श्वेतवर्णान्येव शिरोंशुकोत्तरीयान्तरीयाणि श्रीगुरवे समर्प्य शोणक्षौमोपसंव्यानप्रच्छदपटसौवर्णशिरोवसनलक्षणानि वस्त्राणि श्रीरासेश्वराय प्रदाय तद्रश्मिभ्योऽपि वस्त्रवैचित्र्यमर्पयेत् आचमनं दत्वाऽलङ्कुर्यात् ।

अथ हंसी तस्यामेव प्रतीसीरायां वाऽन्यत्रालङ्करणालये सर्वाः शक्तीर्नीत्वा पृथगासनेषूपवेश्य प्राक् स्थापितं महासुरभितैलं कनकचषकेषु सखीभिरानयित्वा श्रीगुर्व्याः कुन्तलेषु चेतस्ततो विकीर्णेषु शनैः शनैस्तेनाभ्यञ्जयित्वा, अलकांश्च कनककङ्कतिकया सम्यक् प्रसार्य स्वर्णसूत्रैः समौक्तिकादिभिः कबरी विरचय्य प्रणमेत् ।

एवमेव श्रीमहाराज्ञ्याः पराशक्तेस्तैलाभ्यङ्गपूर्वकं प्रसाधन्या धम्मिल्लसाधनं विधाय। तत्-कलानां च यथाविधि पृथक् पृथग् वेणीविरचनं विदधीत। अथ सा स्मेरास्या स्वहस्तौ प्रक्षाल्य सिन्दूरपूरेण सर्वासां सीमन्तानापूर्य प्राग्-गृहीताष्टगन्धमानयित्वा श्रीगुर्व्यादीनां शक्तीनां ललाटमण्डलेषु द्वितीयातारकेश्वरतुल्यं चित्रकं विरचय्य तन्मध्येऽपि मृगमदबिन्दून्निष्पाद्य हस्तस्तनहृदयोदरेषु यक्षकर्दमादिनाऽनुलिप्य प्रणमेत्।

हंसेनापि श्रीगुरुप्रभृतीनां शिवानां भालतलेषु तदष्टगन्धेनार्द्धचन्द्राकाराणि समृगमद-बिन्दूनि तिलकानि निर्माय कण्ठकराद्युपदिग्धव्यम्।

अयि अङ्गने! अर्चायामर्चकस्तु स्वशक्तिं प्रति स्वसखार्यं पुन. पुनः प्रहिण्वँस्तन्मुखात्तत्रानुष्ठितमाकर्ण्य पश्चात्तत्तत्कर्मानुतिष्ठेत्।

शक्तिभ्योऽनर्पितः पदार्थः प्रागेव शिवेभ्यो नो देय., शक्तिप्राधान्यात्।

अथ हंसी रत्नाभरणभाजनमाहार्य, श्रीगुर्वीप्रभृतीः शक्तीः परिष्कारैः शनैर्भूषयेत्। तत्र किरीटं तु श्रीपराशक्तेर्मस्तक एव दातव्यं नान्यस्याः शिरसि। श्रीपराशक्तेरपि मुकुटस्य त्वनावश्यकत्वम्। क्वचित्कदाचित्तद्दत्ते कदाचित्तु न। तत्रापि केवलं शक्तेस्तु सर्वदैव शिवायाः शिरसि मुकुटं धारयितव्यम्।

मिथुनभक्तास्तु शिवस्यैव शिरसि श्रीशक्तिदत्तं किरीटमारोपयन्ति। नो शक्तेः।

काञ्चनरचितं नानारत्नव्रातखचितं किरीटं चूडामणिं च मूर्द्धकमले निधाय, तत्शात-कुम्भोद्भवां मुक्तादिरत्नपङ्क्तिप्रसन्नां वालपाश्यां सीमन्तस्योभयतः सन्निवेश्य ललाटतले तु मौक्तिकगुच्छोल्लसिता महाहीरान्तरा तप्तहाटककॢप्ता पत्रपाश्यापि शनैर्निवेशनीया।

किञ्च कनककल्पितैश्चन्द्रादित्यमण्डलतुल्यैर्महामणिमञ्जुलैस्तालपत्रैः कर्णानलङ्कृत्य ललन्मौक्तिकयुगलोल्लसिताभिररुणरत्नरुचिराभिर्नासाभूषाभिर्नासिकाः परिष्कृत्य। सुवर्ण-शलाकया दिव्याञ्जनैकीकृतकज्जलं गृहीत्वाऽमृतारुणानि मदोद्घूर्णानि कमलदलायतानि शफरी चपलानि शक्तीनां नयनानि शनैः कज्जलयेत्। अथ श्यामशोणशुभ्राभानां मरकतपद्मरागहीर-काणां निर्मिताभिस्तिसृभिर्गुलिकाभिर्विततं च मुक्तालताशतकान्तरगताभिर्ग्रैवेयकं कण्ठे व्यान-ह्य महामुक्ताफलप्रवालवज्रमरकतादीनां महार्घ्यमणीनामेकावल्यादयो हारविशेषा शक्तीनां हृदयावलम्बिनः कण्ठे निधेयाः। तथैव तासां प्रकोष्ठेषु तप्तजाम्बूनदोत्पादितानि नानारत्न-निकररोचिष्णूनि कटकान्याधाय शुद्धशातकुम्भोद्भूषिता मणिकणाङ्कितकनककङ्कणप्रोता विद्रुम विरचिता वलयावलीश्चारोप्य, ललदनन्तमणिगुच्छानि दिव्यहेमनिर्मितान्यङ्गदान्याबध्य बाहु-मूलान्तिकप्रगण्डेषु, मण्डितमहामणिमस्तकाः कनकोर्मिताश्चाङ्गुलिमुद्रा विन्यस्य नूतनजतुद्रवेण करजान् रञ्जयित्वा नमस्कुर्यात्।

अथार्चकी शक्तीनां ककुद्मतीषु कनककिङ्किणीजालिकोल्लासिनीः सप्तकाञ्चीरारोप्य, रत्न-निकुरम्बविरोचमान नीवीबन्धनाय जाम्बूनदनिष्पादितं दोरकनिकरं च समर्प्य, हाटकोत्थि-ताननर्घ्यरत्नघटितान् सर्वासामङ्घ्रिसरोरुहेषु हंसकान् विन्यस्य तद्वन्मणिमण्डलीमण्डिता मधुरध्वानमञ्जुला हेमघुंघुरूराधाय खचितपद्मरागादिमहामणिमयूखभ्राजिष्णून्नूपुरानानह्य।

सुवर्णसम्भूताः कणत्काञ्चनकिङ्किणीनिकरा विचित्ररत्नरुचिराः श्रीपादुकाः पदपद्मेषु समर्प्य विनिर्मललाक्षारसेन पत्रखानारज्य पीयूषं पाययित्वा ताम्बूलवीटकानि च चर्वयित्वा

थूत्कारादिना कफाद्युत्प्रक्षेपार्थं सख्या किञ्चित्पतद्ग्राहलक्षणं पात्रं ग्राहयित्वा रत्नादर्शान् प्रदर्श्य प्रणामं कुर्वीत। इत्यलङ्करणोपचारः!

एवमेव सहंसश्रीगुर्वाद्यान् शिवान् स्वर्णोपवीतादिभिः समुचितैरनेकैरलङ्कारैरलङ्कृत्या-मृतादि दत्वा प्रणमेत्।

प्रिये! इत्थं नानामण्डनमण्डलीभिः श्रीशक्तिस्वरूपिणीः सर्वा नारीश्च श्रीशिवात्मकान् सर्वान्नरान् मुदितमनस्कौ श्रीनारीनरौ मण्डयित्वा, अर्चकौ तु जय शक्ते! इत्युच्चैरुच्चरन्तीषु सहचरीषु प्रणम्रासु सर्वासु च पूर्ववदंसावलम्बनपूर्वकं श्रीगुर्वीप्रभृतीः समग्राः शक्तीः स्वस्व-शिवानां सन्निकर्षं नीत्वा तत्तद्वामपार्श्वेष्वभिवादनपूर्वकमुपवेश्य नमस्कुर्यात्।

अथार्चकः स्ववनितालङ्कृतोत्तराङ्गः परिष्कृतां श्रीशक्तिशिवसत्तां श्रीमदर्द्धनारीश्वरात्मिकां सम्मन्यमानो वादितेष्वातोद्येषु गायत्सु च गायकेषु जय शिवेति समुच्चरत्सु सालम्बनं मन्द-मन्दमुत्थाप्य श्रीभोजनभवनं लम्भयित्वा वायुभागे सशक्तिकं स्वगुरुं, सम्मुखे श्रीपराम्बालङ्कृतं परमेश्वरं, परितो विविधाभिधानिकं शिवशक्तिस्वरूपं तत्परिजनसन्दोहं मध्यमोत्तमाधमलक्षणे ष्वासनेष्वद्रुतमुपवेश्य, साष्टाङ्गं प्रणम्य परैरुपहारैरर्हयेत्।

अथादौ संस्थापितं पुष्पवृन्दं पात्रान्तरेणाहृत्य पूर्वं साङ्गनं स्वगुरुं मल्लिकामालत्यादि नाना-वल्लीसमुत्पन्नसुमविशेषैर्निष्पादितेन मालादिकेनाभ्युत्तिष्ठन्तौ श्रीहंसौ भृशं भूषयित्वा चम्पक-बकुलादिविचित्रप्रसूनस्तबकग्रथितगुणनिकायेन कौसुमकृत्येन श्रीरासेश्वरयो कण्ठाद्यमलङ्कृत्य कनककमलकुलक्लृप्तां महामालिकां च कण्ठाद्यङ्घ्रिपर्यन्तं व्यालम्बिनीं ललद्रत्नप्रान्तां चारोप्य परिवारानपि नानापुष्पस्तबकनिर्मितमालाभिर्भूषयेत्। इति पुष्पपूजा।

सुगन्धिघननिष्पादितमबीरं सर्वोपरि बहुलं प्रक्षिप्य गुलालं च विकीर्य अन्यान्यपि सुगन्धिद्रव्याणि लोकप्रसिद्धानि सर्वेभ्यो मिथुनेभ्यो दत्वा केतकीपत्राणि च यत्र तत्र सन्निवेश्य श्रीरासेश्वरावमृतेन त्रिः प्रतर्प्य ताम्बूलं च ताभ्यां विलभ्य, तदनुज्ञया तदन्तर्गतं तद्रश्मिमिथुन-वृन्दममृतबिन्दुभिः साक्षतपुष्पैश्च सन्तर्प्य च सम्पूज्य नमस्कुर्यात् इत्यावरणपूजा।

अथ दशविधधूपं पुरासम्पादितं तत्रानीय क्वचित् कनकपात्रान्तरेऽङ्गारानाहृत्य तत्र धूप माधाय, गन्धादिभिस्तदभ्यर्च्य, दक्षहस्ते धृत्वा घण्टां वादयन्तौ तदुत्थधूमेनाभितः सकलं हंसमण्डलं सुरभीकुर्वीत इति धूपोपचारः।

अथ गालितं सुरभीसर्पिरानीय निर्मलं च तैलं, कार्पासक्षौमसूत्रजनिता वर्तीश्च, काञ्चना-दिरचितानि रत्नघटितानि पात्राणि च तेषु घृतं च तैलमप्यापूर्य तत्र क्रमात् श्वेतरक्तवर्ती-र्विन्यस्य अथ ताः प्रज्वाल्य वामदक्षिणपार्श्वयोस्तैलघृतदीपकानां पङ्क्तिद्वयं कृत्वा महतीं च वर्त्तीं पात्रान्तरे कृत्वा प्रज्वाल्य गन्धाक्षताबीरगुलालपुष्पैश्च तां सम्पूज्य हस्ताभ्यां तत्पात्रं गृहीत्वोत्थाय, नेत्रतः समग्रं श्रीरसिकमिथुनवृन्दमुल्लासयेत्। इति दीपदानम्।

अहो अङ्गने! ज्ञायते त्वया? पुष्पादिसमग्रमग्रिममर्चनकृत्यं तु स्वस्त्रिया श्रीरासेश्वरे विधेयं, स्वयं तु श्रीरासेश्वर्यामनुतिष्ठेत्। मन्त्रस्तु श्रीगुरुदत्त एव सर्वत्र ज्ञेयः।

एवं प्रदीपकैः समस्तरसिकाना मूर्तीरालोक्य कृतकृत्यमात्मानं मन्वानौ प्रागासादित नैवेद्यमानीय तप्तहाटकोत्थितान्यनर्घ्यरत्नखचितानि च भोजनस्थालान्याहृत्य विचित्र-रत्नचूर्णविरचितेषु मण्डलेषु श्रीरसिकानामग्रतः सन्निवेश्य तेषु स्थालादिषु विचित्रपात्रेषु शनैर्नानाभक्ष्याणि परिवेष्यातताम्।

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे भक्तियोगे नैवेद्यान्त-पूजावर्णनं नाम एकचत्वारिंशोल्लासः ॥ ४१ ॥**

हंसी। भो, प्राणजीवन! परिवेषणक्रमः कथमित्युदीर्यताम्।

श्रीहंसः। शृणु शक्ते! तमप्यभिदध्महे। पुराऽन्नपूर्णा स्मरन्तौ तौ श्रीरसिकौ श्रीगुर्वीगुर्वी-भाजने नैर्ऋतिभागे स्तोकं स्तोकं लवणं प्रतिपाद्य तदनन्तरं श्रीरासेश्वरयोः पात्रे तत् परिवा-राणा स्थालेषु चेति एकैकस्य मिथुनस्यैकैकं स्थालं शाकादिपात्राणां तु पार्थक्यमिति। एक-स्मिन्नपि स्थाले स्त्रीपरिविष्टं पुरुषपरिविष्टं चेति विभागद्वयं पृथक्त्वेन विज्ञातव्यम्।

अथ **राजिका–रजनी–कुस्तुम्बरी-सैन्धव–विश्वा-जीरक-बाह्लीक-वल्ल-जा**दिभिर्वासितानि **दधि–तक्र–चुक्रिका**दिभिश्चाम्लीकृतानि च **कर्कटीकोषातकी कूष्माण्ड-सूरण-वृन्ताक-कारवेल्ली-फल–कर्कोटक-पटोल–मेघनाद–मधुर-तुम्बीफला**दिभिर्नानाशाकजातिभिर्निष्पादितानि **शाकानि** परिवेष्य। ततः सामुद्र हरिद्रा–मरीच–कटुतैलराजिकादिभिः साधितानि **निम्बाम्र-कर्कटार्द्रककरमर्दकरीरा-द्यै**र्विविधवस्तुभिर्विरचितानि **सन्धाना**न्यपि किञ्चित् किञ्चित् पात्रेषु सन्न्यस्य। अन्यत् परिवेषयेतां मधुशर्करादिभिर्मिश्रीकृतं **पायसं!** आर्द्रीकृतगोधूमसूक्ष्मतरपिष्टनिष्पादिताः सघृतपाचिताः **पूरिकाः**। तद्वन्माषद्विदलानां पिष्टेन विरचितास्तैलपक्वा **वटकाः**। तन्निर्मिता एव **पर्पटाः**। तथैव गोधूमश्लक्ष्णपिष्टतन्तु–जनितं भोज्यं **सेव** इति ख्यातम्। वह्निसाधित-दुग्धखण्डोद्भवाश्चैलादिलसिताः **पिण्डाः**।

घृतपक्वगोधूमपिष्टचूर्णनिर्मिताः शर्करादिसंमिश्रा **लड्डुकाः। पोलिका** अपि लोकख्याता बहुविधाः। पक्वान्नानि च लोकप्रसिद्धानि, ततः सूक्ष्मतरतन्दुलोत्पादितो **भक्तः**। निस्त्व-गाढकीसृष्टाः **सूपाः**। उष्णीकृतं शर्करादिमिश्रं माहिषं **क्षीरं**। तद्वत् प्राक् प्रहरचतुष्टयान्तरे निष्पादितं **दधि। हैयङ्गवीन**मपि। पक्वानि च **कदलीफलानि। आम्राणि, राजीफलानि। जम्बूपनसखर्बूजा**दीनि च तत्तदृतुजातानि नानाफलानि **नालिके-राणि** च।

**चर्व्यं चोष्यं लेह्यं पेय**मित्यादिलक्षणं नानाविधं भक्ष्यं स्थालादिषु श्रीमिथुनानां क्रमेण शनैः शनैः परिवेष्य, सद्यस्तापितं **माहिषं सर्पि**रपि यथेष्टं सौवर्णचषकेषु विश्राण्य विस्मृतं तु स्मारं स्मारं श्रीमिथुनभाजनेषु विश्राणयन्तौ श्रीरसिकौ मूलविद्यां जपेताम्।

**इति परिवेषणविधिः।**

अथात्र समग्र-श्रीमिथुनमण्डलीनामनुज्ञया सह ललनया श्रीललिताचकोऽनर्घ्यरत्नखचितानि काञ्चनचषकाणि संशोधितसुधापूर्णानि स्वकरसरोरुहेष्वादाय। श्री हस्यपद्धतिप्रदर्शितविधिनाऽमृतोपस्तरणमसीत्यादि महामन्त्रस्मरणपुरःसरं श्रीगुर्व्याद्याः शक्ती. श्रीगुर्वादिकॉश्चिछवांश्च शनैः शनैः पाययित्वा जय शिवेत्युच्चैरुच्चरन् सुवाद्यानि च वादयन् सुगीतकानि गायत्सु श्रीगायकेषु सत्सु श्रीमिथुनमण्डली मादयेत् ॥

अथ जमत्सु श्रीमिथुनेषु काचन कश्चिद्वा पीयूषं पश्यति चेत् पुनः पुनरन्तगाले पाययितव्यम्। तथैव लेह्यं पेयं चर्व्यं चोष्यं वाऽपेक्षितं चेद्भवत्यो वा भवन्तो लान्त्विति पुनः पुनः प्रष्टव्यम्। इत्थं श्रीरसिकद्वन्द्वानि सद्भक्त्या यथाविधि भोजयित्वा कृतकरपुटौ तदग्रतस्तिष्ठन्तौ दम्पती रङ्कुकिङ्कराभ्यां निवेदितैः क्षुल्लकैरस्मयैर्भोज्यवस्तुभिर्भवन्त्यो भवन्तश्च सुहितीभवन्त्विति वारं वारं प्रार्थनां कुर्वन्तौ सद्भावेन सर्वं हंससन्दोहं सुप्रसाद्य।

श्रीरासेश्वरोच्छिष्टं शेषिकद्वन्द्वाय दत्वा तदुच्छिष्टं च श्रीगुर्व्यादिशक्तिशिवमण्डल्युच्छिष्टं चान्यत्रात्मार्थं प्रयत्नेन संरक्ष्य।

अमृतापिधानमसीति मन्त्रं स्मरन्तौ पुनरप्यमृतं प्रेम्णा पाययेतां। बृहत्कनकपात्रे यक्षकर्दमेन तत्करकमलानि तौ प्रक्षाल्य वदनाम्बुजानि च जलगण्डूषैः संशोध्य, अङ्गप्रोञ्छनवस्त्रेण वक्त्रादि परिमृज्य प्रणमेताम्।

## इति भोजनविधिः।

अथ सुरप्रसूनैलाचूर्णीकृत-क्रमुक-शकलीकृत-जातीफलशुभ्रखदिरस्वच्छचूर्णचन्द्रादिभिर्विविधैर्वस्तुभिः सह पुटीकृतानि नागवल्लीदलानि मन्दं चर्वयित्वा विमलमुकुरेषु महामणिमण्डलमण्डितेषु वक्त्रकुशेशयानि प्रदर्श्य नीराजयेताम्।

यथा कनकस्थालेऽष्टगन्धेन सकर्णिकमष्टदलं कमलमालिख्य तेष्वष्टसु पत्रेषु सर्पिषापूरितानि सद्वर्त्तीसंयुतानि पात्राणि विन्यस्य। कर्णिकायां तु कर्पूरपूर्णं रमणीयं पात्रमाधाय। सदग्निज्योतिषा समग्रा वर्तीर्घनसारं च सन्धुक्षयित्वा तत्पूजनपूर्वकं करकमलाभ्यां पात्रमुद्धृत्योर्ध्वीभूय तद्दीपपात्रं श्रीमिथुनाना पदपद्मादि मस्तकान्तं मुहुर्मुहुर्भ्रामयन्तौ सगीतवादित्रं श्रीशिवमिथुनमण्डली निर्मञ्छेताम्। एवं नीराज्य तत्पुरस्ताद्दीपपात्रं मुक्त्वा प्रणमेताम्।

## इति नीराजना ॥

ततः सललनः ससखः सहंसः पुष्पपुञ्जेन स्वाञ्जलिमापूर्य मन्त्रस्तोत्रगीताद्युच्चार्य श्रीरासेश्वरयोः श्रीपादुकोपरि तां निक्षिप्य नमस्कुर्यात्।

## इति मन्त्रपुष्पाञ्जलिः।

अथ श्रीफलाक्षतपुष्पहस्तः श्रीरसिकमण्डली सस्त्रीकः ससखः परिक्रम्य तत्फलं श्रीपादुकापुरतो निधायाक्षतसौमनस्यानि च तदुपरि प्रक्षिप्य स्तम्बास्यः साष्टाङ्गं शतशः प्रणामान् कुर्वीत, एवं प्रदक्षिणां दत्वा प्रमुदितमनस्कः श्रीप्रसादस्वीकारार्थं सप्रणामं 'भोऽर्द्धनारीश्वर सकलत्रं समित्रं मां करुणया नियुङ्ध्वमि' त्यभ्यर्थ्य।

'भोः शिष्य सस्त्रीकः ससखस्त्वमस्मन्महानैवेद्योच्छिष्टावशिष्टलक्षणं प्रसादं सत्वरमभ्यवहरेति' प्रणत्या तद्दत्तानुज्ञां मस्तके धृत्वा भोजनं कुर्वीत।

यथा । स्ववनिताया वामतो वामावलिमुपवेश्य, स्वापसव्यतः सखीश्चोपवेश्य, श्रीमहाप्रसादं सललन, स्वयं सर्वमण्डल्याः पात्रेषु परिवेष्य, स्वस्वाम्युपदिष्टमार्गेणादौ सुधामखिलमण्डली पाययित्वा स्वस्त्रियमपि निपाय्य स्वयं च मूलविद्या स्मरन्नास्वाद्य, श्रीरासेश्वराज्ञया परस्परादेशेन च सुमुखः सुखं भुञ्जीत ।

भोजनान्तरालेऽपि यथारुचि पीयूषं निपीय करास्यक्षालनादिकं च बहिर्विधाय सत्वरं ताम्बूलं स्वीकृत्य, उच्छिष्टं निरस्य भूमिमुपलिप्य माङ्गल्यचूर्णविरचितेन स्वस्तिकादिना च ता भूपयेत् ।

इति श्रीमहाप्रसादस्वीकारः ।

इत्थं चतुर्विधभोज्येन स्वजनं स्वात्मानं चाप्याययित्वा कृतार्थमात्मानं मन्वीत । अथ प्रतप्तचामीकरविरचिता चिन्तामण्यादिमहामणिव्रातखचितां कनकदण्डद्योतमाना मध्यास्तृतकौसुम्भतूलिकामानद्धस्वर्णसूत्रप्रान्तललन्मुक्तावलिकनककमलमुकुलां प्रबलवाहकैरूढां श्रीमहाशिविका च काञ्चनचक्रविरोचमानं सहस्रधवलध्वजविभूषितशेखरं तरलतरतुरङ्गमयुक्तं च श्रीरथं तथैव श्रीरश्मिसंहतेरुपवेशनाय शुभ्रश्यामनीलपीतशोणवर्णविराजमानान्विमलमणिसमुल्लसद्वल्गनान् मौक्तिकलतोल्लसदुभयप्रान्तसुकोमलपल्याणललितांश्चपलतरान् तुरगाँश्च विमलोडुपवर्ण विगलद्गण्डमदमाद्यन्मधुलिडाकुल चित्ररत्नव्रततिविराजिविचित्रकाञ्चनध्वजविभ्राजमान ∞ समुपलिप्तसिन्दूरपूरकुम्भशोभमानं क्वणत्काञ्चनकिङ्किणीजालमञ्जुलमहामञ्जीरगेविष्णुचरणचतुष्टय मधुरघोषमञ्जुहाटकघण्टिकोल्लासिगलमाच्छादितपट्टकूलपृष्ठं श्रीमङ्गलमातङ्गं तथाचान्तश्चरानुचरपुरश्चरपार्श्वचरलक्षणान् पादातान् प्रतिहाराश्चेतस्ततः समानीय । चतुरङ्गं श्रीसैन्यं सम्माननं कुर्वन्नभ्यर्च्य तत आयुधशालायामास्थापितान्यायुधान्यप्याहृत्य । पुरा श्रीपराशक्तेरायुधानि सम्पूज्य चतुर्हस्तां ता ध्यात्वा तस्याः करपङ्कजेषु तानि धारयेत् ।

धनुः, बाणाः, पश्च, पाशम्, अङ्कुशं, मुकुटं-न धृतं चेत् पूर्वं तद्बिभृयात् तथैव श्रीराजराजेश्वरस्य चतुर्षु पञ्चशाखपङ्कजेषु पानपात्रं चिन्मुद्रां त्रिशूलं रहस्यशास्त्रपुस्तकं चेत्यर्चनपूर्वकं निदधीत । परिवारेषु हेतिधृतेरनावश्यकत्वम् । एवमायुधानि धारयित्वा सप्रणाममाज्ञां गृहीत्वा दिव्यदुन्दुभ्यानकगोमुखाद्युद्घोषपुरःसरं जय शिवेत्युच्चैः शब्दायमानेषु परिजनेषु श्रीगुर्वी यथोक्तरथे स्वस्त्रिया उपवेश्य श्रीनगरमहासाम्राज्ञी श्रीराजराजेश्वरी पराशक्ति तु शिबिकायामुपवेश्य तत्कलात्मिका इतराः शक्तीश्च विचित्रतुरगेषूवेशयेत् । स्वयं तु श्रीनाथं स्वगुरुं विशोभने स्यन्दन एव सन्निवेश्य श्रीनगरमहासम्राजं परमशिवं च मङ्गलमातङ्गे तुहिनाचलसन्निभे सुवर्णनिर्मितनिश्रेण्याऽधिरोहयित्वा मध्यदेशे समास्तीर्णतूलिकायामुपवेश्य तत्पुरतोऽङ्कुशकरं महामात्रं तत्पृष्ठे च मध्याह्नमार्तण्डमण्डलसन्निभं ललन्मुक्तावलिप्रान्तं दिव्यजाम्बूनददण्डं छत्रं ग्राहयित्वा छत्रग्राहिणमास्थाप्य ।

तत्पार्श्वयोरुपर्येव करिणं सितकररोचमाने च चामरे हस्ताभ्यां लापयित्वा चामरग्राहिणावुपवेशयेत् । अन्तश्चरोऽपि कश्चित् तत्र तत्समीप एव रक्षणीयः !

अपराश्च तद्रश्मिरूपान् पुरुषान् नानाऽश्वेष्वारोह्य नमस्कारं कुर्यात् ।

अथ गुर्वीश्रीराजराजेश्वर्योः पादुकाश्चतस्रः स्वस्त्रिया स्वीकार्याः । स्वयं च श्रीगुरुश्रीराजराजेश्वरयोरुपानच्चतुष्टयं साभिवादनमुपाददीत । नो तत्परिजनेषु तु पद्रक्षकावश्यकता ।

अथ श्रीमहामङ्गलगजस्याग्रतः स्वजनतासहितः स्वयं मृदङ्गादिमहातोद्यवादनपुरःसरं साम श्रुतीर्गाययन् चलेत्। तद्वदेव सकलाग्रगतश्रीशक्तिसैन्यमध्यभ्राजिष्णुश्रीराजराजेश्वरीशिविकायाः पुरतः स्वस्त्री च स्वालिमण्डल्या प्रतिष्ठेत। एवं सहर्षं श्रीमहाराजसभायाः सन्निकर्षं ससैन्यं श्रीशक्तिशिववृन्दं मन्दं मन्दं प्रापय्य ससम्भ्रमं स्वस्त्रिया श्रीगुर्वी रथादुत्तार्य पादुके प्रदाप्य श्रीराजराजेश्वरी च शिविकातश्चावरोह्य श्रीपादुके च प्रतिपाद्य तत्कलाश्च तुरङ्गमत प्रोत्तार्य सर्वाः शक्तयः स्कन्धावलम्बनपूर्वकं शक्तिसभायां सम्पादितेषु स्वस्वासनेषु समुपवेशनीयाः। तथैव स्वयमपि श्रीगुरुं स्यन्दनादुत्तार्य श्रीराजराजेश्वरमपि मङ्गलगजात् रत्नाधिरोहिण्याऽवरोह्य तद्रश्मिवर्गं च तुरङ्गतश्चोत्तार्य श्रीपादुकादानपुरःसरं शिवसभायां निष्पादितेषु नानापीठेषु शनैरुपवेशयेत्। काञ्चनछत्रं मस्तकोपरि धारयित्वा श्रीराजराजेश्वरयोः मक्षिकादीनां निवारणाय तत्पार्श्वयोश्चामरकरावनुचरौ संरक्ष्य प्रस्वेदशोषणाय च तालवृन्तधारिणौ दर्पणकरं ताम्बूलहस्तं पतद्ग्रहग्राहिणमप्यूर्ध्वीकृत्य अन्येऽपि निदेशकारिणः प्रतीहारप्रभृतयः केचन किङ्कराः शिवस्य समीपे शक्तिसमीपे काञ्चन किङ्कर्यो रक्षणीयाः स्वसखायश्च शिवस्याग्रत उत्तिष्ठेयुः। स्वयमपि नातिदूरे कृतकरपुटस्तिष्ठेत्। तद्वत् स्वालिभिः सार्द्धं स्वललनाऽपि श्रीमहाराज्ञ्याः समीपे तिष्ठेत्। अन्यत् करितुरगरथपदातिलक्षणं चतुरङ्गं सैन्यं तु सन्मानपूर्वकं स्वस्वस्थानं प्रेषयेत्। इत्थं श्रीमहाराजसभां शोभयित्वा तत्र श्रीनगरगता दिव्यनर्तकीराहूय गन्धर्वांश्चाकार्य छन्दोऽलङ्कारसोल्लसितानि स्वरतालरागोचितानि श्रुत्यर्थगर्भितानि ध्रुवपदानि गाययन्तौ तौ हंसौ तदग्रे वारवधूटीर्नाटयेत्।

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे भक्तियोगवर्णने नृत्यान्तोपचारवर्णना नाम द्विचत्वारिंशोल्लासः॥ ४२॥**

अथाह हंसी। भो भो रमण ! श्रीराजसभायां श्रीराजराजेश्वर्याः पुरतः श्रीमहाराजराजेश्वरस्याग्रे च छन्दोऽलङ्कारसस्वरतालरागाद्युदञ्चितध्रुवपदानां यद्गायनं स्वामिभिरुदीरितं तल्लक्षणाकर्णनाय चित्तमुत्सहते।

अत आलस्यमपास्य सम्यगुच्यताम्।

श्रीहंसः। धन्या त्वं धन्या त्वं प्रबुद्धे ! श्रियतां तदप्यभिदध्महे यथाज्ञानं किञ्चित् शास्त्रबाहुल्यभयात्।

तत्रादौ **छन्दोलक्षणानि** वच्मः। अक्षरसङ्ख्यावच्छेदत्वं छन्दस्त्वं। तत्त्रिविधम्।

प्रथमं तु **गणछन्दो मात्राछन्द**स्ततः परम्।

तृतीयं त्वक्ष**रछन्द**स्त्विति छन्दस्त्रिधा मतम्॥

गणाश्चाष्टौ मयरसतजभन-संज्ञकाः। एषां लक्षणानि तु पैङ्गलसूत्रैः 'श्रीश्रीश्रीम्' इति त्रिगुरु**र्मगणः**।

वरासाय् इति आदिलघु**र्यगणः**॥ २॥

कागुहार् इति मध्यलघू **रगणः**॥ ३॥

वसुधास्, इत्यन्तगुरुः **सगणः**॥ ४॥

सातेकत् अन्त्यलघु**स्तगणः**॥ ५॥

कदासज्, इति मध्यगुरुर्जगणः ॥ ६ ॥

कि वदभ् । इति आदिगुरुर्भगणः ॥ ७ ॥

नहसन्, इति त्रिलघुर्नगणः ॥ ८ ॥

**इति गणलक्षणम् ।**

एषा **दैवतफललक्षणं तु ॥**

मो भूमिः श्रियमातनोति यजलं वृद्धि रवह्निर्मृति सो वायुः परदेशदूरगमनं तव्योम शून्यं फलम् ।

जः सूर्यो रुजमादधाति विपुलं भेन्दुर्यशो निर्मलं नो नाकः सुखमच्युतं फलमिदं प्राहुर्गणानां पृथगिति ॥ १ ॥

हझघनधरखभ इत्यष्टावक्षराणि **दग्धानि ।**

हानियुद्धायुःक्षयस्त्रीनाशाश्रीरत्वरोगक्षीणत्वाशुभलक्षणानि भवन्त्येषां फलानि । अत एव कवित्वादौ दुष्टानि ।

किञ्च ।

अकचटतपयश इत्यष्टवर्गाद्यक्षराणां कवित्यादौ दैवतफलानि तु

आद्येन्दुः स्थिरकीर्तिमायुरचलं के भूसुतः शूरतां
चे ज्ञः संवृतिहाऽथ टे सुरगुरुः सौभाग्यमत्यद्भुतम् ।
ते शुक्रः सुयशोथ पे रविसुतो मान्द्यं च येऽर्को मृतिं शे
राहुः खलु शून्यतां वितनुते चेद्गद्यपद्यादिषु ॥ १ ॥

तत्रापि ।

देवतावाचकाः शब्दा ये च भद्रादिवाचकाः ।
ते सर्वे नैव निन्द्याः स्युर्लिपितो गणतोऽपि वेति ॥ २ ॥

अथ मात्रालक्षणम् ।

अइउऋऌ इति पञ्च मात्रासंज्ञकानि अक्षराणि एषा कला ह्रस्वं लघु चेति नामभेदः ।

गुरुशब्देन आईऊएऐओऔअंअः संयोगादिः छादिश्चेत्यक्षराणि । क्वचित् पादान्ते लघुरपि गुरुः । दीर्घमपि गुरुनाम ।

**इति मात्रादिलक्षणम् ।**

एवमादिदोषाऽदोषदर्शननैपुण्येन कवित्वं निबध्नीत ।

वृत्तमपि छन्दो नाम ।

तत्रादावक्षरच्छन्दांसि दृश्यन्ते । एकाक्षरात् प्रभृति षड्विंशतिवर्णपर्यन्तमेकैकचरणरचनया छन्दसां नाना नामानि भवन्ति ।

यथा । उक्ता १ अत्युक्ता २ मध्या ३ प्रतिष्ठा ४ सुप्रतिष्ठा ५ गायत्री ६ उष्णिक् ७ अनुष्टुप् ८ बृहती ९ पङ्क्तिः १० त्रिष्टुप् ११ जगती १२ अतिजगती १३ शक्वरी १४ अतिशक्वरी १५ अष्टिः १६ अत्यष्टिः १७ धृतिः १८ अतिधृतिः १९ कृतिः २० प्रकृतिः २१ आकृतिः २२ विकृतिः २३ संस्कृतिः २४ अभिकृतिः २५ उत्कृतिः इति ।

एष्वप्युक्तादिषु लघुगुरुभेदतो नानाविधानि च्छन्दांसि सन्ति ।
यथा ।
एकेनैव गुरुणा एकश्चरणः । एवं चतुश्चरणं **श्रीछन्दः** । श्री श्रीः ।
श्रीः श्रीरिति ॥ १ ॥
**चतुश्चरणमेवाक्षरच्छन्दः । इत्येकाक्षरभेदः** ॥ १ ॥

गुरुद्वयेनापि **श्रीनामकच्छन्दः** ।
यथा । वामा, वामा ।
श्यामा, श्यामा, ॥ १ ॥
लघुगुरुभ्यां वर्णाभ्यां **महीछन्दः** ।
यथा । शिवे, शिवे ।
भजे, भजे, ॥ २ ॥
लघुद्वयेन **मधुच्छन्दः** ।
शिव, शिव ।
शिव, शिव, ॥ ३ ॥
गुरुलघुभ्यां **सारच्छन्दः** ।
नाथ, नाथ ।
नौमि. नौमि ॥ ४ ॥
**इतिद्वयक्षरभेदाः** ॥ २ ॥

गुरुत्रयेण **तालीछन्दो** नारी वा ।
श्रीशक्ते, श्रीशक्ते ।
आरक्ते ह्यव्यक्ते ॥ १ ॥
रगणेन **मृगीछन्दः** प्रिया वा ।
हे शिवे, हे शिवे ।
श्रीपरे, श्रीपरे ॥ २ ॥
यगणेन **शशीछन्दः** ।
शिवोऽहं शिवोऽहम् ।
न कोऽहं न कोऽहम् ॥ ३ ॥
सगणेन **रमणछन्दः** ।
ललिते, ललिते ।
त्रिपुरे, त्रिपुरे ॥ ४ ॥
तगणेन **पञ्चालच्छन्दः** ।
रासेशि, रासेशि ।
राजस्व, राजस्व ॥ ५ ॥
नगणेन **कमलच्छन्दः** ।

रमणि, रमणि ।
रमय, रमय ॥ ६ ॥

जगणेन मृगेन्द्रच्छन्दः ।

रमस्व, रमस्व ।
रमेश सुरेश ॥ ७ ॥

भगणेन मन्दिरच्छन्दः ।

शङ्करि, शङ्करि ।
सुन्दरि, सुन्दरि ॥ ८ ॥

इति त्र्यक्षरभेदाः ॥

अथ चतुरक्षरभेदाः ।

तीर्णच्छन्दः ।

श्रीरासेश, हे कामेश ।
अत्रायाहि, भक्तं पाहि ॥ ४ ॥

इति चतुरक्षरभेदः ।

सुप्रतिष्ठाभेदे पञ्चाक्षरप्रस्तारे सम्मोहाछन्दः ।

श्रीविद्ये शक्ते, तिष्ठ त्वं भक्ते ।
कुर्वन्ती नित्यं, श्रुत्यन्तस्तुत्यम् ॥ ५ ॥

षडक्षरप्रस्तावे गायत्रीभेदे विधुरेखाछन्दः ।

पीयूषेण प्रीता, वेदान्तायैर्गीता ।
सा शक्तिः श्रीविद्या, क्रीडत्वत्राऽनिन्द्या ॥ ६ ॥

उष्णिग्भेदे सप्ताक्षरप्रस्तारे समानिकाछन्दः ।

सुन्दरी करोतु सा । श्रीपुरे स्थिता हि या ।
वासमस्मदानने । सत्पदप्रकाशने ! ॥ ७ ॥

अनुष्टुब्भेदेऽष्टाक्षरे विद्युन्मालाछन्दः ।

सार्कं कान्तेन श्रीशक्ते ! मातर्मां पश्य श्रीतल्पे ।
पीत्वेदं पीयूषं शुद्धं, कुर्वन्ती त्वं क्रीडायुद्धम् ॥ ८ ॥

बृहतीभेदे नवाक्षरे महालक्ष्मीछन्दः ।

श्रीमहाराजराजेश्वरी, मद्धृदम्भोरुहान्तश्चरी ।
आत्मनाथेन सार्द्धं सदा, खेलतु श्रीरसेनोन्मदा ॥ ९ ॥

दशाक्षरे पङ्क्तिभेदे संयुताछन्दः ।

त्रिपुरेश्वरि त्वमिहोद्धृतं सुरसेवकैरमृतीकृतम् ।
पिब तीर्थमुत्तममम्बिके ! दधती रसं मयि सेवके ॥ १० ॥

एकादशवर्णे त्रिष्टुब्भेदे शीलस्वरूपाछन्दः

हे ललिते त्वमिहैव विहारं किं न करोषि सुधारससारम् ।
श्रीपुरतुल्यमिदं हि शरीरं नास्ति ममेश्वरि ! खेलनधीरम् ॥ ११ ॥

**द्वादशाक्षरे जगतीप्रस्तारे सारङ्गच्छन्दः ।**

दिव्ये मदीये शरीरे शिवाकान्त । सार्कं स्वशक्त्या रमस्व त्वमुत्क्रान्त ।
नो चेन्नय श्रीपुरे सुन्दरे देव ! कान्तासमेतं तनूतस्तु मामेव ॥ १२ ॥

**त्रयोदशवर्णेऽतिजगतीभेदे तारकच्छन्दः ।**

शृणु शङ्करि ! किं न शृणोषि वचो मे ।
स्मरणेन गता दिवसा बहुशस्ते ।
न तथापि कुतो हृदयं तव हृष्टं ।
मलिनं बत किन्तु मनो मम दुष्टम् ॥ १३ ॥

**शक्करीप्रस्तारे चतुर्दशाक्षरे चक्रच्छन्दः ।**

वन्दितमसुरसुरमुनिभिरमलं
सम्प्रति शिवचरणकमलयुगलम् ॥
दिव्यसुखसदनमखिलरसमयं
प्राप्य मम तु गतमिह मरणभयम् ॥ १४ ॥

**पञ्चदशाक्षरेऽतिशक्करीभेदे निशिपालच्छन्दः ।**

अम्ब तव पादसरसीरुहमिदं शुभं
कोटिसितरश्मिरविमण्डलसमप्रभम् ॥
मद्धृदि निधाय दयया सुरनिषेवितं
जैव्यतिमिरं बत निवारय मयि स्थितम् ॥ १५ ॥

**अष्टिप्रस्तारे षोडशाक्षरे चञ्चलाछन्दः ।**

अम्बिके रमस्व रासमण्डले समं शिवेन ।
मौक्तिकादिरत्ननिर्मिते च मिठुसेवकेन ।
चर्व्य-चोष्य-लेह्य-पेय-पूरिते समादरेण ।
शोभिते च वेणुझर्झरीमृदङ्गशब्दितेन ॥ १६ ॥

**सप्तदशाक्षरेऽत्यष्टिभेदे मालाधरच्छन्दः ।**

नवतरणिसन्निभा विमलपूर्णचन्द्रानना ।
कनककलशस्तनी शफरिकास्फुरल्लोचना ।
लसितदशनावलिः सरसपक्वबिम्बाधरी ।
बसतु मम मानसे सुरसमर्चिता सुन्दरी ॥ १७ ॥

**अष्टादशवर्णधृतिप्रस्तारे, क्रीडाचक्रच्छन्दः ।**

महाराजराजेश्वरी श्रीपराम्बा गतारत्नतल्पे ।
प्रसूनस्फुरच्चूलिके सोपबर्हेऽमले केलिकल्पे ।
समालिङ्ग्य सम्पूर्णचन्द्रोज्ज्वलं यौवनोन्मत्तमीशं ।
जयत्यद्भुतं केलियुद्धेन सङ्क्रीडमाना रतीशम् ॥ १८ ॥

**एकोनविंशाक्षरेऽतिधृतिभेदे धवलच्छन्दः ।**

कमलदलनयनममल-शशिवदनममरं
रतिकृतिषु कुशलतरमनुपमकरमजरम् ।
मणिखचितमुकुटमभिनववपुरतिरुचिरं
रमय परमशिवमुपगतमिह सति सुचिरम् ॥ १९ ॥

**विंशाक्षरे कृतिप्रस्तारे गीतच्छन्दः ।**

ललितेश शङ्कर सुन्दरीवर शक्तिकान्त सुधानिधे ।
त्रिपुरापतेऽनुपमाकृते श्रुतिसेव्य हे करुणाम्बुधे ।
शिवनाथ भो नवयौवनोन्मद हे प्रभो मम मन्दिरे ।
सह कान्तयात्र कुमारय त्वमुपेत्य सम्प्रति सुन्दरे ॥ २० ॥

**एकविंशवर्णे प्रकृतिभेदे स्रग्धराछन्दः ।**

उद्यत्सूर्यारुणाभाऽमृतरुचिरवचाः सर्पवन्नीलकेशी ।
सिन्दूरारक्तवस्त्रा हिमकरवलयाकारवक्त्रा महेशी ।
बिम्बोष्ठी पद्मपत्रायतनयनयुगा पक्वबिल्वस्तनी या ।
रम्ये श्रीरङ्गतल्पे सह शिवपतिना क्रीडतां सुन्दरी सा ॥ २१ ॥

**द्वाविंशाक्षरे आकृतिभेदे मदिराछन्दः ।**

भो ललितेश्वर सर्वमनोहर सुन्दरशङ्कर ! शक्तिपते ! ।
देव दयार्णव नोद्धरसि त्वमरे पतितं बत मामनृते ।
नाथ समुद्धर मामनृतादधुना तु लगत्यहितं सकलं ।
प्राप्य भवादृशमत्र गुरुं मम किं बुडनं जगति प्रबलम् ॥ २२ ॥

**त्रयोविंशवर्णे विकृतिभेदे सुन्दरीछन्दः ।**

शिवपञ्चककल्पे सुललिततल्पे मञ्जुलमौक्तिकजालमये ।
धृतकौसुमतूलेऽनिशमनुकूले स्थापितपूजनवस्तुचये ।
मुदिता सह पत्या विलसनमत्या सर्वसखीपरिवारवृता ।
नवयौवनमत्ता परशिवसत्ता श्रीललिता ह्यधुनाऽधिगता ॥ २३ ॥

**चतुर्विंशाक्षरे संस्कृतिप्रस्तारे किरीटीछन्दः ।**

श्रीनगरेश्वरि हे शिवसुन्दरि ! काममनोहरि विश्ववशङ्करि ।
पूर्णसुधाकरमुख्यमृते, कमलाक्षि, कृशोदरि, देव्यरुणाधरि ।
श्रीललिते, कुलकल्पमनल्पमिदं त्वमुराकुरु, तल्पमये, सति ।
त्वं सुरताय शिवेन सहाद्य मदाद्यजनार्पितमम्ब ! दयावति ॥ २४ ॥

**पञ्चविंशतिवर्णे अतिकृतिभेदे सुन्दरच्छन्दः ।**

गुरुनाथपदाम्बुरुहार्चनतस्तव रासपदं विदितं सति ! सर्वं ।
श्रुतिमौलिभिरप्यनिशं प्रणतं हरिरुद्रविरञ्चिनिषेव्यमपूर्वम् ।
अत एव निरस्य जगन्निखिलं मलिनं विपदास्पदमम्ब मयेदं ।
मनसा वचसा क्रिययाप्यमृतेश्वरि ! भज्यत उत्तममेतदखेदम् ॥ २५ ॥

षड्विंशवर्णे उत्कृतिप्रस्तारे सुखदृच्छन्दः।

नयनद्वय ! पश्य पदाम्बुरुहं, शृणु गायनमत्र शुभं श्रवणद्वय !।
सदनं चरणद्वय ! गच्छ शिवस्य, मन ! त्वमपीश्वरमेव विचिन्तय।
रसने ! शिवनाम सदैव हि कीर्त्तय मूर्तिमरे करयुग्म समर्चय।
शिवमेव शिरो नम जीव ! शिवाय च कर्मसमेतमिदं वपुरर्पय ॥ २६ ॥

इत्यादि।

प्रिये, ! श्रूयते, एवमेकाक्षरात् प्रभृति षड्विंशाक्षरावधि प्रतिपादमेकैकाक्षरवृद्धया उक्तादिषु प्रस्तारेषु श्रीप्रभृतीनि नानाविधानि वर्णवृत्तानि भवन्ति।

समावयवत्वात् गणवर्तनीयत्वाच्च समवृत्तानि गणवृत्तानि चेत्यवगन्तव्यम्।

केचित्तु आर्याछन्दसां गणछन्दस्त्वमुशन्ति।

आर्याछन्दस्तु अर्धसमं मात्राछन्द इत्यन्ये।

यथा।

विहर विहारिणि ! रासे करुणादृशमपि कुरुष्व मयि दासे।
जय रसिकेश्वरि शक्ते ! काम शिववर्ष्मसम्पृक्ते ॥ १ ॥

इत्याद्यार्याभेदो नानाविधः पैङ्गलेऽस्ति।

अथ मात्राछन्दांसि

तत्र पैङ्गलसूत्रम्। वैतालीयं द्विः स्वरा अयुक्पादे युगवसवोऽन्तेर्लगः।

अर्थः। यत्र अयुक्-प्रथमे तृतीये च पादे द्विः स्वराः चतुर्दशलकारा भवन्ति। युग्-द्वितीये चतुर्थे च पादे द्विर्वसवः षोडशलकाराः तेषां चतुर्णां पादानामन्ते रगणलकारगकाराः कर्तव्याः। ल शब्देन लघुः ग शब्देन गुरुः। तद्वैतालीयं नाम च्छन्दो भवति।

यथा।

मणिमन्दिरमध्यगेऽमले रतितल्पे सुमतूलिकोज्ज्वले।
ललिते !' स्वशिवाङ्गसङ्गता विलसाद्ये श्रुतिमौलिसंस्तुता।

एतद्भेदे तु औपच्छन्दसिक १ मापातलिकं २ प्राच्यवृत्ति ३ रुदीच्यवृत्तिः ४ प्रवृत्तकं ५ चारुहासिनी ६ अपरान्तिका ७ इत्यादीन्यर्द्धसमानि मात्राछन्दांसि।

किञ्च।

मात्रासमानि तु, वानवासिका १ शिखा २ पिचूलिका तु ३ एकोनत्रिंशन्मात्राः; प्रथमे, द्वितीये एकत्रिंशत्, उभयोरन्ते गुरुश्चैवं द्विपदी ॥

अथ विषमावयवत्वाद् विषमाणि वर्णच्छन्दांस्युच्यन्ते।

पैङ्गलसूत्रम्। उद्गतामेकतः स्जौ स्लौ, न्सौ ज्गौग् भ्नौ ज्लौ ग् स्जौ स्जौग्।

व्याख्या। यत्र प्रथमे पादे सकार-जकार-सकार-लकारैर्दशैव, । द्वितीये नगणसगण जगण-गकारर्दश। तृतीये भकार-नकार-जकार-लकार-गकारैरेकादश। चतुर्थे सकार-जकार

सकार-जकारगकारैस्त्रयोदश, तद् **उद्गता** नाम च्छन्दः। एकत इति प्रथमं पादं द्वितीयेन सह विलम्बेन पठेदित्यर्थः।

ललितेश तल्पमिदमेहि। रतिसमुचितं सुमोज्ज्वलम्। ब्रह्महरिहरशिवप्रणतं। कृपया पराम्ब! सुरताय सत्वरम्-इति। तद्भेदे॥ **सौरभकं ललितं च।**

किञ्च।

उपस्थितप्रचुपितम्।

तद्भेदे, वर्तमानं, शुद्धविराड् ऋषभं चेति।

एवमाद्यानि विषमवृत्तानि।

**उपचित्रकं, द्रुतमध्या, वेगवती, आख्यानिकी, विपरीताख्यानिकी, हरिणप्लुता, अपरवक्त्रं, पुष्पिताग्रा, यवमती, शिखा।**

तद्भेदे **खञ्जाऽपि।**

इत्यादीन्यर्द्धसमानि वर्णवृत्तानि।

श्रूयते हंस्या? अपराण्यपि कतिचन लौकिकानि दोहाप्रभृतीनि मात्राछन्दांसि सन्ति।

आद्ये त्रयोदश प्रोक्ता मात्राश्चैकादशापरे।

तद्वदेवोत्तरार्द्धे यद्**दोहाछन्द**स्तदुच्यते॥ १॥

यथा।

यस्मिन् देशे सुन्दरी, तं सद्देशं जीव।
गच्छ त्वं नित्यं मुदा कान्ताङ्गं कामीव॥ १॥
विपरीततया चैतत् **सोरठे**त्यभिधीयते॥ २॥
एकादशलकारात्मपादषट्कं तु यत्र ह।
**रसिकं** तद्विजानीयाच्छन्दः पिङ्गलभाषितम्॥ ३॥
त्रिंशन्मात्रात्मकाः पादाश्चत्वारो गद्वयान्तिकाः।
प्रोक्तं **चतुष्पदीछन्दः** पिङ्गलेन हि यत्र तत्॥ ४॥
चतुर्दशकलं रान्तं यत्र पादचतुष्टयम्।
**सुलक्षणं** प्रविज्ञेयं छन्दस्तत् पिङ्गलोदितम्॥ ५॥
एकत्रिंशत्कलापूर्णं यत्र पादद्वयं तु सा।
**धत्ता** दशाष्टविश्वेषु विरामैः पिङ्गलोदिता॥ ६॥
**धत्तानन्दो** रुद्रमुनित्रयोदशसु चेद्यतिः।
पूर्यते नृपमात्राभिर्यत्र पादचतुष्टयम्॥ ७॥
तत् **पादाकुलकं** ज्ञेयं गुरुयुग्मान्तिकं वरम्।
**अरिल्लहं** तदा प्रोक्तमन्ते चेल्लघु संस्थितम्॥ ८॥

चतुर्विंशतिमात्राढ्याश्चत्वारश्चरणाः शुभाः ।
रुद्रविश्वविरामाश्च यत्र तत् **काव्यसंज्ञकम्** ॥ ९ ॥
दोहान्तेऽन्तिमपादेन युक्तं काव्यार्धमुत्तमम् ।
तदन्तेप्यपरा दोहा ज्ञेया **कुण्डलिका** तु सा ॥ १० ॥
अष्टाविंशतिमात्राढ्यं यत्र पादद्वयं तु सा ।
**उल्लाला** पञ्चदशसु त्रयोदशसु चेद्यतिः ॥ ११ ॥
काव्यं चतुःपदं पूर्वमुल्लालाद्विपदी ततः ।
एतद्धि **षट्पदं ज्ञेयं** छन्दः पिङ्गलसम्मतम् ॥ १२ ॥
आद्ये नृपकला दीर्घद्वयान्ताश्च चतुर्दश ।
द्वितीयेऽपि च गुर्वन्तास्तद्वदेवोत्तरार्द्धकम् ॥ १३ ॥
यत्र पिङ्गलनागेन प्रोक्तं तच्चो**वुलाभिधम्** ।
विषमेषु च पादेषु कलाः स्युस्तिथिसङ्ख्यकाः ॥ १४ ॥
समयो रुद्रसङ्ख्याताः प्रान्ते दोहाऽपि यत्र वै ।
**राजसैन्याभिधं** तत्तु छन्दः पिङ्गलदर्शितम् ॥ १५ ॥
पञ्चविंशकलाढ्यौ द्वौ पादौ विंशतिवर्णकौ ।
यत्र स्यातां रकारान्तौ **गगनाङ्गा** तु सा स्मृता ॥ १६ ॥
दशाष्टमनुविश्रामा द्वात्रिंशल्लघुभूषिताः ।
वेदपादा हि दीर्घान्ता यत्र **पद्मावती** तु सा ॥ १७ ॥
एकचत्वारिंशदपि कलाः स्युश्चरणद्वये ।
यत्र श्रीपिङ्गलेनोक्ता **खञ्जा** सा रजणान्तिमा ॥ १८ ॥
गुरुद्वयान्तौ द्वौ पादौ सप्तत्रिंशत्कलात्मकौ ।
**झुलणा** सा यत्र यतिर्दिक्त्रयेऽपि च सप्तसु ॥ १९ ॥
आद्ये गजाश्विमात्राश्च द्वात्रिंशल्लघवोऽपरे ।
लघ्वन्ता यत्र सा ज्ञेया **शिखा** पिङ्गलसम्मता ॥ २० ॥
चतुश्चत्वारिंशदपि भगकारद्वयान्तिमाः ।
मात्राश्चार्यार्द्धमप्यन्ते यत्र **माला** तु सा मता ॥ २१ ॥
दोहार्द्धे तु कलाः पञ्च लान्ताः पादद्वये शुभा ।
यत्र सा **चुलियालाख्या** फणिपिङ्गलजल्पिता ॥ २२ ॥
जान्ताश्चतुर्षु पादेषु मात्राः षोडश षोडश ।
यत्र **प्रज्जुलिका** सा तु विज्ञेया वृत्तकोविदैः ॥ २३ ॥
द्वात्रिंशल्लघुभिर्दीर्घप्रान्तैः पादचतुष्टयम् ।
दिक्ष्वष्टसु च विश्रामौ गुरुद्वन्द्वावसानिकौ ॥ २४ ॥

तृतीयो भुवनेष्वन्ते यत्र **दण्डकला** तु सा ।
दशमात्रात्मकैः पादैश्चतुर्भिर्**दीपकः** स्मृतः ॥ २५ ॥
श्रीमत्पिङ्गलनागेन गुरुलघ्ववसानिकैः ।
त्रयोविंशतिमात्राभिर्गद्वयान्ताभिरुक्तमम् ॥ २६ ॥
स वै **दृढपदः** प्रोक्तो यत्र पादचतुष्टयम् ।
गान्तो विश्वेषु विश्रामः पुनर्दशासु स स्मृतः ॥ २७ ॥
एकविंशतिमात्राढ्यैः श्रुतिपादैः **प्लवङ्गमः** ।
भगणाद्यैरकारान्तैः प्रोदितः फणिनोत्तमः ॥ २८ ॥
दन्तमात्रात्मकैः पादैश्चतुर्भिर्गावसानिकैः ।
अपि वा गुरुयुग्मान्तैः प्रोक्ता **लीलावती** शुभा ॥ २९ ॥
अष्टाविंशतिमात्राभिर्यत्र पादचतुष्टयम् ।
गुर्वन्तं पूर्यते सा तु **हरिगीताभि**धानिका ॥ ३० ॥
तिस्रो विरतयस्तत्र नन्दसागरभानुषु ।
द्वात्रिंशल्लघुसम्पूर्णैः पादैर्गुर्ववसानिकैः ॥ ३१ ॥
**त्रिभङ्गी** यत्र यतयो दशाष्टाष्टरसेषु च ।
नयनाग्निकलैः पादैश्चतुर्भि**र्दुर्मिला** मता ॥ ३२ ॥
दिगष्टमनुषु प्रोक्ता विरामाश्च त्रयः शुभाः ।
मतरुस्वगकारैस्तु भूषिता यतिरन्तिमा ॥ ३३ ॥
अग्निनेत्रकलापूर्णैश्चरणैर्गुरुपूर्वकैः ।
रगणान्तैर्भवेच्छन्दः सर्पोक्तं **हीरसंज्ञकम्** ॥ ३४ ॥
चतस्रो यतयः षट्सु षट्सु षट्सु च पञ्चसु ।
चन्द्रवह्न्यक्षरैः पूर्णं पादान्ते चैकमेवगम् ॥ ३५ ॥
प्रोक्तं **तज्जलहरणं** यत्र पादचतुष्टयम् ।
विरामौ द्वौ प्रविज्ञेयौ नृपेषु तिथिषूत्तमौ ॥ ३६ ॥
खाब्धिमात्रात्मकैः पादैर्गान्तैः **कामहराभिधम्** ।
विरामा दिग्गजेन्द्रेषु वसुष्वपि च यत्र ह ॥ ३७ ॥
तत्रापि तु तृतीयान्ते सर्वत्र गुरुरिष्यते ।
शशिनेत्रकलैः पादैर्गुरुलघ्ववसानिकैः ॥ ३८ ॥
**मरहट्टा**भिधं छन्दः पिङ्गलेन प्रकीर्तितम् ।
यत्र दिक्षु च नागेषु रुद्रेषु यतयः शुभाः ॥ ३९ ॥
चतुर्विंशतिमात्रात्मपादैः प्रोक्ता तु **दिण्डिका** ।
आदौ शुद्धं ततो द्विलद्वयं पश्चाल्लघुत्रयम् ॥ ४० ॥
विरामेष्वपि सर्वेषु पिङ्गलेन प्रदर्शितम् ।
तिस्रो यत्रैव यतयो वसुष्वष्टसु चाष्टसु ॥ ४१ ॥

आदौ दोहा तदन्त्येन चरणेन न संयुता ।
दिण्डिका यत्र सा प्रोक्ता पिङ्गलेनामृतध्वनिः ॥ ४२ ॥

प्रिये ! एवमादीन्यनेकविधानि छन्दासि श्रीपिङ्गलप्रोक्तानि कवित्वरचनोपयोग्यानि भवन्ति । किञ्च ।

**वर्णप्रस्तारे ॥**

यत्रादौ नगणद्वन्द्वं ततो रगणसप्तकम् ।
दण्डकः स तु विज्ञेयः सप्तविंशतिवर्णकः ॥ १ ॥
प्रतिपादं तथैकैको रगणो यत्र वर्द्धते ।
तत्र स्युः पिङ्गलप्रोक्तनानादण्डकजातयः ॥ २ ॥
न पर्यन्तोस्ति वृत्तानां प्रस्तारगणनाविधौ ।
पिङ्गलप्रोदितं वृत्तचिह्नं किञ्चिदिहोदितम् ॥ ३ ॥

**इति श्रीहंसमिट्ठुविरचिते श्रीहंसविलासे छन्दोलक्षणकथनं नाम-त्रयश्चत्वारिंशोल्लासः ॥ ४३ ॥**

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| दोहा | सोरठा | रसिक | चतुष्पदी | मुलक्षण | यत्ता | थत्तानन्द | पादाकुलक | अरिल्लह | काव्य | कुण्ड-लिका | उल्लाला |

| १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| षट्पद | चोबुला | राज-सैन्य | गगनाङ्गा | पद्मावती | खञ्जा | झूलणा | शिखा | माला | चुलि-याला | प्रज्जु-लिका | दण्ड-कला |

| २५ | २६ | २७ | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| दीपक | दृढपट | प्लवङ्गम | लीलावती | हरिगीता | त्रिभङ्गी | दुर्मिला | हीर | जल-हरण | काम-हरा | मरहट्टा | दिण्डिका | अमृत-ध्वनि |

## ४३ उल्लास.

श्रीहंस–हंसि ! सादरं पुनरपि श्रूयताम् । अलङ्कारलक्षणान्याचक्ष्महे । अलङ्कारा अप्यनेकशः सन्ति कतिचित्तेषां दर्शयामः ।

शब्दार्थनिष्ठत्वेन चमत्कारविशेषकारित्वमलङ्कारत्वमिति **सामान्यलक्षणम् ।**

नीचादिवस्तूनां याथातथ्येन स्वरूपकथनं **जातिः** ॥ १ ॥

वस्तुनोवस्त्वन्तरेण **तुल्यत्वे उपमा** ॥ २ ॥

साधर्म्येण द्वयोरभेदो **रूपकम्** ॥ २ ॥

वस्तुनो वस्त्वन्तरेण तुल्यप्रत्ययः **प्रतिवस्तूपमा** ॥ ३ ॥

वस्तुनि तुल्यवस्त्वन्तरस्य निश्चयो **भ्रान्तिमान्** ॥ ४ ॥

प्रतिषेधाथोक्तिर्वा प्रतीतिराक्षेपः ॥ ५ ॥

तुल्यत्वेनेदमिदं वेति बुद्धिः संशयः ॥ ६ ॥

कारणत्वेनेदं त्विदमेवेति बुद्धिः संशयनिश्चयः ॥ ७ ॥

दृष्टान्त-दार्ष्टान्तिकयो. क्रियया योग्यार्थकथनं दृष्टान्तः ॥ ८ ॥

केनचिद्धर्मेण तुल्ययोरप्युभयोर्मध्ये एकतरस्याधिक्यं व्यतिरेकः ॥ ९ ॥

साम्यादिदमेतन्न इदमेतदेवेति निषेधपूर्वकमुक्तिरपह्नुतिः ॥ १० ॥

तुल्यैककालक्रियया उपमानेन सह तुल्यं कर्त्तुमुपमेयस्य योजना तुल्ययोगिता ॥११॥

सदर्थस्यासदर्थेन कल्पना उत्प्रेक्षा ॥ १२ ॥

उक्तार्थस्य दार्ढ्यायान्यार्थस्य न्यासोऽर्थान्तरन्यासः ॥ १३ ॥

वाच्यवस्तुनः सदृशं वक्तुमन्यार्थस्योक्तिः समासोक्तिः ॥ १४ ॥

कारणमन्तरा स्वाभाविकगुणोत्कर्षभावनात् कार्यदर्शनं विभावना ॥ १५ ॥

आदिमध्यावसानेषु स्थितेनैकपदेन वाक्यार्थसङ्गतिसम्भवो दीपकम् ॥ १६ ॥

वस्तूत्कर्षं वक्तुमसम्भाव्योक्तिरतिशयः ॥ १७ ॥

कार्योत्पादनकर्तुस्तदुत्पादनसामर्थ्यघटनायुक्तिप्रकाशनं हेतुः ॥ १८ ॥

साक्षादनुक्तस्याप्यर्थस्य कल्प्यमानार्थेन ज्ञानं पर्यायोक्तिः ॥ १९ ॥

कार्योपक्रमे दैवात् कारणान्तरप्राप्तिसम्भवः समाहितम् ॥ २० ॥

तुल्येनातुल्येन वा वस्तुना सहार्थस्य परिवर्त्तनसम्भवः परिवृत्ति. ॥ २१ ॥

प्रोक्तपदार्थैः सह यथाक्रममर्थानां सम्बन्धो यथासंख्यम् ॥ २२ ॥

केनचिदप्ययोग्यत्वेन वस्तुना सह सम्बन्धस्यासम्भाव्योक्तिर्विषमः ॥ २३ ॥

कार्यकारणयोरेककालमुत्पत्तिकथा सहोक्तिः ॥ २४ ॥

पठनोपक्रमे शब्दार्थाभ्या कृतमतात्त्विकं यद् विरोधप्रतिभानं स विरोधः ॥ २५ ॥

प्रस्तुतार्थस्योत्कृष्टमर्थान्तरमुपलक्षणं यत्र स्वोचितं सम्भवति सोऽवसरः ॥ २६ ॥

निर्द्धारितसारतो यथाशक्ति यतस्ततः सारसारनिर्धारणं सारः ॥ २७ ॥

भङ्गाभङ्गैस्तैरेव पदैरनेकार्थैकवाक्योक्तिः श्लेषः ॥ २८ ॥

अत्युत्तमानां पदार्थानामतिनीचानां चैकत्रग्रन्थनं समुच्चयः ॥ २९ ॥

प्रस्तुतवस्तुतो वस्त्वन्तरस्य प्रशंसाऽप्रस्तुतप्रशंसा ॥ ३० ॥

पूर्वपूर्ववस्तुवैशिष्ट्यनिष्ठानां पदार्थानामुत्तरोत्तरं पुनर्विरचना एकावली ॥ ३१ ॥

भूतभविष्यद्वर्त्तमानकालवर्त्तिनोऽनुमेयस्य वस्तुप्रत्यक्षात्तच्चिह्नतो ज्ञानसम्भवोऽनुमानम् ॥ ३२ ॥

साधारणस्य कस्यचिद्वस्तुनोऽन्यत्र तस्य निवृत्यर्थमेकस्मिन् स्थाने प्रतिपादनं **परिसङ्ख्या** ॥ ३३ ॥

प्रश्ने सति स्फुटं वा गुह्यं स्फुटगुह्यमुत्तरं भवति तत् **प्रश्नोत्तरम्** ॥ ३४ ॥

अनेकालङ्काराणां मिश्रत्वं **सङ्कर** ॥ ३५ ॥

**इत्यादयोऽर्थालङ्काराः ॥**

**अथ शब्दालङ्काराः ।**

कमलादिपदार्थाङ्गभूतदलादीनां सन्धिषु तद्रूपैरक्षरैः कमलादिवस्तुविरचना **चित्रम्** ॥ १ ॥

उपक्रान्तपदार्थाद् भङ्गपदेन श्लेषपदेन वाऽन्यार्थस्योक्तिर्**वक्रोक्तिः** ॥ २ ॥

तुल्यश्रवणानामक्षराणां पुनः पुनः पाठोऽ**नुप्रासः** ॥ ३ ॥

भिन्नार्थानां चरणानां पदानां वा वर्णानामसंयुक्तं संयुक्तं वा पुन. पुनः पठनं **यमकम्** ॥ ४ ॥

**इति शब्दालङ्काराः ॥**

हंसि ! । एवमादयोऽनेकशः कवित्वादिष्वलङ्काराः समुल्लसन्ति तेषा मध्ये केषांचिल्लक्षणानि दर्शितानि ।

लक्षणं नाम असाधारणधर्मवचनम् ।

अलमतिविस्तरेण ।

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| जाति | उपमा | रूपक | प्रतिवस्तूपमा | भ्रान्तिमान् | आक्षेप | सशय | संशय निश्चय | दृष्टान्त | व्यतिरेक | अपह्नुति | तुल्य योगिता | उत्प्रेक्षा | अर्थान्तर न्यास |

| १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| समासोक्ति | विभावना | दीपक | अतिशय | हेतु | पर्यायोक्ति | समाहित | परिवृत्ति | यथासङ्ख्य | विषम | सहोक्ति | विरोध | अवसर | सार |

| २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ | ३८ | ३९ | ४० |
|---|---|---|---|---|---|---|---|---|---|---|---|
| श्लेष | समुच्चय | अप्रस्तुत प्रशंसा | एकावली | अनुमान | परिसङ्ख्या | प्रश्नोत्तर | सङ्कर | चित्र | वक्रोक्ति | अनुप्रास | यमक |

**अथ रसानाचक्ष्महे ।**

श्रृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ च शान्तश्चेति रसा नव । १ ॥

अथ **सामान्यरसलक्षणम्** । विभावानुभावसात्विकव्यभिचारैरुपचीयमानः स्थायिभावः परिपूर्णो रस्यमानो **रसः** ॥ अथवा ।

विभावानुभावव्यभिचारिभावैर्मनोविश्रामः क्रियते स **रसः** ॥

अथवा ।

प्रबुद्धा स्थायिभाववासना **रसः** । इति **सामान्यलक्षणम्** ।

**भावस्तु** । रसानुकूलो विकारो **भावः** ।

विकारो द्विविधः । आन्तरः शारीरश्च ।

तत्रान्तरो द्विविधः । स्थायिभावो व्यभिचारिभावश्च ।

शारीरस्तु सात्विकभावः ।

इतरभावस्यात्मभावत्वोपनायकत्वे सति सजातीयविजातीयभावानभिभाव्यः प्रथमः सकलप्रधानो मनोविकारः **स्थायी भावः** ।

चरमपर्यन्तस्थायित्वादस्य स्थायित्वव्यपदेशः ।

**इति स्थायिभावलक्षणम्** ।

इतस्ततो रसेषु सञ्चारित्वमनेकरसनिष्ठत्वं वाऽनेकरसव्याप्यत्वं व्यभिचारित्वम् ।

इति **व्यभिचारिभावलक्षणम्** ।

सत्त्वं जीवच्छरीरम् । तस्यधर्माः सात्त्विकाः । एतेषामपि व्यभिचारिवत् सर्वरससाधारण्यम् ।

इति **सात्त्विकभावलक्षणम्** ।

**अथ विभावानुभावयोर्लक्षणम्** ।

विशेषेण भावयन्त्युत्पादयन्ति रसानिति ते **विभावाः** ।

विभावो द्विविधः । आलम्बनविभावः उद्दीपनविभावश्च ।

**तल्लक्षणं तु** । यमालम्ब्य रस उत्पद्यते स **आलम्बनविभावः** ॥

यो रसमुद्दीपयति स **उद्दीपनविभावः** ।

**अनुभावलक्षणं तु** ।

ये रसाननुभावयन्त्यनुभवगोचरतां नयन्ति **तेऽनुभावाः** ।

अनुभावश्चतुर्द्धा । कायिकमानसाहार्यसात्त्विकभेदेन । **कायिका** भुजक्षेपणादयः ।

**मानसाः** प्रमोदादयः ।

नाट्ये चतुर्भुजत्वज्ञानादयः **आहार्याः** ।

**सात्त्विका** रोमाञ्चादयः ।

**अथ दृष्टयः** । तत्र स्थायिभावजा दृष्टिरष्टधा । **स्निग्धा** १ **तुष्टा** २ **दीना** ३ **क्रुद्धा** ४ **दृप्ता** ५ **भीता** ६ **जुगुप्सिता** ७ **विस्मिता** ८ ॥ **शान्ताऽपि** ९ ।

अन्या अपि व्यभिचारिभावजाः शून्यादयो विंशतिधा, कान्तादयोऽष्टधा रसदृष्टय समुदायेन षट्त्रिंशद्दृष्टयः ॥३६॥ क्वणिताद्या अन्या अपि दृष्टयः सन्ति बह्व्यः । सर्वासां लक्षणानि तु रसशास्त्रतः प्रतिपत्तव्यानि विस्तरभिया न भण्यते ॥

प्रिये ! । जागृहि जागृहि, सम्प्रति शृङ्गारादीन् रसान् वर्णयामः ।

यूनोः परस्परं परिपूर्णः प्रमोदः,

सम्यक् सम्पूर्णो वा रतिभावः शृङ्गारः ।

इष्टवस्तुसमीहाजनिता मनोविकृतिरपरिपूर्णा रतिः ।

रतिः स्थायी भाव इत्यर्थः ।

सा रतिः क्वचिद्दर्शनेन क्वचित् स्मरणेन क्वचिच्छ्रवणेन च जायते ।

शृङ्गारो द्विधा, संयोगो विप्रलम्भश्च ।

तत्र, दर्शनस्पर्शनसंलापादिभिरितरेतरमनुभूयमानं सुखम् , परस्परसंयोगेनोत्पद्यमान आनन्दो वा संयोगशृङ्गारः । संयोगो बहिरिन्द्रियसम्बन्धः ।

किञ्च ।

यूनोरन्योन्यं मुदितपञ्चेन्द्रियसम्बन्धाभावो वाऽभीष्टाप्राप्तिर्विप्रलम्भशृङ्गारः ।

इति शृङ्गारलक्षणम् । विशेषश्च ।

शृङ्गारः श्यामवर्णश्च कथितः कृष्णदैवत ।

आलम्बनविभावाश्च शृङ्गारे नायिकादयः ॥ १ ॥

नायिकास्तु त्रिविधाः । स्वकीया १ परकीया २ सामान्या ३ चेति ।

तासां लक्षणानि । स्वामिन्येवानुरक्ता स्वकीया ॥ १ ॥

अप्रकटपरपुरुषानुरागा परकीया ॥ २ ॥

वित्तमात्रोपाधिकसकलपुरुषाभिलाषा सामान्या ॥ ३ ॥

किञ्च ।

त्रयोदशविधा स्वीया द्विविधा च पराङ्गना ।

एका वेश्या पुनश्चाद्यावस्थाभेदतो मताः ॥

किमुक्तम् ?

मुग्धा १ मध्याधीरा २ मध्याऽधीरा ३ धीराऽमध्या ४ प्रगल्भाधीरा ५ प्रगल्भाऽधीरा ६ धीराऽप्रगल्भा ७ धीराज्येष्ठा ८ अधीराज्येष्ठा ९ धीराधीराज्येष्ठा १० धीराकनिष्ठा ११ अधीराकनिष्ठा १२ धीराधीराकनिष्ठा १३ इति त्रयोदशविधा स्वकीया ।

परोढा कन्यका इति द्विधा परकीया ।

सामान्या तु एकैव ।

इत्थं स्वीयाद्यं नायिकात्रयं षोडशविधम् ।

पुनरपि षोडश नायिका अष्टाभिरवस्थाभिः प्रत्येकमष्टविधाः ।

अवस्थास्तु ।

**प्रोषितभर्तृका** १ **खण्डिता** २ **कलहान्तरिता** ३ **विप्रलब्धा** ४ **उत्का** ५ **वासकसज्जा** ६ **स्वाधीनपतिका** ७ **अभिसारिका** ८ एवं समुदायेनाष्टाविंशत्युत्तरं शतं भवति ॥ १२८ ॥

एतासां **लक्षणानि ।**

अङ्कुरितयौवना **मुग्धा** ॥ १ ॥

समानलज्जामदना **मध्या** ॥ २ ॥

पतिमात्रविषयकालापकेलिकोविदा **प्रगल्भा** ॥ ३ ॥

परिणीतत्वे सति भर्तुरधिकस्नेहा **ज्येष्ठा** ॥ ४ ॥

परिणीतत्वे सति भर्तुर्न्यूनस्नेहा **कनिष्ठा** ॥ ५ ॥

**मध्यादिचतसृषु धीरादिभेदाः ।**

तत्र व्यङ्ग्यकोपप्रकाशा **धीरा** ॥ ६ ॥

अव्यङ्ग्यकोपप्रकाशाऽ**धीरा** ॥ ७ ॥

व्यङ्ग्याव्यङ्ग्यकोपप्रकाशा **धीराऽधीरा** ॥ ८ ॥

**इति स्वीयाभेदाः** ॥ १३ ॥ परेणान्येन ऊढा परिणीता **परोढा** ॥ १४ ॥

अपरिणीता **कन्यका** ॥ १५ ॥

**इति परकीया ।**

सामान्यालक्षणं तु पुरा उक्तम् ॥ १६ ॥

देशान्तरगते प्रेयसि सन्तापव्याकुला **प्रोषितभर्तृका** ॥ १ ॥

अन्योपभोगचिह्नितः प्रातरागच्छति पतिर्यस्याः सा **खण्डिता** ॥ २ ॥

पतिमवमत्य पश्चात्परितप्ता **कलहान्तरिता** ॥ ३ ॥

सङ्केतनिकेतने प्रियमनवलोक्य समाकुलहृदया **विप्रलब्धा** ॥ ४ ॥

सङ्केतस्थलं प्रति भर्तुरनागमनकारणं चिन्तयति सा **उत्का** ॥ ५ ॥

उत्कण्ठितेत्यर्थः ।

वास एव वासकस्तत्र सज्जति तल्पादिकं सा **वासकसज्जा** ॥ ६ ॥

स्वाधीनः पतिर्यस्याः सा **स्वाधीनपतिका** ॥ ७ ॥

स्वयमभिसरति वाऽभिसारयति साऽ**भिसारिका** ॥ ८ ॥

किञ्च ।

मुग्धादिषु तिसृषु सामान्यतः पुनरन्यसम्भोगदुःखिता, गर्विता, मानवतीति भेदाः ।

**परकीयायां** तु गुप्ता, विदग्धा, कुलटा, लक्षिताऽनुशयना, मुदिताद्याः कतिचन सन्ति **भेदाः ।**

तासां लक्षणानि तु रसशास्त्रे द्रष्टव्यानि ।
पुनर्मुग्धायां च नवोढादिभेदाः ।
इत्थं रसशास्त्रे नाना नायिकाः ।
तासां नायकश्चतुर्विधः ।
अनुकूलो १ दक्षो २ धृष्टः ३ शठ ४ श्चेति ।

रूपसौभाग्यसम्पन्न. कुलीनः कुशलो युवा ।
अनुद्धत. सूनृतगीः ख्यातो नेताऽत्र सद्गुण. ॥ १ ॥

इति सामान्यनायकलक्षणम् ।

नीलीरागोऽनुकूलः स्यादनन्यरमणीरतः ।
दक्षिणश्चान्यचित्तोऽपि यः स्यादविकृतः स्त्रियाम् ॥ १ ॥
प्रियं वक्त्यप्रियं तस्याः कुर्वन्यो विकृतः शठः ।
धृष्टो ज्ञातापराधोऽपि न विलक्षोऽवमानित. ॥ २ ॥

इति चतुर्विधनायकलक्षणम् ।

शृणोषि श्रीनायिके ! शृङ्गारे दशविधो हावः ।
नारीणां स्वभावात् शृङ्गारचेष्टा हावः । इति सामान्यलक्षणम् ।

लीला विलासो विच्छित्तिर्विभ्रमः किलकिञ्चितम् ।
मोदायितं कुट्टमितं बिब्बोको ललितं तथा ॥ १ ॥
विहृतं चेति विज्ञेया दश हावास्तु योषिताम् ।

तत्र लीलाविलासविच्छित्तिललितानि शारीराणि ॥
मोदायितबिब्बोकविभ्रमकुट्टमितविहृतान्यान्तराणि ।
किलकिञ्चितमुभयसङ्कीर्णम् । एतेषां लक्षणानि तु ब्रूमहे ।

प्रियानुकरणं लीला रम्यैर्वेषक्रियादिभिः ।
प्रियभूषणवचनाद्यनुकृतिर्लीला ॥ १ ॥

गतिस्थानासनादीनां मुखनेत्रादिकर्मणाम् ।
तात्कालिकं यद्वैशिष्ट्यं विलासः प्रियसङ्गजम् ॥ २ ॥

गमनवदनभ्रूनयनादीनां यः कश्चिदुत्पद्यते विशेष. स विलासः ।

आकल्पकल्पनाल्पायाऽपि विच्छित्तिः कान्तिपोषकृत् ।
अथवा ।

सखीयत्नादेव धृतिर्मण्डनानां प्रियागसि ।
सेर्ष्यावज्ञा वरस्त्रीभिर्विच्छित्तिरिति केचन ॥ ३ ॥
कतिपयभूषण-विन्यासो विच्छित्तिः ॥ ३ ॥

वल्लभप्राप्तिवेलायां मदनावेशसम्भ्रमात् ।
**विभ्रमो** हारमाल्यादि-भूषास्थानविपर्ययः ॥ ४ ॥

वागङ्गभूषणानां स्थानविपर्यासो **विभ्रमः** ॥ ४ ॥

गर्वाभिलाषरुदितस्मितासूयाभयक्रुधाम् ।
सङ्करीकरणं हर्षादुच्यते **किलकिञ्चितम्** ॥ ५ ॥

श्रमाभिलाषभयक्रोधानां सङ्करः **किलकिञ्चितम्** ॥ ५ ॥

कान्तस्मरणवार्तादौ हृदि तद्भावभावतः ।
प्राकट्यमभिलाषस्य **मोट्टायित**मुदीर्यते ॥ ६ ॥

वार्तावैमुख्ये सति भूयोदर्शनस्पृहा **मोट्टायितम्** । ६ ॥

स्तनधारादिग्रहणे हृत्प्रीतावपि सम्भ्रमात् ।
बहिः क्रोधा व्यथितवत्, प्रोक्तं **कुट्टमितं** तु तत् ॥ ७ ॥

अदुःखे दुःखचेष्टा **कुट्टमितम्** ॥ ७ ॥

इष्टेऽपि गर्वमानाभ्या **विब्बोकः** स्यादनादरः ।

गर्वातिमानसम्भूतोऽनादरात्मको विकारो **विब्बोकः** ॥ ८ ॥

विन्यासभङ्गिरङ्गाना भ्रूविलासमनोहरा ।
सुकुमारा भवेद्यत्र **ललितं** तदुदीरितम् ॥ ९ ॥

सकलाङ्गसमीचीनविन्यासो **ललितम्** ॥ ९ ॥

ह्रीमानेर्ष्यादिभिर्यत्र नोच्यते स्वविवक्षितम् ।
व्यज्यते चेष्टयैवेदं **विहृतं** तदुदीरितम् ॥ १० ॥

प्रियसन्निधावभिलाषापरिपूर्तिर्**विहृतम्** ॥ १० ॥

एतेषा हावानामपि प्रत्येकमनुभावविभावा बहवः सन्ति किं विलेख्यम् ।

**इति दश हावलक्षणानि ।**

वनिते ! । विप्रयोगश्रृङ्गारस्तु–देशान्तरगमनाद् , गुरुनिदेशाद् , अभिलाषाद् , ईर्ष्यातः शापात् , समयाद् , दैवाद्वैह्वल्याच्चोत्पद्यते । किञ्च स च **विप्रलम्भश्रृङ्गारश्चतुर्धा** पूर्वानुरागः १ मानः २ प्रवासः ३ करुण. ॥ ४ ॥

स्त्रीपुंसयोर्नवालोकादेवोल्लसितरागयोः ।
ज्ञेयः **पूर्वानुरागो**ऽयमपूर्णस्पृहयोर्दशा ॥ १ ॥

**मानो**ऽन्यवनितासङ्गादीर्ष्या विकृतिरुच्यते ॥ २ ॥

**प्रवासः** परदेशस्थे प्रिये विरहसम्भवः ॥ ३ ॥

स्यादेकतरपञ्चत्वे दम्पत्योरनुरक्तयोः ।
श्रृङ्गारः **करुणा**ख्योऽयं वृत्तवर्णन एव सः ॥ ४ ॥

इति चतुर्विधो **विप्रयोगश्रृङ्गारः ।**

किञ्च अवस्थादूत्याद्यमन्यदप्यनेकविधं श्रृङ्गारोपयोगिकमग्रे कथयिष्यामः ।

**अथ श्रृङ्गारस्योद्दीपनविभावाः ।**

ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवाभिः ।
उपवनगमनविहारैः श्रृङ्गाररसः समुद्भवति ॥

चन्द्रचन्दनादयोऽपि ।

इत्यादयः श्रृङ्गारस्योद्दीपनविभावाः ।

इति विभावद्वयम् ।

श्रृङ्गारस्यानुभावास्तु ।

नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च ।
विविधैरङ्गविकारै-स्तस्याभिनयः प्रयोक्तव्यः ।

कटाक्षभुजक्षेपणादयोऽपि ।

**इत्यनुभावाः ।**

स्तम्भः स्वेदोथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रुप्रलयो जृम्भेति नव सात्त्विकाः ।

**इति सात्त्विकभावाः ।**

आलस्यग्लानिनिर्वेदश्रमशङ्कानिद्रौत्सुक्यापस्मारसुप्तविबोधोन्मादजाड्यासूया इति-विप्रलम्भे ।

**संयोगे** तु आलस्यौग्र्यजुगुप्सा वर्ज्याः ।

**इति व्यभिचारिभावाः ।**

**इति भावपञ्चकोल्लसितः श्रृङ्गाररसः ॥ १ ॥**

हासस्य परिपोषो **हास्यः ।**

उत्तममध्यमाधमभेदेन हास्यरसस्त्रिविधः ।

तत्रोत्तमानां **स्मितहसिते** २ । मध्यमानां **विहसितोपहसिते** २ । अधमाना**मपहसितातिहसिते** २ । लक्षणान्यपि ।

अव्यक्तदशनमपाङ्गसुष्ठुवीक्षितं **स्मितम्** ॥ १ ॥

ईषद्विकसितकपोलमुत्फुल्लाननमीषल्लक्षितदन्तं **हसितम्** ॥ २ ॥

इत्युत्तमे ।

समयोचितमुत्तमस्वनमाकुञ्चितमुखमाविर्भूतवदनरागं **विहसितम्** ॥ ३ ॥

उत्फुल्लनासापुटं कुटिलदृष्टिवीक्षितं कुञ्चितग्रीवं स्फुटतरस्वन**मुपहसितम्** ॥ ४ ॥

**इति मध्यमे ।**

उद्यदश्रु कम्पितमौलि स्फुटतरस्वनमपहसितम् ॥ ५ ॥

अत्युद्धतमतिबहुलाश्रु स्फुटतरस्वनमाश्लिष्टपार्श्वजनमारब्धकरतालमतिहसितम् ॥६॥

इत्यधमानाम् ।

वर्णोऽस्य रक्तः ।

देवता कन्दर्पः ।

कुतूहलकृतवचनवेषवैसादृश्यकृतो मनोविकारोऽपरिपूर्णो हासः स्थायी भावः ॥१॥

विपरीताऽलङ्कारैर्विकृताचाराभिधानवेषैश्च विकृतैरर्थविशेषैर्हास्यरसः सम्यगुद्भवति ।

इति विभावाः ।

विकृताकारैर्वाक्यैरङ्गविकारैर्विकृतवेषैश्च ।

हास्यं जनयेद्यस्मात् स विज्ञेयो रसो हास्यः ।

इत्यनुभावाः ।

सात्त्विकास्तु सर्वत्र पूर्वोक्ता एव ।

अवहित्थालस्यनिद्राप्रबोधाभ्यसूया व्यभिचारि भावाः ।

इति हास्यरसलक्षणम् ।

शोकस्य परिपोषः करुणः ।

आशाविच्छेदे सति सर्वेन्द्रियक्लमो वा करुणः ।

वर्णोऽस्य कपोतचित्रः ।

दैवतं वरुणो ।

यमो वा ।

इष्टविश्लेषजनितो रत्यनालिङ्गितो मनोविकारोऽपरिपूर्णः शोकः स्थायिभावः ॥ १ ॥

इष्टजनस्य विनाशाच्छापात् क्लेशाच्च बन्धनाद्व्यसनात् ।

एतैरर्थविशेषैः करुणरसः सम्यगुद्भवति ।

इति विभावाः ॥ २ ॥

निश्वसितश्वसनरुदितै-र्मोहप्रलापपरिदेवनैश्चैव ।

अभिनेयः करुणाख्यो देहविघातादिभिश्चापि ।

इत्यनुभावाः ॥ ३ ॥

मोहनिर्वेददैन्यजाड्यविषादभ्रमापस्मारोन्माद्व्याध्यालस्यवेपथुस्तम्भस्वरभेदकम्पा व्यभिचारिभावाः

इति करुणरसः ॥ ३ ॥

परिपूर्णक्रोधो रौद्रः ।

सर्वेन्द्रियाणामौद्धत्यं वा ।

वर्णोऽस्य रक्तः।

दवतं रुद्रः।

अवज्ञादिकृतः प्रमोदप्रतिकूलोऽपरिपूर्णो मनोविकारः क्रोधः
**स्थायी भावः** ॥ १ ॥

आयुधखङ्गाभिभवा-द्विकृतभेदाद्विदीरणाच्चापि।
सङ्ग्रामसम्भवार्थादेभ्यः सञ्जायते रौद्र ।
**इति विभावाः** ॥ २ ॥

नानाप्रहरणसङ्कुल-शिरसः कम्पैः कराग्रनिष्पेषैः।
घोरैरर्थविशेषै-स्तस्याभिनयः प्रयोक्तव्यः।
**इत्यनुभावाः** ॥ ३ ॥

उत्साहस्मृतिस्वेदावेगामर्षरोमाञ्चचञ्चलतोग्रतास्वरभेदकम्पा **व्यभिचारिभावाः** ॥४॥

**इति रौद्ररसलक्षणम्** ॥ ४ ॥

परिपूर्ण उत्साहः सर्वेन्द्रियप्रहर्षो वा **वीरः**।

वर्णोऽस्य गौरः।

दैवतमिन्द्रः।

युद्धवीर-दानवीर-दयावीरभेदेन **वीररसस्त्रेधा**।

**युद्धवीरे,** प्रतापाध्यवसायादिप्रभव उत्साहः।

**दानवीरे,** दानाध्यवसायादिप्रभवः।

**दयावीरे,** आर्द्रतादिप्रभवः।

शौर्यदानदयान्यतरकृतो मनोविकारोऽपरिपूर्ण उत्साहः **स्थायिभावः** ॥ १ ॥

उत्साहाध्यवसाया-दविषादित्वादविस्मयान्मोहात्।
विविधादर्थविशेषाद्वीररसो नाम सम्भवति।
**इति विभावाः** ॥ २ ॥

शौर्यैर्धैर्यैर्वीर्यैरुत्साहपराक्रमप्रधानैश्च।
वाक्यैराक्षेपयुते-र्वीररसः सम्यगभिनेयः।
**इत्यनुभावाः** ॥ ३ ॥

उत्साहधृतिमतिगर्वावेगामर्षोग्रतारोमाञ्चा **व्यभिचारिभावाः** ॥ ४ ॥

**इति वीररसः** ॥ ५ ॥

भयस्य परिपोषः सर्वेन्द्रियविक्षोभो वा **भयानकरसः**।

स्पर्शग्रहणोल्लासै-र्हाहाकारैश्च साधुवादैश्च । वपथुगद्गदवचनैः स्वरभेदैरभिनयस्तस्य ॥
इत्यनुभावाः ॥ ३ ॥

स्तम्भरोमाञ्चस्वेदगद्गदताविभ्रमता व्यभिचारिभावाः ॥ ४ ॥

इत्यद्भुतरसः ॥ ७ ॥

निर्वेदस्य परिपोषः द्वेषतुषप्रशमनो वा शान्तरसः ।

दोषाः कामक्रोधलोभादयः। निर्वेद. स्थायिभावः ॥ १ ॥

विषयदोषविचारविरक्तयाद्यो विभावाः ॥ २ ॥

आनन्दाश्रुपुलकहर्षगद्गदवचनादयः अनुभावाः ॥ ३ ॥

इति शान्तरसलक्षणम् ॥

मायारसोपि दशमो वाच्यः ।

प्रबुध्धा मिथ्याज्ञानवासना मायारसः ।

मिथ्याज्ञानं स्थायिभावः ।

सांसारिकभोगार्जकधर्माधर्मा विभावाः ॥

पुत्रकलत्रसाम्राज्याद्योऽनुभावाः ॥

इति मायारसलक्षणम् ॥ १० ॥

इति श्रीहंसमिट्ठुपठिते श्रीहंसविलासे ऽलङ्कारनवरसवर्णनं नाम चतुश्चत्वारिंशोल्लासः ।

**कोष्टकसङ्ख्या.**

| १ | २ | ३ | ४ | ५ |
|---|---|---|---|---|
| रस ९ | शृङ्गार १ | हास्य २ | करुण ३ | रौद्र ४ |
| स्थायिभाव | रति | हास | शोक | क्रोध |
| अनुभाव | कटाक्षादि | नेत्रसङ्कोचादि | देवनादि | भ्रूभङ्गादि |
| विभाव | नायिका चन्द्राद्य | विकृतवागादि | शोन्यादि | सपत्नादि |
| व्यभिचारिभाव | आलस्यादि | निद्रालस्यादि | उच्छ्वासादि | सेनादर्शन |
| सात्विकभाव | स्तम्भाद्य | ० | ० | ० |
| वर्ण | श्याम | शुभ्र | कपोत | रक्त |
| दैवत | विष्णु | काम | यम | रुद्र |

| ६ | ७ | ८ | ९ | १० |
|---|---|---|---|---|
| वीर ५ | भयानक ६ | बीभत्स ७ | अद्भुत ८ | शान्त ९ |
| उत्साह | भय | जुगुप्सा | विस्मय | निर्वेद |
| सहायान्वेषणादि | वैवर्ण्यादि | निष्ठीवनादि | स्तम्भादि | रोमाञ्चादि |
| जेतव्यादि | भयवस्तु | दुर्गन्धि | लोकातिग वस्तु | परमार्थस्वरूप |
| धृतिमत्यादि | वेगादि | मोहादि | वितर्कादि | हर्षादि |
| ० | ० | ० | ० | ० |
| गौर | कृष्ण | नील | पीत | शुभ्र |
| इन्द्र | काल | महाकाल | ब्रह्मा | नारायण |

**श्रीहंसः अथ स्वरभेदः प्रोच्यते ।**

निषादर्षभ-गान्धार-षड्ज-मध्यम-धैवताः ।

पञ्चमश्चेति सप्तामी तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥

एते सप्त स्वराः ।

वायुः समुद्गतो नाभेः कण्ठशीर्षसमाहतः ।
नदत्यृषभवद्यस्मा-त्तेनैष **ऋषभः** स्मृतः ॥ २ ॥
वायुः समुद्‌गतो नाभेः कण्ठशीर्षसमाहतः ।
नानागन्धवहः पुण्यो **गान्धारस्तेन** हेतुना ॥ ३ ॥
कण्ठोरस्तालुनासाभ्यो जिह्वाया दशनादपि ।
**षड्‌ज**स्तु जायते यस्मात्तेन **षड्‌जोऽत्र** कथ्यते ॥ ४ ॥
जत्रुदेशोत्थितो वायुरवः कण्ठसमाहतः ।
नाभिं प्राप्तो महानादो मध्यस्थस्तेन **मध्यमः** ॥ ५ ॥
धीमद्भिर्धार्यते यस्माद्धै**वतस्तेन** कथ्यते ।
स तु भावप्रदानत्वाल्ललाटे व्यवतिष्ठते ॥ ६ ॥
समुद्‌गतेन नाभेरुरोनासाकण्ठमूर्द्धसु ।
विचरन् पञ्चमस्थानप्राप्त्या-**पञ्चम** उच्यते ॥ ७ ॥
**षड्‌जं** रौति मयूरस्तु गावो नर्द्दन्ति **चार्षभम्** ।
अजाविकौ च **गान्धारं** क्रौञ्चो नदति **मध्यमम्** ॥ ८ ॥
पुष्पसाधारणे काले कोकिलो रौति **पञ्चमम्** ।
अश्वस्तु **धैवतं** रौति **निषादं** रौति कुञ्जरः ॥ ९ ॥

**ऋषभं** चातकोऽपि ।

दर्दुरो **धैवतम्** ।

उन्मत्तगजाश्वा अपि **पञ्चमं** रुवन्तीति ।

उच्चैर्निषादगान्धारौ नीचैर्ऋषभधैवतौ ।
शेषास्तु स्वरिता ज्ञेया' षड्‌जपञ्चममध्यमाः ॥
हास्यशृङ्गारयोः कार्यौ स्वरौ पञ्चममध्यमौ ।
षड्‌जर्षभौ तथा ज्ञेयौ वीररौद्राद्भुते रसे ॥
गान्धारश्च निषादश्च कर्त्तव्यौ करुणारसे ।
धैवतश्चैव कर्तव्यो बीभत्से च भयानके ॥
स्वयं यो राजते नादः च **स्वरः** परिकीर्त्तितः ।
स्वरैश्च निखिलं व्याप्तं तद्विज्ञेयं पृथक् पृथक् ॥

**इति स्वरलक्षणम् ।**

अन्यच्च ।

सामवेदात्स्वरा जाताः स्वरेभ्यो ग्रामसम्भवः ।
ग्रामेभ्यो जातयो जाता जातिभ्यो रागसम्भवः ॥
ग्रामरागोद्भवा भाषा भाषाभ्यश्च विभाषिकाः ।
विभाषाभ्योऽपि सञ्जातास्तथैवान्तरभाषिकाः ॥
स्वराः सप्त त्रयो ग्रामा मूर्छना एकविंशतिः ।
द्वाविंशतिश्च श्रुतयस्त्वेतेभ्यो रागसम्भवः ॥
षड्जादयः स्वराः सप्त ग्रामौ च षड्जमध्यमौ ।
केचिद्गान्धारमप्याहुः स तु नेहास्ति भूतले ॥
चतुर्दशैव श्रुतयस्तावन्मानाश्च मूर्छनाः ।
गीयन्ते मानवैर्भूमावन्यास्तु त्रिदशालये ॥
चतुःश्रुतिस्त्रिश्रुतिश्च द्विश्रुतिश्च चतुःश्रुतिः ।
चतुःश्रुतिस्त्रिश्रुतिश्च द्विश्रुतिश्चेति ते स्वराः ।

। अथ तालाः ।

आदितालो हंसकश्च ततः कन्दुकसंज्ञकः ।
क्रीडातालस्त्वथ लघुशेखरो मलयस्तथा । १ ॥
त्रिपुटाख्यश्च तुरगलीलाख्यः सन्निपातकः ।
खण्डो झम्पश्चाचुपुट-श्चम्पुटो रङ्गदर्पणौ ॥ २ ॥
भृङ्गः सुरङ्गतालश्च मुकुन्दस्तदनुस्मृतः ।
राजतालस्ततः प्रोक्तो गजलीलस्तथापरः ॥ ३ ॥
ततः शरभलीलाख्यतालश्चापि द्वितीयकः ।
उमातिलकसंज्ञश्च वनमाली ततः स्मृतः ॥ ४ ॥
विद्याधराभिधो ज्ञेयस्ततो राजविनोदकः ।
ततो ललिततालश्च प्रोदितः कोकिलाप्रियः ॥ ५ ॥

। एतेषां लक्षणानि ।

एक एव लघुर्यस्मि-न्नादितालः स कथ्यते ॥ १ ॥
लघुर्गुरुर्लघुर्यत्र स तालो हंसकः स्मृतः ॥ २ ॥
लघुद्वयं विरामान्तं ताल कन्दुकसंज्ञकः ॥ ३ ॥
एक एव प्लुतो यस्मिन् क्रीडातालः स कथ्यते ॥ ४ ॥

लघुर्गुरुर्भवेद्यत्र स तालो **लघुशेखरः** ॥ ५ ॥

**मलयाख्ये** भवेत्ताले गुरुर्लघुरतो गुरुः ॥ ६ ॥

द्रुतद्वन्द्वं लघुद्वन्द्वं ताले **त्रिपुटसंज्ञ**के ॥ ७ ॥

द्रुतद्वयं विरामान्तं ताले **तुरगलील**के ॥ ८ ॥

एक एव गुरुर्यत्र **सन्निपातः** स कथ्यते ॥ ९ ॥

द्रुतमेकं भवेद्यत्र स तालः **खण्डसंज्ञ**कः ॥ १० ॥

द्रुतद्वयं विरामान्तं लघुनैकेन **झम्पकः** ॥ ११ ॥

ताले **चाचुपुटे** ज्ञेयं गुरुर्लघुयुगं गुरुः ॥ १२ ॥

ताले **च चम्पुटे** ज्ञेयं गुरुद्वयं लघुप्लुते ॥ १३ ॥

**रङ्गताले** च विज्ञेयो लघुश्चैको गुरुद्वयम् ॥ १४ ॥

लघुद्वयं गुरुश्चैकस्तालोयं **दर्पणः** स्मृतः ॥ १५ ॥

गुरुर्लघुद्वयं यत्र **भृङ्गतालः** स कथ्यते ॥ १६ ॥

विरामान्तं द्रुतद्वन्द्वं गुरुश्चैकः **सुरङ्गके** ॥ १७ ॥

द्रुतद्वन्द्वं गुरुद्वन्द्वं भवेत्ताले **मुकुन्दके** ॥ १८ ॥

लघुत्रयं गुरुद्वन्द्वं ताले **शरभलीलके** ॥ १९ ॥

लघुत्रयं विरामान्तं ताले **द्वितीयसं**ज्ञके ॥ २० ॥

**उमातिलकताले** तु द्रुतौ लघुगुरू स्मृतौ ॥ २१ ॥

द्रुतमेकं प्लुतौ द्वौ च **वनमाली**तितालके ॥ २२ ॥

**राजतालाभिधा**ने तु लघुद्रुतौ लघुस्ततः ॥ २३ ॥

लघुद्रुतौ गुरुर्यत्र तालोऽयं **गजलीलकः** ॥ २४ ॥

प्लुतश्च गुरुरेकत्र तालो **विद्याधरः** स्मृतः ॥ २५ ॥

**राजविनोदताले** स्याद्गुरुद्वन्द्वमथ प्लुतः ॥ २६ ॥

गुरुद्वयं भवेद्यत्र तालो **ललितसं**ज्ञकः ॥ २७ ॥

**कोकिलाप्रियता**ले वै द्रुतत्रयमुदाहृतम् ॥ २८ ॥

## अथ लघुगुरुप्लुतद्रुतलक्षणम् ।

लघुः शुद्धो गुरुर्वक्र उभाभ्यां च **प्लुतो** भवेत् ।

प्लुतस्त्रिमात्रको ज्ञेयो द्रुतः स्यादर्धमात्रकः ॥ १ ॥

लघोर्गुरोः प्लुतस्यापि भवेत्तालः पृथक् पृथक् ।
मिलितानामपि भवेत्प्रस्तारस्तस्य कथ्यते ॥ २ ॥

॥ अथतालप्रस्तारः ॥

ताले पादस्थिता मात्रा गणयेल्लघुरूपिकाः ।
तावतीभिस्तु मात्राभिः प्रस्तारो निखिलो भवेत् ॥ १ ॥
ताले पादस्थिते मूलादाद्याद्धीनमधो लिखेत् ।
तच्च मध्याह्वये ज्ञेयस्तत्पृष्ठे स्याद्यथोपरि ॥ २ ॥
मध्यं पृष्ठाश्रितैः सार्द्धं मात्राभिर्गणयेद्बुधः ।
मध्यस्याग्रे च विलिखेन्मात्राः पूरणहेतवे ॥ ३ ॥
पूरणाय विधिश्चैष पूर्वं स्थूलास्ततः कृशाः ।
बहुमात्रो भवेत्स्थूल-स्ततो हीनः कृशो भवेत् ॥ ४ ॥
द्रुतस्तु न भवेन्मूलमन्ये मूलाः कलामयाः ।
एवं पुनः पुनः कुर्याद्यावत्सर्वद्रुतो भवेत् ॥ ५ ॥

। इति तालप्रस्तारः ।

। अथ वर्णप्रस्तारः ।

पादे सर्वगुरावाद्या-ल्लघुंन्यस्य गुरोरधः ।
यथो परि तथा शेषं भूयः कुर्यादमुं विधिम् ॥ १ ॥
ऊने दद्याद्गुरूनेव यावत् सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यात-श्छन्दोविचितिवेदिभिः ॥ २ ॥

। अथ ध्रुवपदलक्षणं रागार्णवे ।

हिमवत्कन्यकाप्रीत्या देवदेवेन शम्भुना ।
शुद्धरागान् विनिष्पीडय सरसं समलङ्कृता ॥ १ ॥
शुद्धरागसमुत्पन्नं छायालिङ्गमनोहरम् ।
अबलाबालगोपाल-क्षितिपालैस्तु गीयते ॥ २ ॥
आद्यो ध्रुवस्ततो मण्ठः प्रतिमण्ठो निसारुकः ।
अड्डुतालस्ततो रास एकताली च सम्मताः ॥ ३ ॥

इत्यष्टौ सालगसूडभेदाः ।

तत्रादौ ध्रुवकलक्षणम् ।

। तथाहि ।

न विवेकं विना ज्ञान ध्यानं नात्र रसं विना ।
श्रद्धया न विना दानं न गानं ध्रुवकं विना ॥ १ ॥
उत्तमः षट्पदः प्रोक्तो मध्यमः पञ्चभिस्तथा ।
कनिष्ठस्तु चतुर्भिः स्यादेवं स्युर्ध्रुवकास्त्रिधा ॥ २ ॥

एकधा तु द्विखण्डं स्यादू यत्रोद्ग्राहस्ततः परम् ।
तृतीयं किञ्चिदुच्चं स्यात् खण्डं गमकशोभनम् ॥ ३ ॥
ततो द्विखण्डमाभोग-स्तृतीयं तस्य खण्डकम् ।
उच्चङ्गमकयुक्तं वा स्वनाम्ना चाङ्कित तु तत् ॥ ४ ॥
उद्ग्राहः स्यादखण्डं च न्यासः स ध्रुवको मतः ।
एवं हि षट्पदः प्रोक्तो ह्युत्तमो ध्रुवको बुधैः ॥ ५ ॥
पञ्चपादस्य तूद्ग्राहिपदयुग्मं प्रशस्यते ।
तृतीयं चोच्चखण्डं स्याद्विरामस्थमिदं त्रयम् ॥ ६ ॥
आभोगश्चैक एव स्याद् द्वितीयं चोच्चखण्डकम् ।
तुल्यनामाङ्कितं चैतदिति **मध्यम**लक्षणम् ॥ ७ ॥
चतु पादस्य तूद्ग्राहे यदेकं स्यात्ततः पदम् ।
किञ्चिदुच्च द्वितीयं स्याद् द्विरभ्यस्तमिद द्वयम् ॥ ८ ॥
आभोगे चैकमेव स्यात् किञ्चिदुच्चं द्वितीयकम् ।
प्रभुनाम्नाङ्कितं चैतत् **कनिष्ठ**स्येति लक्षणम् ॥ ९ ॥
षण्णां पदानां वा वर्णनियमो वा द्वयोर्भवेत् ।
पदयोर्वर्णनियमो ध्रुवाणां हि **द्विधा गतिः** ॥ १० ॥
पदद्वये यदा वर्णनियम क्रियते बुधै ।
तदा पदानि चान्यानि भवन्ति नियमं विना ॥ ११ ॥
एकादशाक्षरात्पादादेकैकाक्षरवर्धितै ।
खण्डैर्ध्रुवाः **षोडश** स्यु षड्विंशत्यक्षरावधि ॥ १२ ॥
रसतालादिवर्णैश्च ध्रुवाणां लक्षण शुभम् ।
प्रोक्तं **रागार्णवे** सर्व सङ्क्षेपादिह कथ्यते ॥ १३ ॥

## ॥ अथ षोडशध्रुवाणां नामानि ॥

जयन्त शेखरोत्साहौ ततो मधुरनिर्मलौ ।
कुन्तल कमलश्चारु-नन्दनश्चन्द्रशेखर ॥ १४ ॥
कामदो विजयाख्यश्च कन्दर्पो जयमङ्गल ।
तिलको ललितश्चेति ध्रुवा षोडश कीर्तिता ॥ १५ ॥

## एतेषां लक्षणानि ।

आदिताले **जयन्तः** स्यात् शृङ्गाररससयुतः ।
रुद्रसङ्ख्याक्षरपदो ह्यायुर्वृद्धिकरः परः ॥ १६ ॥
**उत्साहः** स्याद् रसे हास्ये ताले कन्दुकसंज्ञके ।
वंशाभिवृद्धिकृत्पादस्त्रयोदशमिताक्षरः ॥ १७ ॥

क्रीडाताले ध्रुवः स स्यात् पञ्चवर्णाङ्घ्रिनिर्मल ।
श्रृङ्गाररससंयुक्त श्रोतुस्तेजोऽभिवर्द्धनः ॥ १८ ॥
वर्णै षोडशभि पाद कुन्तलो लघुशेखरे ।
इष्टार्थदः शौर्यदः स्यादद्भुताख्यरसान्वितः ॥ १९ ॥
वर्णैश्च सप्तदशभि-रङ्घ्रिः श्रृङ्गारके रसे ।
कमलो मलयाख्ये वै ताले ह्यायुर्विवर्द्धन ॥ २० ॥
नन्दद्वयाक्षरैः पादो नन्दनः सर्वसिद्धिदः ।
पूर्णः श्रृङ्गारवीराभ्यां कन्दुके च विधीयते ॥ २१ ॥
कल्याणदो भवेद्वीरे ध्रुवकश्चन्द्रशेखरः ।
द्विदिग्वर्णपदं यत्र त्रिपुटे च विधीयते ॥ २२ ॥
एकविंशतिवर्णाङ्घ्रिर्भवेच्छृङ्गारके रसे ।
कामदोऽभीष्टदः पुंसां ताले तुरगलीलके ॥ २३ ॥
विजयाख्यो ध्रुवः स स्याद् द्वाविंशत्यक्षराङ्घ्रिकः ।
सन्निपाते तथा ताले श्रृङ्गारेऽभीष्टदो रसे ॥ २४ ॥
त्रयोविंशतिवर्णाङ्घ्रिर्ध्रुवः कन्दर्पसंज्ञकः ।
वीरे वा करुणे वा स्यात् खण्डताले सुखप्रदः ॥ २५ ॥
द्विघ्नद्वादशवर्णाङ्घ्रि-स्ताले वै झम्पके भवेत् ।
वीरश्रृङ्गाररसयो-र्जयकृज् जयमङ्गलः ॥ २६ ॥
पञ्चविंशाक्षरः पादो यस्यासौ तिलकाह्वयः ।
ताले चाचुपुटे ज्ञेयो वीरे वाप्यद्भुतेऽपि वा ॥ २७ ॥
य षड्विंशतिवर्णाङ्घ्रिः स स्यात्सर्वार्थसिद्धिद ।
ललिताख्यश्चम्पुटाख्ये ताले श्रृङ्गारपोषकः ॥ २८ ॥

॥ इति षोडशध्रुवाः ॥

## अथ मण्ठकलक्षणम् ।

उद्ग्राहो ध्रुपदश्च स्यादाभोगस्तदनन्तरम् ।
नियमस्त्रिविधो ज्ञेयो मण्ठकस्य विचक्षणै ॥ २९ ॥

## अथ मण्ठकभेदाः ।

गेयप्रिय कलापश्च कमलः सुन्दरस्तथा ।
वल्लभो मङ्गलश्चेति षडेते मण्ठका स्मृताः ॥ ३० ॥

**लक्षणानि च**

हंसताले रसे वीरे कर्त्तव्यो गेयमण्ठक ।
रङ्गताले कलापश्च रसे रौद्राभिधानके ॥ ३१ ॥

दर्पणे च रसे शान्ते **कमलो** मण्ठको भवेत् ।
**सुन्दर**स्त्रिपुटे ताले वीरे वाप्यद्भुते रसे ॥ ३२ ॥
मलये **वल्लभो** ज्ञेयो रसे चाद्भुतसंज्ञके ।
भृङ्गताले **मङ्गलाख्यो** मण्ठकश्चाद्भुते रसे ॥ ३३ ॥
**इति मण्ठकाः** ॥ ६ ॥

**अथ प्रतिमण्ठकाः ।**

तारश्चाप्यमरश्चैव विचारः कुन्दसंज्ञकः ।
चत्वारः कथिताश्चैते प्रतिमण्ठास्तु शम्भुना ॥ ३४ ॥
सुरङ्गताले गातव्य**स्ताराख्यः** प्रतिमण्ठकः ।
**अमर** प्रतिमण्ठस्तु ताले वै सन्निपातके ॥ ३५ ॥
ताले कन्दुकसंज्ञे तु **विचारः** प्रतिमण्ठक ।
खण्डताले तु **कुन्दाख्यः** प्रतिमण्ठः प्रगीयते ॥ ३६ ॥
**एते प्रतिमण्ठकाः ॥ ४ ॥**

**अथ निसारुकभेदाः ।**

कान्तारः समराख्यश्च वैकुण्ठो वाञ्छितस्तथा ।
विशालश्च तथानन्द षोढा नि सारुको भवेत् ॥ ३७ ॥
**समरो** गीयते सद्भिस्ताले कन्दुकनामनि ।
मुकुन्दाख्ये तु **वैकुण्ठो** हृद्यो नि सारुक सदा ॥ ३८ ॥
ताले शरभलीले तु **वाञ्छितो** वाञ्छितप्रद ।
ताले द्वितीयसंज्ञे तु **विशालाख्यो** निसारुक ॥ ३९ ॥
**नन्दो** नि सारुको नित्यं क्रीडाताले प्रगीयते ॥ एते नि.सारुका ।

**अथाऽद्भुतालाः ।**

शङ्क कीलश्चविजयस्तारो निःशङ्क एव च ।
मकरन्दोऽपरो ज्ञेयस्त्वद्रुतालोऽपि षड्विध. ॥ ४० ॥
गेय शङ्कोऽद्रुतालश्च ताले वै लघुशेखरे ।
झम्पताले तु **कीला**ख्योऽद्रुतालो गीयते बुधैः ॥ ४१ ॥
**विजयो** गीयते नित्यं ताले तुरगलीलके ।
उमातिलकताले वै **तारा**ख्यस्त्वद्रुतालकः ॥ ४२ ॥
**निःशङ्कः** स्यात्त्वद्रुतालो वनमाल्यभिधानके ।
राजतालाभिधाने तु **मकरन्दो**ऽद्रुतालकः ॥ ४३ ॥

एतेऽद्रुतालाः ॥ ६ ॥

अथ रासकभेदाः ॥

चतुर्द्धा रासकः प्राक्तो गीतवाद्यविशारदै ।
विनोदो वरदो नन्द कम्बुजश्चेति कीर्तिता ॥ ४४ ॥
आदिताले **विनोदा**ख्यो रासको गातृसौख्यद ।
**वरदो** रासको गेय-स्ताले वै गजलीलके ॥ ४५ ॥
गीयते रासको **नन्दो** नित्यं विद्याधराभिधे ।
ताले राजविनोदाख्ये **कम्बुजो** रासक शुभ ॥ ४६ ॥

**एते रासकाः ।**

**अथैकतालीभेदाः ।**

एकताली त्रिधा प्रोक्ता गीतवाद्यविशारदै ।
रामा च चन्द्रिका तद्व-द्विपुलेत्यथ लक्षणम् ॥ ४७ ॥
खण्डताले तु **रामाख्या** चैकताली प्रगीयते ।
एकताली तु ललिते ताले वै **चन्द्रिका** शुभा ॥ ४८ ॥
**विपुलाख्या** चैकताली ताले स्यात्कोकिलाप्रिये ।

**इति ध्रुवाद्येकतालीपर्यन्तानां सालगसूडगीतानां लक्षणानि ॥**

**अथ शुद्धसूडगीतनामानि ।**

एलाकरणठेकीभिर्वर्त्तन्या द्रुमडेन च ।
लम्भरासैकतालीभिः **शुद्धसूडोऽष्टभिः** स्मृत. ॥ ४९ ॥
शुद्धसूडोऽन्यदेशे तु गीयते विरलैः क्वचित् ।
अतो न विस्तरेणोक्तो दक्षिणेषु तु गीयते ॥ ५० ॥

**। अथ रूपकम् ।**

उद्ग्राहश्चान्यधातुः स्यात् ध्रुवकश्चान्यधातुकः ।
मेलापकोऽन्यधातुः स्यादाभोगश्चान्यधातुकः ॥ ५१ ॥
चतुर्धातुकमेतद्धि **रूपकं** कीर्त्यते बुधै

**। इति रूपकलक्षणम् ।**

**। अथ गमकम् ।**

स्फुरितं कम्पितं लीनं तिमितान्दोलिते तथा ।
आहतं त्रिकभिन्नं च **गमकं** सप्तधा स्मृतम् ॥ ५२ ॥

## । इति गमकम् ।

## । अथ प्रत्यन्तरम् ।

उद्दिष्टवस्तु रागादौ किञ्चिदाधिक्यचित्रितम् ।
न धातुमातुनिष्पन्नं प्रत्यन्तरमितीरितम् ॥ ५३ ॥

## । अथ खलोत्तारम् ।

पूर्वरूपकसंसिद्ध-छायासंस्कृतरूपकम् ।
तत्स्थानप्रोच्चनीचं च खलोत्तारं प्रकीर्तितम् ॥ ५४ ॥

## । इति खलोत्तारलक्षणम् ।

## इति श्रीहंसमिट्टुपठिते श्रीहंसविलासे । स्वरतालादिकथनं नाम पञ्चचत्वारिंशोल्लासः ।

| १ | २ | ३ | ४ | ५ | ६ |
|---|---|---|---|---|---|
| आदि १ | जयन्त १ | ताला | ध्रुवका १६ | मण्ठक | प्रतिमण्ठक |
| हंसक २ | शेखर २ | त्रिपुटताल ८ | चन्द्रशेखर १० | गेयप्रिय १<br>हसताल १ | तार १<br>सुरङ्गताल १ |
| कन्दुकताल | उत्साह ३ | तुरगलील ११ | कामद ११ | कलाप २<br>रङ्गताल २ | अमर २<br>सन्निपात २ |
| | मधुर ४ | सन्निपातताल १२ | विजय १२ | कमल ३<br>दर्पणताल ३ | विचार ३<br>कन्दुक ३ |
| क्रीडाताल ५ | निर्मल ५ | खण्डताल १३ | कन्दर्प १३ | सुन्दर ४<br>त्रिपुट ४ | कुन्द ४<br>खण्डताल ४ |
| लघुशेखर ६ | कुन्तल ६ | झम्पकताल १४ | जयमङ्गल १४ | वल्लभ ५<br>मलयताल ५ | |
| मलयताल ७ | कमल ७ | चाचुपुटताल १५ | तिलक १५ | मङ्गल ६<br>मृदङ्गताल ६ | |
| कन्दुकताल ८ | नन्दन ८ | चम्पुटताल १६ | ललित १६ | | |

| ७ | ८ | ९ | १० | ११ |
|---|---|---|---|---|
| नि सारुक | अड्डुताल | रासक | एकताली | शुद्धसूड |
| कान्तार १ | शङ्क १<br>लघुशेखर १ | विनोद १<br>आदिताल १ | रामा १<br>खण्डताल १ | पला १ |
| समर २<br>कन्दुकताल २ | कील २<br>झम्पताल २ | वरद २<br>गजलीलताल २ | चन्द्रिका २<br>ललित २ | करण २ |
| वैकुण्ठ ३<br>मुकुन्द ३ | विजय ३<br>तुरगलील ३ | नन्द ३<br>विद्याधरताल ३ | विपुला ३<br>कोकिलाप्रियताल ३ | ठेकी ३ |
| वाञ्छित ४<br>शरभलील ४ | तार ४<br>उमातिलक ४ | कम्बुज ४<br>राजविनोदताल ४ | | वर्तनी ४ |
| विशाल ५<br>द्वितीयताल ५ | नि शङ्क ५<br>वनमाली ५ | | | द्रुमड ५ |
| नन्द ६<br>क्रीडाताल ६ | मकरन्द ६<br>राजताल ६ | | | लम्भ ६<br>रास ७ |
| | | | | एकताली ८ |

इति पञ्चचत्वारिंशोल्लासीयकोष्ठकानि ॥

श्रीहंसः-श्रूयते श्रीरागिण्या रागभेदोऽथ निरूप्यते ।

**रागार्णवे**

**भैरवः पञ्चमो नाटो मल्लारो गौडमालवः।**

**देशाख्वश्चेति षड्रागाः** प्रोच्यन्ते लोकविश्रुताः ॥ १ ॥

**बङ्गपालो गुणकरी मध्यमा दीर्घसन्तकः।**

**धनश्रीश्चेति पञ्चैते** रागा **भैरवसंश्रयाः** ॥ २ ॥

**ललितो गुर्जरी देशी वैराटी रामकृत्तथा।**

मता रागार्णवे रागाः पञ्चैते **पञ्चमाश्रयाः** ॥ ३ ॥

**नटनारायणः पूर्वं गन्धारः सालगस्तथा।**

ततः **केदारकर्णाटौ** पञ्चैते **नाटसंश्रया** ॥ ४ ॥

मेघो मल्लारिका मालकौशिकः प्रतिमञ्जरी।
आशावरी च पञ्चैते रागा मल्लारसंश्रयाः ॥ ५ ॥
हिन्दोलस्त्रिगुणांधाली गौडी कोलाहलस्तथा।
पञ्चैते गौडनामानं रागमाश्रित्य संस्थिताः ॥ ६ ॥
भूपाली हरिपालश्च कामोदी धोरिकस्तथा।
वेलावली च पञ्चैते रागा देशाख्यमाश्रिताः ॥ ७ ॥
अन्ये च बहवो रागा जाता देशविशेषतः।
मारुप्रभृतयो लोके ते च तद्देशिकाः स्मृताः ॥ ८ ॥
न रागाणां न तालानामन्तः कुत्रापि विद्यते।
सन्तोषाय शिवस्यैते गेया बुधजनैः सदा ॥ ९ ॥
यथा नयति कैलासं न गङ्गा न सरस्वती।
तथा नयति कैलासं नगं गानसरस्वती ॥ १० ॥

। अन्यत्रापि ।

भैरवः प्रथमो रागो द्वितीयो मालकौशिकः।
हिन्दोलस्तु तृतीयोऽपि चतुर्थो दीपकः स्मृतः ॥ १ ॥
श्रीरागः पञ्चमः प्रोक्तः षष्ठस्तुमेघसंज्ञकः।
पञ्च पञ्च स्त्रियस्तेषामष्टावष्टौ च पुत्रकाः ॥ २ ॥
भैरवी पुष्करी स्नेहा बङ्गाली च विलावली।
एताः पञ्च स्त्रियो ज्ञेया भैरवस्य पतिव्रताः ॥ ३ ॥
गुण्डगिरी च गन्धारी मालगिरी जितश्रीस्तथा।
धनाश्रीः पञ्चमी प्रोक्ता पञ्चैताः कौशिकस्त्रियः ॥ ४ ॥
भूपाली च देवगिरी वसन्ती सुन्दरी तथा।
आभीरी पञ्चमी प्रोक्ता हिन्दोलस्य पतिव्रताः ॥ ५ ॥
सारङ्गी गुर्जरी तोडी कामोदी प्रतिमञ्जरी।
स्त्रियः पञ्च शुभाः प्रोक्ता दीपकस्य पतिव्रताः ॥ ६ ॥
कर्णाटी चापि वैराटी सावेरी गवरी तथा।
पञ्चमी सैन्धवी प्रोक्ता श्रीरागस्य पतिव्रताः ॥ ७ ॥
सोरठी मालरी चैवाशावरी कानरी तथा।
रामगिरी पञ्चमी च मेघरागपतिव्रताः ॥ ८ ॥

। अथ पुत्राः ।

पञ्चमो देशाख्यो हर्षो बङ्गालो मधुमाधवौ।
विलावलश्च ललिताः भैरवस्याष्ट पुत्रकाः ॥ ९ ॥

मारूमेवाडमिष्टाङ्ग-बर्बराश्चन्द्रकान्तकः।
शेखरो भ्रमिरानन्दो मालकौशिकनन्दना ॥ १० ॥
मङ्गलश्चन्द्रबिम्बश्च सूर्मा नन्दी विभासकः।
वर्द्धनविनोदवसन्ताश्च हिन्दोलस्याष्ट पुत्रकाः ॥ ११ ॥
कालिङ्गः कज्जलो रामः कामलः कुशमञ्चकौ।
लाहुलश्चापि हेमालो दीपकस्याष्ट पुत्रका ॥ १२ ॥
कल्याणो मालवो गौडो गम्भीरो गुणसागरः।
अङ्गो विहागरः कुम्भः श्रीरागस्याष्ट पुत्रका. ॥ १३ ॥
कानरो नटकेदारौ जालन्धरगदाधरौ।
टङ्कसूहशङ्कराभरणा मेघस्याष्ट सुता इमे ॥ १४ ॥
एते परस्परं मिश्रीभूता सहस्रशो रागा नानानामानः सम्भवन्तीति दिक्।

| १ | २ | ३ | ४ | ५ | ६ | ७ |
|---|---|---|---|---|---|---|
| भैरव १ | भैरवी १ | पुष्करी २ | स्नेहा ३ | बङ्गाली ४ | विलावली ५ | पञ्चम १ |
| मालकोश २ | गुण्डगिरी १ | गन्धारी २ | मालगिरी ३ | जितश्री ४ | वनाश्री ५ | मारू १ |
| हिन्दोल ३ | भूपाली १ | देवगिरी २ | वसन्ती ३ | सुन्दरी ४ | आभीरी ५ | मङ्गल १ |
| दीपक ४ | सारङ्गी १ | गुर्जरी २ | तोडी ३ | कामोदी ४ | प्रतिमञ्जरी ५ | कालिङ्ग १ |
| श्रीराग ५ | कर्णाटी १ | वैराटी २ | सावेरी ३ | गवरी ४ | सैन्धवी ५ | कल्याण १ |
| मेघ ६ | सोरठी १ | मालरी २ | आशावरी ३ | कानरी ४ | रामगिरी ५ | कानर १ |

| ८ | ९ | १० | ११ | १२ | १३ | १४ |
|---|---|---|---|---|---|---|
| देशाख २ | हर्ष ३ | बङ्गाल ४ | मधु ५ | माधव ६ | विलावल ७ | ललित ८ |
| मेवाड २ | मिष्टाङ्ग ३ | बर्बर ४ | चन्द्रकान्त ५ | शेखर ६ | भ्रमि ७ | आनन्द ८ |
| चन्द्रविम्ब २ | सूर्मा ३ | नन्दी ४ | विभास ५ | वर्द्धन ६ | विनोद ७ | वसन्त ८ |
| कज्जल २ | राम ३ | कामल ४ | कुश ५ | मञ्चक ६ | लाहुल ७ | हेमाल ८ |
| मालव २ | गौड ३ | गम्भीर ४ | गुणसागर ५ | अङ्ग ६ | विहागर ७ | कुम्भ ८ |
| नट २ | केदार ३ | जालन्धर ४ | गदाधर ५ | टङ्क ६ | सूह ७ | शङ्कराभरण ८ |

**भैरवः** श्वेतवर्णश्च नीलवर्णो हि **कौशिकः** ।
**हिन्दोलः** पीतवर्णश्च रक्तवर्णो हि **दीपकः** ॥ १ ॥
कर्बूरवर्णः **श्रीरागो मेघस्तु** श्यामलः स्मृतः ।

। इति वर्णाः ।

**भैरवो** विद्यते वक्त्रे कण्ठे वै **मालकौशिकः** ।
वक्षःस्थले च **हिन्दोलो दीपकश्चा**पि चक्षुषि ॥
**श्रीरागो** नाभिदेशे तु **मेघो** गुह्यं समाश्रित. ॥ १ ॥
**भैरवः** शरदि प्रोक्तः शिशिरे **मालकौशिकः** ।
हेमन्ते चापि **हिन्दोलो** वसन्ते **दीपकः** स्मृत. ॥
**श्रीरागो** ग्रीष्मकाले तु वर्षायां **मेघ**संज्ञकः ।
उषसि **भैरवो** राग-श्चोदये **मालकौशिकः** ॥
एकयामे तु **हिन्दोलो** मध्याह्ने **दीपकः** शुभः ।
**श्रीरागस्तु** दिनान्ते हि निशीथे **मेघ**संज्ञकः ॥ १ ॥
विशेषस्तु रागार्णवादाववलोकनीयः ।

किञ्च ।

यस्य यस्य च या भार्या पुत्रश्चापि च यस्य यः ।
तत्तत्तस्य तु गातव्यं स्वस्ववेला शुभप्रदा ॥ १ ॥
अन्यभार्याऽन्यरागे तु चान्यवेलान्यपुत्रकः ।
गायिनो नरकं यान्ति हत्या चापि समाप्यते ॥ २ ॥
युक्तो गायति यो नरोऽनवरतं रागेऽन्यदीयां
वधूमन्यस्मिन् खलु चान्यदीयतनयं कालेऽप्यनुक्ते तथा ।
प्रायो याति भयानकं स निरयं, सर्वे दिनान्ते शुभाः
ख्याताः पुत्रवधूकुलेन सहिता रागास्तु कैश्चिद्बुधैः ॥ ३ ॥
गीते वाद्ये च नृत्ये च रक्तिः साधारणो गुणः ।
सा चेदस्ति किमन्येन दूषणेन गुणेन वा ॥ ४ ॥
सुस्वरं सरसं चैव सरागं मधुराक्षरम् ।
सालङ्कारं प्रमाण च षड्विधं **गीतलक्षणम्** ॥ ५ ॥
स्वरेण पदसंयुक्तं छन्दसा च सुसंयुतम् ।
समात्रं च सतालं च **सुगीतं** तेन भण्यते ॥ ६ ॥
शब्दानुशासनज्ञानमभिधानप्रवीणताम् ।
गणच्छन्दोर्थवेदित्वमलङ्कारेषु कौशलम् ॥ ७ ॥

तौर्यत्रितयचातुर्यं हृद्यशारीरशालिता ।
लयतालकलाज्ञानं विवेकोऽनेककाकुषु ॥ ८ ॥
देशीरागेषु विज्ञत्वं वाक्पटुत्व सभाजय: ।

। इत्युत्तमः ।

प्रबन्धगाननिष्णातो विविधाकृतिकारकः ।
रागरागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गकोविदः ॥ १ ॥
तदेतन्नारदादिभ्यो दत्तमादौ स्वयम्भुवा ।
नारदेन ततो गानं पृथिव्यामवतारितम् ॥ २ ॥
बालो वेत्ति मृगो वेत्ति वेत्ति गानरसं फणी ।
यतो गीते विलीनास्ते सर्वथा चित्तवृत्तिभिः ॥ ३ ॥
अपि ब्रह्मपरानन्दा-दिदमभ्यधिकं परम् ।
जहार नारदादीना चित्तानि कथमन्यथा ॥ ४ ॥
ब्रह्मा येन विमोहितो मधुरिपुः शक्र. शिवावल्लभो-
गन्धर्वासुरयक्षराक्षससुरा विद्याधराः किन्नराः ।
सिद्धाः पञ्चजना विहङ्गमपशू रङ्गा मृगा जानका-
स्त्रैलोक्यं निखिलं, करोतु सततं राग. स नो मङ्गलम् ॥ ५ ॥

## इति रागादिलक्षणम् ।

किञ्च ।

नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ॥ कवित्वं दुर्लभं चापि शक्तिस्तत्र सुदुर्लभेति-पुराणान्तरे कवित्वप्राशस्त्यात् सद्भक्तैर्गद्यपद्यादिलक्षणैरनकरात्मनिबद्धैः काव्यैः कृत्वा श्रीशक्तिशिवैक्यस्वरूपमुल्लास्यम् ॥

अथ हंसी-भोः कवे ! गद्यपद्यकाव्यलक्षणमप्युच्यताम् ।

हंसः-छन्दोनिबद्धं पद्यम् ।

तद्रहितं गद्यम् ।

रसात्मकं वाक्यं काव्यम् ।

कवीश्वरि ! यद्यपि-

प्रशान्तशास्त्रार्थविचारचापलो निवृत्तनानारसकाव्यकौतुकः ।

'काव्यालापांश्च वर्जयेदि'त्यादि सद्भक्तेषु काव्यस्य प्रातिषिध्यम् ।

तथापि ।

'काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च । शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः' इत्यादि वाक्यैः काव्यस्य परमेश्वरांशत्वान्न कश्चन निषेधः ।

फलमपि श्रूयते ।

लाभः पूजा ख्यातिर्धर्मः कामश्च मोक्षश्च । इष्टानिष्टप्राप्तित्यागौ ज्ञानं फलानि काव्यस्य ॥ इत्यादि ।

सनकशुकनारदव्यासादयोऽपि जीवन्मुक्ताः सन्तः कवित्वप्रबन्धरचनासु प्रवृत्ताः ।

प्रिये ! यद्यपि कवित्वरचनायां दोषबाहुल्यमाविरस्ति तदपीश्वरगुणवर्णने न कश्चिद्दोष ।
उक्तश्च **श्रीभागवते व्यासं प्रति नारदेन** अबद्धमपीत्यादि ।
श्रीपरमेश्वरगुणवर्णनव्यतिरिक्ते काव्ये तु समीचीनेऽपि दोषस्तत्रैव श्रूयते ।
यथा
'न यद्वचश्चित्रपदं हरेर्यशः ।'
इत्यादि ।
किञ्च ।
काव्यस्य शब्दार्थौ शरीरम् ।
रस आत्मा ।
गुणाः शौर्यादिवत् ।
दोषाः काणत्वादिवत् ।
रीतयोऽवयवसंस्थानवत् ।
अलङ्काराः कुण्डलादिवत् ।
किमुक्तम् ?
शब्दार्थरसगुणरीत्यलङ्कारोल्लसितं काव्यस्वरूपम् ।
भाषाचतुष्टयस्यापि काव्याङ्गत्वम् ।
अत्राह हंसी । अन्यत्तु विज्ञापितं परन्तु गुणरीतिभाषाः क भणिताः ?
हंसः-सत्यं सत्यं नोदितं हि तत् सम्प्रति श्रावयामः ।
उत्कर्षसम्पादकत्वं गुणत्वम् ।

औदार्य समता कान्ति-रर्थव्यक्ति : प्रसन्नता ।
समाधिः श्लेष ओजोऽथ माधुर्य सुकुमारता ॥

**इति कवित्वे दशगुणाः ।**

**लाटी** हास्यरसे प्रयोगनिपुणै रीतिः प्रवन्धीकृता
**पाञ्चाली** करुणे भयानकरसे शान्ते रसे **मागधी** ।
**गौडी** वीररसे च रौद्रजरसे वत्सोमदेशोद्भवा ( ? )
बीभत्साद्भुतयो**र्विदर्भ**विषया श्रृङ्गारभूते रसे ॥ १ ॥

**इत्यादि षड् रीतयः ।**

संस्कृतं प्राकृतं चैवाऽपभ्रंशो भूतभाषितम् ।
इति **भाषा**श्चतस्रोऽपि यान्ति काव्यस्य कायताम् ॥ १ ॥
**संस्कृतं** स्वर्गिणां भाषा शब्दशास्त्रेण निश्चितम् ।
**प्राकृतं** तज्जत तुल्यदेश्यादिकमनेकधा ॥ २ ॥
तस्मात् संस्कृतात् जातं तज्जं, तेन संस्कृतेन-
तुल्यं तत्तुल्यं, देशे भवं देश्यं, तज्जतत्तुल्य-
देश्यानि आदौ यस्य तद् एतादृशम् प्रकृतिः संस्कृतं,
तत्र भवं प्राकृतम् । अनेकधा वर्त्तते सौरसेनी मागधी च ॥

अपभ्रंशस्तु यच्छुद्धं तत्तद्देशेषु भाषितम् ।

यद्भूतैरुच्यते किञ्चित्तद्भौतिकमिति स्मृतम् ॥ १ ॥

ते ते च ते देशाः तत्तद्देशाः कर्णाटमहाराष्ट्रादयः , तेषु शुद्धम् अपरभाषाभिरमिश्रितं यद्भाषितं सोऽपभ्रंशः । भूतानां पिशाचानामिदं भौतिकं पैशाची भाषेत्यर्थः ।

इति भाषाचतुष्टयम् ।

हंसि ! प्राकृतगद्यपद्यैः श्रीपराशक्तिः प्रार्थ्यते ।
चिट्ठ सत्ति तं अह्म मुहपउमे ।
अप्पणो णाधेण सद्धं ।
चलणचिण्हं पाडे हिअअंबुअम्मि णाच्च ।
अहंउत्तणेण कुणती कलुणद्दिट्ठि मण ।
अर्थः तिष्ठ शक्ते त्वं मम मुखपद्मे ।
आत्मनाथेन सार्द्धं ।
चरणचिह्नं पातय हृदयाम्बुजे ।
नृत्याखण्डत्वेन कुर्वन्ती करुणार्द्रां दृष्टिं मयि ।
इत्यर्थः ॥ द्वितीयं गद्यम् ।
सिरीविज्जे तुह्म पसाओ ममम्मि णिलंदरं अच्छु ।
एसो एव्व मए मणोरधो ।
अर्थः ।
श्रीविद्ये तव प्रसादो मयि निरन्तरमस्तु, एष एव मम मनोरथः ॥ २ ॥
दिण्णं तुमे मज्झं सुहं सुमुहि तुहदासस्स ।
णत्थि अहुणा को वि अहिलासो मे मणे ।
किं वत्तव्वं ।
एह्मी तुह्माणं दंसणं अवेत्थिअं अत्थि ।
अर्थः-दत्त त्वया मह्यं सुखं सुमुखि त्वद्दासस्य ।
नास्त्यधुना कोप्यभिलाषो मे मनसि ।
किं वक्तव्यम् ।
इदानीं युष्माकं दर्शनमपेक्ष्यमस्ति ॥ ३ ॥
दड्ढं जम्मबीअं णक्खु दुहं किं वि अह्मेसु ।
णाअं तत्तं णिहिलं सिरीललिआये अह्मेहिं ।
रम्मउ रम्मउ सिरीतिउरसुंदली विज्जुली व महहिअअणहे ।
किंहिअं हुआ अह्मे कदत्था ॥ ४ ॥
अर्थः ।
दग्धं जन्मबीजं न खलु दुःखं किमप्यस्मासु ।
ज्ञातं तत्त्व निखिलं श्रीललिताया अस्माभिः ।
रमतां रमतां श्रीत्रिपुरसुन्दरी विद्युदिव मद्धृदयनभसि ।
किमधिकं जाता वय कृतार्थाः ॥ ४ ॥

को इह विह्मओ
जं तुह रसिआ पलमसुहिणो ।
णवजोव्वणं इत्थि तुह्मकलामत्त रमावेऊण बहुणो पुलिसा सुहिणो दिट्ठा ॥ ५ ॥

**अर्थः**

क इह विस्मय.
यत्तव रसिका. परमसुखिन ।
नवयौवनां स्त्रियं त्वत्कलामात्रां रमयित्वा बहव पुरुषाः सुखिनो दृष्टाः ॥ ५ ॥
जिणउ जिणउ महाराअराइस्सरी सिरीविज्जा ण तारिसि इअरा सत्ती ।
अहो बह्मविज्जे तुमं एव्व अणवरदं अह्मेहिं सुमरिज्जसि ।
अदो अह्मे ण विहामो कत्तोवि ।
सच्चं सत्ति तुह्म भत्ते तंणेव रक्खसि ॥ ६ ॥

**अर्थः**

जयतु जयतु महाराजराजेश्वरी श्रीविद्या न तादृशी इतरा शक्तिः ।
भो ब्रह्मविद्ये त्वमेवानवरतमस्माभि. स्मर्यसे ।
अतो वयं न विभीमः कुतोऽपि ।
सत्यं शक्ते त्वद्भक्तान् त्वमेव रक्षसीत्यर्थः ॥ ७ ॥

## । अथ पद्यानि ।

तुह चलणकमलजुअलं कर मह हिअअंदरे सुहं तिउले ! ।
होइ जणो जस्स सिवो संफसा मारिसो माअे ॥ १ ॥

**अर्थः**

तव चरण कमलयुगल कुरु मम हृदयांतरे शुभं त्रिपुरे ! ।
भवति जनो यस्य शिवः संस्पर्शान्मादृशो मातः ॥ १ ॥
तं णमाम ललिदेसि जगंब वल्लहेण सहिदं हु सिवेण ।
संजणस्स हिअअे विहलंति विण्हुरुद्दचदुअस्सणिसेव्वं ॥ २ ॥

**अर्थः**

त्वां नमामि ललितेशि ! जगदम्ब वल्लभेन सहितां हि शिवेन ।
सज्जनस्य हृदये विहरन्ती विष्णुरुद्रचतुरास्यनिषेव्याम् ॥ २ ॥
सुमरिज्जइ सत्ति तुह्म णामे सुमराविज्जइ मुत्तिदं जगम्मि ।
ण तधावि तुमं मइप्पसण्णा ण मइत्तो विगआ जदो णु भंती ॥ ३ ॥

**अर्थः**

स्मर्यते शक्ते त्वन्नाम स्मार्यते मुक्तिदं जगति ।
न तथापि त्वं मयि प्रसन्ना न मत्तो विगता यतो ननु भ्रान्ति-
रिति पर्यायः ॥ ३ ॥
इत्थंविधाः प्राकृतभाषाः ।

**इति श्रीहंसमिट्ठुभणिते श्रीहंसविलासे रागादिकथनं नाम षट्-चत्वारिंशोल्लासः ॥ इति भक्तियोगः ।**

श्रीहंसः-श्रूयते साध्व्या ? अधुनारब्धं श्रृणुष्व ।

अथ तौ रसिकौ श्रीमदर्द्धनारीश्वरमूर्ति श्रीरासशालां नीत्वा रासक्रीडां कारयेताम् ।

रासार्थं ।

राजमानचिदानन्दाखण्डसत्सामरस्यतः ।

सचराचरसेव्यत्वाद्रास इत्यभिधीयते ॥ १ ॥

रसमयः कश्चिच्चमत्कारविशेषो **रासः,** स च सर्वत्र व्याप्तः सामरस्यात् **'रसो वै स'इति श्रुतेः ।** रस सच्चिदानन्दलक्षणं शक्तिशिवैक्यरूपं, तस्य विलासो **रासः**-अनिर्वचनीयालीला चमत्कृतिः इति **तात्त्विकोर्थः ।**

**श्रुतिश्च ।**

एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रसः ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः स एष रसानां रसतमः परमः पराद्ध्योंऽष्टमो य उद्गीथः ।

इति सकलप्रपञ्चमूलभूतः श्रीमदुद्गीथरूपः परमशिवः पूर्णरस ।

तन्मयः सकलप्रपञ्चो रासः रसाभिन्न एव ' सर्वं खल्विदं ब्रह्म ' ।

' सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्त ' इत्यादि **श्रुतिभ्यः ॥**

कान्ते ! किं कथनीयं ? धिगबुधान् यदध्यक्षमुल्लसितः श्रीरासो नावबुध्यतेऽविचार वैवश्यात् । तिरस्करिणीकरकमलगताऽज्ञानपटप्रच्छन्नतया पामरैः किं प्रेक्ष्यते ? श्रीरसिका एव रसयन्ति राससुखम् ।

प्रिये ! प्रकाशमन्तरेण रूपवद् विचारादृते विपश्चिद्भिरपि श्रीरासः कथङ्कारं शक्यः कलयितुम् ॥ अतोऽत्र वास्तवविचारे, श्रीरसिका एव कलयन्ति श्रीललितालीलां नेतरे । दुर्मुखास्तु मौर्ख्याद्दूषणं ददते, का क्षतिः ?

युवते ! यस्य जीवस्य यादृग् ज्ञानं तेन बत तादृगेव जल्प्यते । जगति जीवास्त्वनन्ताः अतः सामरस्यलक्षणः श्रीरासो दुर्गुणसत्त्वानामगोचर इति ।

श्रृणुषे राजहंसि ! **रासो द्विविधः, रहः प्रकाशभेदात् । आन्तरो बाह्यश्च । तत्रान्तरः श्रेष्ठः अन्यः सामान्यः ।** तत्राधिदैवतदृष्ट्या सप्रणामं **सामान्यरासः** प्रोच्यते । अथ ह खलु सकलजगदाधारभूता श्रीनगरमहासाम्राज्ञी श्रीपराशक्तिः काचन श्रीनगरान्तरे वर्त्तते सा तु नानास्त्रीपुंससनामरूपात्मिकाऽस्ति ।

' परास्य शक्तिर्विविधैव श्रूयते ' **इति श्रुतेः ।**

अस्यानुभूतिप्रत्यक्षस्य परमशिवस्य श्रीपरानाम्नी शक्तिरेकैवास्ति तथापि नानामिथुन-नामरूपत्वान्नानाविधेव प्रतिभासते ।

श्रीरसिकैरेतादृशी दृश्यते ।

पशुभिस्तु श्रुत्यादिषु शास्त्रेषु श्रूयत एव ।

हृदयान्धैः सद्गुरुमन्तरा कथं द्रष्टुं शक्या ।

तस्या एव श्रीपराशक्तेरखण्ड खेलनाय परमशिवाख्यानिकं द्वितीयं पुंरूपं वर्त्तते ।

तयोर्विलसनाय श्रीनगरमस्ति ।

तस्याः श्रीपराशक्तेर्नानानामरूपाः कोटिशः कलाः श्रीपुरान्तरे च स्फुरन्ति ।

'एकैवाहं जगत्यत्र द्वितीया का ममापरा । पश्यैता दुष्ट ! मय्येव विशन्त्यो मद्विभूतय'

**इति मार्कण्डेये ।**

एकदा तु सैव श्रीपराशक्तिः सर्वत्र सर्वदा विलसन्त्यपि विशेषस्वविलासचमत्कारज्ञापनाय **कृष्ण** इति पुमाख्यामाविष्कृत्य श्रीयमुनाभ्यर्णस्थितवृन्दावनभूमिकायां श्रीराधिकाद्याभिरात्म-कलामूर्त्तिभिर्नानानामरूपाभिः शक्तिभिः सहाऽनन्यत्वेनैव रासक्रीडां कृतवतीति ।

कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा । वेणुनादसमारम्भादकरोद्विवशं जगत् ।

इति ।

**तन्त्रराजे ॥**

अहं वहामीह गतिं तदीयां रूपद्वयं नित्यमतोऽस्य विष्णोः । एकेन नित्यं नियतो विहारस्तथा द्वितीयेन जगत्प्रवृत्तिः ॥ १ ॥

**इति वृन्दावनमाहात्म्ये ब्रह्मवाक्यम् ।**

तद्वत् श्रीनगर्यामपि **परमशिव** इति पुमभिधानं धृत्वा स्वाद्याभि' शतसहस्रकोटिभिः शक्तिभिः समं रासक्रीडां कुरुते ।

तत्र प्रधानभूता श्रीपराशक्तिः परशिवस्य पट्टराज्ञी शुद्धस्वकीया, काश्चित्सामान्याः स्वीयाः काश्चन परकीयावदाचरन्ति । सख्योऽप्यन्याः श्रीपट्टराज्ञीमुख्यानां दौत्याय चेतराः कतिचन दूतीनाम्न्यः नर्त्तक्यो वादक्यो गायक्यश्च बहुशः सन्ति श्रीपुरे ॥ तथैव सहस्रशः श्रीपरम-शिवस्य सखायः सेवकाश्च । किं वक्तव्यं तदपेक्ष्ययैषदिदं समग्रं जगत् ॥

एतावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वभूतानि त्रिपादस्यामृतं दिवीति

**श्रुतेः ।**

त्रिपादूर्ध्व उदैत्पुरुष, पादोस्येहाभवत्पुनः ।

इत्यपि ।

**स्मृतिश्च ।**

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति ।

श्रुतिमूर्त्तय एव त्रिपुराप्रभृतयः सकलाः शक्तयः । तदर्थं मूर्तिभूताः श्रीपरमशिवस्य सर्वे सखायः सर्वासां श्रुतीनां साररूपा श्रीपराशक्तिः परिपूर्णशक्तिरनिर्वाच्या सवश्रुत्यर्थानां परमार्थरूपः श्रीपरमशिवो वाङ्मनसयोरगोचरः ॥

श्रूयते तन्वङ्ग्या ? श्रीनगरे सर्वस्त्रीपुंसलक्षणा श्रीपराशक्तिरेव नानानामरूपैव भूत्वा खेलायतीति दिक् ।

सकलं कलयितुं शिवोऽप्यकल्पः ।

रसिके ! समाकर्ण्यताम् ।

श्रीनगरमध्ये सर्वानन्दमयं नामास्ति पुरोत्तमम् । तत्र चिन्तामणिमन्दिरमास्ते तदेकदेशे श्रीरासाय तप्तकनकोत्थिता महानर्घ्यमणिव्रातखचिताः कोटिश स्तम्भा भूम्या रोपिताः सन्ति, तेषु सद्रत्नोद्योतिताः सहस्रशः सौवर्णवलिकाः समारूढाः कर्णवलिकाश्च सकलस्तम्भ-मध्यप्रदेशे सद्रत्नव्रततिजटितशातकुम्भोत्पन्नमहाकलशोज्ज्वलं शोभते शिखरम् । तन्मध्ये च

सूक्ष्मतरसौवर्णसूत्रसमुत्पन्नविपुलपटान्तश्चित्रितार्द्धनारीश्वरस्वरूपोल्लासिमहामङ्गलध्वजः स्फुरति। दशसु दिक्षु च दिक्पालानां ध्वजाः पताकाश्च विचित्राः। तन्मण्डपाभ्यन्तरे तु चन्द्रातपछत्रचामरतालव्यजनमुकुरकौसुममालिकाप्रदीपपङ्क्तिकादीनि विविधान्युपकरणान्युल्लसन्ति॥ वेणुवीणामृदङ्गकाहलझर्झरीप्रभृतीन्यनन्तान्यातोद्यानि वर्त्तन्ते। वसन्तादिषु षड्ऋतुषु यद्यदुचितं वस्तुजातं तत् सर्वं तत्र न्यस्तम्। कोटिशः काञ्चनकलशा अमृतपूर्णाः, चषकानि च कतिचन, नानाविधानि वस्त्राणि, परिष्काराः, नैवेद्यं, कनककरण्डे निबिडितनागवल्लीदलानि। इत्थंकारमनेकविधवस्तुजालोल्लासिनी श्रीरासशालाऽस्ति श्रीनगरगर्भे। तत्रादौ श्रीरासशालायां रिरंसया केवलं शिव एवागत्य तन्मध्यप्रदेशे सद्रत्नविरचितोर्ध्वासने तिष्ठन् मणिमण्डिततप्तसुवर्णसम्भूतं वेणुं वादयते ततस्तन्मुरलीनिनादेनाकारणमवबुध्य श्रीपराशक्तिप्रभृतीनि स्वान्तःपुराणि कृतमकृतं कृताकृतमिति समाप्य श्रीपरमशिवपार्श्वमुपयान्ति।

अत्राह हंसी-भोः कुशलतर! कृतमकृतं कृताकृतमिति पुनर्विशदं वग्धि।

श्रीहंस -महिले! त्वमप्येधि सावधाना।

काचित् शक्तिः मज्जनाङ्गरागालङ्करणचैलादिभिः स्वकलेवरमलङ्कृत्य स्थिता तावद्वंशीशब्दमाश्रुत्य ताम्बूलपूर्णानना तदैव सवेग प्रस्थिता; इत्यादिकं कृतमित्युच्यते।

एका तु अकृतस्नानादिका तदैव धावति।

अपरा चाधृताभरणा प्रतिष्ठते।

इतराऽपि परिविष्टपक्वान्नाद्यं स्वर्णस्थालं परिहृत्य वैह्वल्येन जिहीते।

अन्या त्वाल्या दत्तं ताम्बूलमेवमेव व्युदस्यार्यत एवारात्। एवमाद्यमकृतमित्यादि वेद्यम्।

किञ्च।

काचन शक्तिः कज्जलाक्तवामाक्षी अनक्तेतरनेत्राकर्णितमणिवेणुनिनदोत्थाय पीठादियर्त्ति वैवश्यात्।

अपराऽपि चम्पकतैलाभ्यक्तचिकुरनिकराऽविरचितवेणिका वेणुरवाकर्णनमात्रात् प्रधावते।

परिधत्तचण्डातकचोलिकाऽपरिधत्तपट्टकूलाऽवधृतवेणुस्वना चलति चेतरा।

एवमादिकं तु कृताकृतमित्यवगन्तव्यम्।

किं पुनः प्रेयसि वैह्वल्यात् कतिचन शक्तयस्तु वंशीशब्दश्रवणमात्रतः कन्दर्पमदमन्थराः। केशपाशे कर्णाभूषणं कर्णे नासाभूषां च घोणायामङ्गुलीयकमङ्गदाद्य च कण्ठे हृदयालङ्करणं करयोश्चरणघुघुरू बाह्वोरेवं प्रायोऽलङ्कारव्यत्यासमस्मरन्त्यः स्वस्वसद्मभ्यः श्रीरासशालां प्रति ससम्भ्रमं द्रवन्तीति।

इत्थं निजनिजमन्दिरतो जवन्तीरनन्तनामरूपाः सहस्रशः शक्तीरालोक्य स्वस्वसहचर्योऽन्वञ्चन्ति कतिचित्।

किञ्च।

श्रीमहाराज्ञीमुख्या अनन्ताः शक्तीरितस्ततः सत्वरं धावन्तीर्निध्याय स्वस्थानतः श्रीपरमशिवस्य सहस्रशः सखायोऽपि सवेगं स्वामिनः पार्श्वे समायान्ति, गायकवादकभक्तजनवृन्दं च गच्छति।

जाये! यत्र तत्र जय शक्ते! जय शिव! जय युगलकिशोरेति महानुत्थितः श्रीरासशालायां कोलाहलः शब्दः।

आकर्णयति भवती ?

धन्या श्रीश्रीनगरी धन्या गावश्च गोपिका धन्याः। धन्यः श्रीगोपालो धन्याः सख्यः सखायश्च ॥

इत्येवमादयः शब्दाः श्रीशैवभक्तवक्त्रेभ्यः समुत्तिष्ठन्ति श्रीरासशालायाम्।

अथ हंसी-भोभोस्तात्त्विक! उपक्रमत एतावत् पर्यन्तं भवतां भारत्यभ्युपगता अत्र तु हृदयं सन्देग्धि। अतः पृच्छ्यसे किञ्चिद्वचनवैचित्र्यम्।

श्रीहंसः-माशङ्क्यं पृष्टव्योऽसंशयमहं भवत्या।

हंसी-श्रीशिवयो रासः स्वामिभिः श्राव्यते खलु।

किं पुनर्गावः गोपिका गोपाल इति तु श्रीराधाकृष्णरासे श्रूयते नात्र क्वचित्; तत् स्फुटीकरोतु कान्तः।

श्रीहंसः-गृहिणि! गृहाण हृद्यं मद्गदितम्।

गोशब्देन वाणी तस्या बाहुल्यात् गाव इति बहुवचनम्।

गावो वाण्यः श्रुतय इति यावत् तन्मूर्त्तयः शक्तय इति **तात्त्विकोऽर्थः।**

गवां सामान्यानां श्रुतिमूर्त्तिभूतानां शक्तीनां कामेश्वर्यादीनां पालयित्री श्रीपराशक्ति गोपीत्युच्यते।

गोपालश्च परमशिव एव।

किञ्च।

वृन्दावनेऽपि राधाकृष्णयोर्विहरणाय श्रुतय एव गवां रूपाण्यादायाऽऽविर्भूता न तु साधारणधेनुजातिः।

अन्या गोप्योऽपि श्रुतिमूर्त्तय एव।

तदर्थभूताश्च गोपा, न तु वल्लवजातीयाः।

अत एव गोकुलेश, गोपाल, गोविन्द, गिरन्धर, गिरिधर, गोपीनाथ, गोस्वामीत्यादयः शब्दाः श्रीपरमशिववाचकाः।

गोपी, गोपालिका, गोस्वामिनीप्रभृतयः श्रीपरशक्त्यर्थाः।

नात्र काचन विचिकित्सा।

श्रीशक्तिशिवयोः सर्वं सम्मतम्।

किञ्चोपक्रान्तमाकर्णय।

श्रीरासशालाभ्यन्तरं सत्वरमुपागता श्रीमहाराज्ञीमुख्याः सकलाः शक्तीरालक्ष्य श्रीरासेश्वराज्ञप्तः समग्रः आलिजनो व्यस्तस्खलितालङ्करणाः पुनरलङ्कुर्वन्ति। श्रीगोपीपतिरेव श्रीगोपाली स्वकरकमलैरलङ्कुरुते। नानाभरणाद्यैरादौ श्रीपराप्रभृतीरखिलाः शक्तीर्भूषयित्वा श्रीरासक्रीडामारभते।

अत्रावसरे सर्वासां प्रेमप्राचुर्येण श्रीपरमशिवः केवलमप्यनेकात्मकः शक्तिसङ्ख्यकः प्रादुरास्ते।

प्रिये! श्रीनगरस्य महासम्राडित्थङ्कारं मिथुनीभूय मण्डललीलां रचयति।

तत्र पार्थक्येन शक्त्योः शक्त्योरन्तराले शिवाः, शिवयोः शिवयोरभ्यन्तरतः शक्तयस्तिष्ठन्ति मण्डलीभूतसकलशिवशक्तीनां गर्भे श्रीगोकुलेश्वरौ तिष्ठतः, शिवानां वामकरेषु शक्तीनां सव्यकराः सव्येषु च वामाः, शक्तीनां वामहस्तेषु शिवानां दक्षदोषः दक्षेषु च वाम-

पञ्चशाखाः, श्रीरासेश्वरस्य वामकरकमले श्रीगोस्वामिन्याः सव्यकरकमलम् । हस्तद्वय मन्यद्भावदर्शनार्थमेवमेव तिष्ठति पाणिग्रहमन्तरेण क्रीडाया अनौचित्यात् ।

ततो नानावाद्यान्यादाय वादकगणो गायकगणो भक्तसमूहश्च श्रीगोकुलेशयोः सकलमण्डलश्रेष्ठयो. पृष्ठतस्तिष्ठन्ति तत्र पुरा स्वरच्छन्दोविरामरागतानतालोल्लसच्छ्रीसामश्रुतीर्गायत्सु श्रीमदुद्गात्रादिषु गायकेषु श्रीगोकुलनायकादिसकलमण्डली तत्तद्भावभावाद्यं ज्ञापयन्तीतरेतरं नर्त्तयति ।

**श्रुतिः**-अभि त्वा शूर नो नुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ।

**व्याख्या**-हे शूर विक्रान्त इन्द्र सर्वैश्वर्यसम्पन्नपरमेश्वर ! त्वा त्वां अभिनोनुमः वयं भृशमभिष्टुम तत्र **दृष्टान्तः** अदुग्धा इव धेनवः अकृतदोहाः गावः आदरेण यथा वत्सान् प्रति हंभारवं कुर्वन्ति तद्वद्वयं श्रुतय.स्तुम इत्**यर्थः** । कीदृशम् ? अस्य जगतः जङ्गमस्य ईशानमीश्वरम् । तस्थुषः स्थावरस्य ईशानं स्वर्दृशं सर्वदृशं सर्वज्ञमित्**यर्थः** । अस्या ऋचः **साम रथन्तरनाम**कं गायन्ति । एवमन्येषामपि बहूनां साम्नां गानमुद्गात्रादयः कुर्वन्तीति दिक् ।

शृणोति हंसी ?
वयमपि सामगाः स्मः ।
किञ्च तदनन्तरं च जेगीयन्ते ।
इत्थं पूर्वतः श्रुतीर्गात्वा पश्चात् पदक्रमादि गायन्ति तदनन्तरमुपनिषदः ।

एवमादौ वेदान् प्रगाय करबन्धान् छोटयित्वा स्फुटभावदर्शनपुरःसरं सकलश्रुत्यर्थ सम्भृतानि गायन्ति ।

श्रीध्रुवपदगायने श्रीवाणी तु तत्रोपवीणयति ।
श्रीललिता तु ताल वादयते ।
मधुमती ध्वानयति मधुरध्वनि मृदङ्गम् ।
श्रीराजमातङ्गी च तन्त्र्यारवीति ।
नदति च श्रीनन्दाया आनकः ।
रणति श्रीकालीकरकमलोल्लासिकाहलवृन्दम् ।
श्रीजयायाः करेषु झर्झर्यः ।

विमलरत्नोल्लसिततप्तसुवर्णसम्भवो वेणुस्तु स्वनति श्रीपराशक्तेः करपल्लवोल्लसितः ।

अङ्गने ! इत्थमनेकनामरूपात्मकमनन्तरत्नोद्योति श्रीवादित्रवृन्दं वादयानाः श्रीपरशक्ति प्रभृतयः श्रीपरमशिवमुख्यान् शिक्षयन्त्यः खेलयन्तीति दिक् ।

ततः परस्परं शिवशक्तिमण्डलं करकमलैर्मणिबन्धानाबध्य बाहूंश्च निबध्य मुखपङ्कजेभ्यः फूत्कारस्वनं मुञ्चमानमितस्ततो बभ्रमीति श्रान्तमिवावलोक्यालीजनः सदंशुकैरास्यादिष्वाविर्भूतं प्रस्वेदं प्रोञ्छति ।

ततः श्रीमण्डललीलार्थमाविर्भूतः सर्वः शिवव्रातः श्रीपरमशिवेऽन्तर्गतः सकलशक्तिमण्डलीपरिवृत एक एव पुरुषः श्रीपरमशिवः ।

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे राजयोगे मण्डलकेलिकथनं नाम सप्तचत्वारिंशोल्लासः ।**

श्रीहंसः-अथ पुनः श्रीपराप्रभृतयः सर्वाः शक्तयः श्रीपरमशिवेन सार्कं क्रीडितुकामाः केलिकुतूहलकलापमापादयन्ति ।

**श्रीगोपाली** स्वालीकरकमललातमहर्घ्यमणिमण्डितकनककलशतः काञ्चनचषकं पीयूषरसेनापूर्य श्रीगोपालं दक्षकरेण क्रोडीकृत्य भोः प्रेष्ठ ! पिपासाऽस्तीति पाययति श्रीगोपीनाथोऽपि पुरा तां पाययित्वाऽथ निपीयते ।

**श्रीसौभाग्यविद्या** च स्वसखीभिराहृतं विविधपक्वान्नपूर्णं सौवर्णस्थालं स्वीकृत्य स्वामिनोऽभिमुखमायाता अहो जीवन ! त्वां जिजामयिषामीति स्वालीधृतकनकस्थालतः स्तोकं स्तोकं स्वयमुध्धृत्य तत् पक्वान्नं श्रीभगवन्त भोजयति भगवानपि श्रीस्वामिनीमुखाभ्यः सर्वाभ्य. किञ्चित् किञ्चिदादौ स्पर्शयन्नुपयुङ्क्ते उच्छिष्टं च निदुमुखेभ्यो भृत्यजनेभ्यो विलभते ।

श्रीश्यामलाऽपि काञ्चनतन्तुग्रथिता विचित्ररत्नस्तबकान्तरा धवलारुणनीलवर्णानां फुल्लकमलानां कण्ठादापादलम्बायमाना मालिका. सत्रपमारोपयति श्रीकान्तस्य कण्ठ कमलनाले ।

**श्रीललिता** च स्वाल्यार्पितं त्वगेलाजातीपत्रीपूगचूर्णलवङ्गजातीफलकस्तूरीकर्पूरादिपूरितं ताम्बूलमम्बुपाययन्ती चर्वयति चतुरवरं श्रीकान्तम् सोऽपि तदर्धं तां चर्वयित्वा तदनु स्वयं चर्वति तदर्धम् ।

**श्रीकाली** तु कोटिदलकमलमुपाददाना भोः प्रेयः ! जिघ्र जिघ्रेदं मधुरसौरभभृतं शतपत्रमित्याभिमुख्येन स्वामिनं शिङ्घयति ।

शिवोऽपि तदाघ्राय श्रीपट्टराज्ञीप्रभृतीः सर्वाः शक्तीरेकैकपत्रपरागार्पणेनाघ्रापयन् जिघ्रति ।

अन्यच्च ।

**चित्राशक्तिः** चन्द्रचन्दनमृगमदकङ्कोलादिमहासुगन्धघनेन श्रीगोवर्द्धनस्य निर्मल-ललाटपटले स्मितास्यसरसिरुहा तिलकमालिखति ।

बाहुहृदयोदरादिषु च शक्तिमुद्राश्चित्रयति ।

अलिकतिलकान्तराले मृगमदबिन्दुं रचयति ।

चर्चयति,चान्यच्छरीरम् ।

**श्रीतारा**शक्तिस्तु महामूल्यमुक्तास्तवकलतामाधत्ते मुकुटैकदेशे ।

**श्रीभगमालिनी** च भो भो भर्त्तस्त्वां परिरिप्सास्तीत्युच्चरन्ती ससम्भ्रमं श्रीसुन्दरवरं निजभुजवल्लीभ्यां परिरभते ।

**श्रीकामकला**ऽपि कन्दर्पमदाकुला वामदृशा तद्भावं दर्शयन्ती श्रीवल्लभं कामाकुल करोति ।

**श्रीचिच्छक्तिः** चकितहरिणनेत्रा सहर्षं श्रीभर्त्तुरभिमुखं तिष्ठन्ती साक्षं तद्गलं चुम्बति ।

**श्रीहसन्ती** हृष्टहृदया **श्रीविहारिणो** हस्तलतामुत्तोल्य स्वकण्ठे स्तनमण्डले च निधाय तत्तलं सञ्चुम्ब्य हृष्यति ।

इत्थं नानानामरूपात्मिकाः कतिशः शक्तय इतस्ततः' परमसुन्दरवरं परिवृताः कतिचन केलिकुतुकानि प्रकुर्वाणाः श्रीरमणं रमयन्ति ।

श्रीशिवोऽपि सच्चिदानन्दमूर्त्तिः परिपूर्ण, परात्परो निर्विकारो निरञ्जनो निर्लिप्तः स्वाच्छन्द्येन सर्वाभी रमणीभि, सह रिरंसते।

सुन्दरि! मा शङ्क्य किमप्यत्र प्राकृतम् अद्वैतत्वात्। यथेच्छस्य श्रीरासेश्वरस्य विहारार्थं नानानामरूपत्वम्। तत्त्वतस्त्वेकमेव किञ्चित्।

एकमेवाद्वितीयं ब्रह्म।
सर्वं खल्विदं ब्रह्म।
नान्योऽतोऽस्ति दृष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ते-
त्यादिश्रुतिभ्यः।

प्राकृतं जगदप्यखिलं श्रीरासेश्वरादनन्यमेव! अविद्याप्रभावाद् भिन्नमिव भासमानमपि वस्तुतोऽभिन्नमेवेति सर्वश्रुतिसिद्धान्तः।

स्वच्छन्दस्य श्रीभगवतो रासमात्रमेवेदं सर्वं प्रपञ्चजातमिति।
श्रीनगरे यः शक्तिभिः सार्द्धं रासः स संविन्मयः।
एष परिदृश्यमानो यो जगन्मयो रासः स त्वविद्यात्मकः।
वासिष्ठेऽपि मोक्षप्रकरणे।

सर्वशक्तिमयो ह्यात्मा शक्तिमण्डलताण्डवैः॥
संसारं तन्निवृत्तिं च सर्वमासादयत्यलम्॥ १॥
समचिन्मात्ररूपस्य सर्वस्यानाकृतेरपि।
इच्छासत्ता व्योमसत्ता कालसत्ता तथैव च॥ २॥
तथा नियतिसत्ता च महासत्ता च सुव्रत!।
ज्ञानशक्तिः क्रियाशक्तिः कर्तृताऽकर्तृताऽपि च॥ ३॥
इत्यादिकानां शक्तीनामन्तो नास्ति परात्मनः।
विचित्राः शक्तयो बह्व्यो नानाचारा मनोदृशाम्॥ ४॥
उपासते मामनिशं पत्न्यः कान्तमिवोत्तम-
मिति वसिष्ठं प्रति शिवोक्तयः!

श्रीरमण इत्थङ्कारं रन्तुमनस्काः सकलशक्तीरालोक्य यथारुचि श्रीरासे रमयति।

आलिङ्गनेन ललितां प्रेम्णैव पट्टराज्ञीम्।
विचित्रां चुम्बनेनापि सद्भावैर्भुवनेश्वरीम्॥ १॥
भगस्य स्पर्शनेनापि भगवान् भगमालिनीम्।
श्रीबालां बहुमान्येन तारां ताम्बूलदानतः॥ २॥
शक्तिं कामकलां कान्तः कुचमण्डलमर्द्दनात्।
हास्येनापि हसन्तीं तु श्रीकामेशीं कटाक्षतः॥ ३॥
नित्यामनृतदानेन मालया चापि मालिनीम्।
प्रसादेनापराः काश्चिच्छक्तीः श्रीरासमण्डले॥ ४॥

आनन्दयति नादेशः समर्थः श्रीरसेश्वरः ।
एकदैवैक एवापि सर्वाभिः सह खेलतीति ॥ ५ ॥

किञ्च ।

काञ्चित्तु चोलीचण्डातकोत्तरीयलक्षणवस्त्राणि परिधापयति ।

अपरान्तु चन्दनादिनाऽनुलिम्पति ।

अन्यस्यास्तु सीमन्ते सिन्दूरपूरं पूरयति ।

कस्याश्चिन्नेत्रकमले अनक्ति कज्जलेन ।

श्रीवाण्याश्च वेणीं ग्रथ्नाति ।

एकस्यास्त्वङ्गान्यलङ्करोत्यलङ्कारैः ।

श्रीपट्टराज्ञीं पराशक्तिं प्रेमप्राचुर्येण पीयूषं पाययति ।

श्रीललितायाश्च ललाटमण्डले कुङ्कुमेन चित्रं रचयति ।

श्रीत्रिपुरां तु ताम्बूलं चर्वयति ।

भोजयति च भेरुण्डाप्रभृतीः काश्चित् ।

एवं विचित्राभिश्चेष्टाभिः श्रीरासमण्डले सकलाः शक्तीः सन्तोषयति श्रीरासनायकः ।

**इत्यर्चनलीलालक्षणम् ।**

## अथ वाक्क्रीडा कथ्यते ।

तत्र तु सर्वासां शक्तीनां वचनभाववैचित्र्यावलोकनाकर्णनोत्सुक श्रीरासेश्वरस्तस्माद्रासमण्डलत स्वमन्दिरं गच्छति तदाऽपरिपूर्णमनोरथा श्रीमहाराज्ञीमुख्या सकलाः शक्तयः कन्दर्पव्याकुलीकृताः मन्द मन्दं स्वस्वसदनमुपागताः । सख्यः सखायश्च तत्तत्पृष्ठमनुसृताः ।

अथ श्रीगोकुलनाथः पराऽनवलोकितः कस्याश्चनाङ्गणनिकटमागत्य कपाटं कुट्टयन् तूष्णीं स्थितः तत्र तत्सखी समागत्य तदुद्घाट्य श्रीरासेश्वरमेकाकिनं निर्वर्ण्यानङ्गानलवशेनाश्लिष्यति तदा रे रे तव स्वामिनी क्वेति तेन सा दूरीकृता तत्कुचमण्डलानुलेपलाञ्छितहृदयः श्रीगोकुलेशस्तद्गृहाभ्यन्तरमागत्य गृहाधीश्वरीं पश्यति ।

साऽपि प्रियतमं प्रेक्षमाणा कयाचित् सख्या रतिं कृत्वाऽत्रागत इतीर्ष्यावशादसत्कुरुते ।

तस्या वक्षसि कालुष्यं ज्ञात्वा भोः प्रेयसि ! श्रीपट्टराज्ञीभीत्या सत्वरमिहागतस्य मम प्रस्वेदश्लो हृदयानुलेपो दृष्टव्य इत्युपसङ्गृह्णाति ।

ततः प्रीतिप्रचुरतया तया सह रासक्रीडां कुरुते ।

शृणोषि यवीयसि ! ।

एकदाऽपि काचिन्महानायिका दूतिकामाहूय भोः सखि ! वचनचातुर्येण श्रीरङ्गनाथइहानीयतामिति प्रेषयति ।

साऽपि प्रेष्या तत्र गत्वा श्रीमहाराज्ञीपार्श्वे विलसतः श्रीमहावरस्य गले पुष्पमालामारोप्य श्रीपट्टराज्ञीं च पुष्पचोलिकाप्रदानेन प्रमोद्य दूरत स्थित्वा भो भगवन् ! मद्गृहे किमपि कुतुकमुत्थितमिति भणति ।

किं कुतूहलं सम्यगुच्यतामिति पुनः पृष्टा सा मया तु नाथ ! तन्न ज्ञायते न च दृश्यते किन्तु किञ्चित् प्रयोजनमस्तीत्यत श्रीगोपीपतिमिहानयेत्येव शब्दमात्रं श्रूयते । यादृशी श्रीपतेरिच्छेति वक्ति ।

तत श्रीस्वामिन्यनुज्ञातः श्रीनागरीनाथस्तया साकं तद्वेश्मोपागतः !

सा तु ससम्भ्रमं सपुष्पतूलिकां शय्यां विरचय्य तदुपरि श्रीपतिमुपवेश्य। भोः स्वामिन्! क्षणं स्थीयतामित्युदीर्य तां महानायिकां समानयति तत्रागत्य तया च तल्पगतं श्रीरङ्गं गन्धपुष्पधूपदीपनैवेद्यताम्बूलादिभिः समर्च्य नातिदूरे स्थितम्।

अथ तस्या स्वान्तं बुद्ध्वा कौतुकं त्विदमेवेति निश्चित्य तया सह विहारं करोति श्रीविहारी।

ततस्तस्या नयनकमलचुम्बनतः श्यामायितोष्ठयुगलः स्वस्वामिन्या सह विहर्त्तुमागच्छति तदा दूरतस्तल्लाञ्छनं लक्षयित्वा लम्पटोऽयमिति नाद्रियते। तर्हि तत्समीपं सभयमागत्य भोः स्वामिनि! मालिन्या कौतुकदर्शनार्थं नीतस्य मम कज्जलवर्णं तत् पश्यतः छायया दन्तच्छदौ श्यामीभूताविति सविनयं विज्ञाप्य नमस्यति।

अथ प्रसन्ना सा रासेश्वरी मां विहाय स्वयमेव केवलं कुतूहलावलोकनाय प्रयातस्यैतत्फलमितिपरिहस्य श्रीप्रेयसा रमते।

इत्थं श्रीनागरवर श्रीनगरान्तरे श्रीमहानागरीपराशक्तिप्रभृतिभिरनन्तनागरीभिः सममनवरतं विचित्रकेलिकल्लोलकलापैर्यत्र तत्र श्रीरासं सामरस्यलक्षणमास्वादयति।

**इति वचनक्रीडालक्षणम्।**

## अथ ऋतुलीला।

अत्र श्रुतिः।

वसन्त इन्नुरन्त्यो ग्रीष्म इन्नुरन्त्यः वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नुरन्त्यः।
इति।

तत्रादौ सर्वेषां प्रवरे वसन्ते श्रीनगरान्तर्गताः कतिशो नागर्यः श्रीरासशालाभ्याशमुपस्थिता याः श्रीमहानागर्याः सकाशमागत्य वर्तन्ते।

कतिपयसखायश्चापि श्रीनागरवरं परशिवमुपाश्रयन्ति।

तत्र कनककुण्डादिषु कुङ्कुमादिनिष्पादितो रङ्गः अवीरपर्वतः गुलालौघश्च, घृष्टश्रीखण्डादिसुगन्धघनः, चम्पकादिपुष्पप्रचयरचितं तैलम्। केतकी कमलादि, इत्यादि सर्ववसन्तोपहारभरेण श्रीगोपीगोपालौ स्वस्वसहचरपरिवृतौ हेलाविलासं कुरुतः।

खेलत्सु सकलशक्तिशिववृन्देषु कङ्कणवलयकटिमेखलाघुघुरूप्रभृतीनि सकलभूषणानि सरागं शिञ्जते ध्वन्यते मृदङ्गदुन्दुभ्यादि। रणति च वीणायन्त्रादि, क्वणन्ति काहलझल्लरी झर्झरादयः, शब्दायन्ते तु वंश्यः, सर्वतः शालां शब्दायमानेषु विचित्रवादित्रेषु श्रीललितेश्वरादयः शिवाः श्रीगोपालीप्रभृतयः शक्तयश्च परस्परं कुङ्कुमरङ्गगुलालादिभिरुध्धूलनादि विविधखेलां खेलायन्ते। प्रेमगालीगर्भितनित्यवसन्तरागाणि गीतकान्यपि प्रगायन्ति।

किं वाच्यम्।

न वसन्तविलासेनापरस्तुल्यः।

**इति वसन्तऋतुलीला।**

**अथ ग्रीष्मे।**

सर्वत्र श्रीरासशालायां मल्लिकाशतपत्रादिफुल्लपुष्पप्रकर विकीर्य यत्र तत्र परिष्कृतमहारत्नकुण्डेषु कर्पूरादिसुवासिततोयमापूर्य तद्गतकाञ्चनस्तम्भमुखोद्गतान् परिपततो विप्रुषः प्रेक्ष्य प्रफुल्ललोचनलपनाः श्रीगोपीगोवर्धनादयः सकलाः शिवाः परस्पर श्रीखण्डागरुकर्पूरसुगन्धिसमूहेनोद्वर्त्तयन्तः श्रीसारङ्गरागं शृण्वन्ति च स्वरन्ति ।

कतिपयगायका वेणुवल्लकीमृदङ्गादि मधुरध्वनिवाद्यवृन्दं वादयन्तः सहर्ष सारङ्गरागोदञ्चितरहस्यश्रुतीः प्रगायन्ति नृत्यन्ति चेतरे भक्ताः। वालव्यजनैः कति कति भक्ता घर्मनिवारणाय वीजयन्ति सुशीतलामृतमितरेतरं पाययन्तः प्रणमन्ति । किञ्च ।

श्रीललितालपति ।

भोः प्रेष्ठ ! ग्रीष्मे तु सर्वथा जलक्रीडा प्रेयसीत्यत. श्रीपट्टराज्ञीप्रभृतीनां सर्वासां जलकेलौ लिप्सास्तीति ।

अथ श्रीगोकुलेश्वरः सर्वासां रुचिर्जले खेलितुमिति मत्वा तत उत्थाय सहसा कलालङ्कृतः सहस्रांशुरिव शतकोटिशक्तिवलयित. श्रीमान्महामङ्गलमूर्त्तिः परशिवः सर्वानन्दमयपुरान्निर्याति ।

व्रजति श्रीव्रजराजे श्रीनगरव्रजेषु सेवकव्रजाः प्रविकासितमल्लिकामालतीचम्पकबकुलकुन्दकमलप्रभृतिपुष्पव्रजं विकिरन्ति ।

कुसुमैरास्तीर्यमाणेषु महामाङ्गल्यमार्गेषु सकलशक्तिवेष्टितस्य श्रीगोपालस्य शनैश्चलत सङ्गीतगायनैस्तदनुसारतो वादित्रवादनैश्च सद्भक्तवृन्दं नरीनर्त्ति ।

किञ्च ।

रत्ननिकुरम्बनिबध्दसेतूनां स्वर्णसोपानशालिनां श्रीनगरान्तरवर्त्तिनां तटाकानां निकटमायान्तं श्रीगोपीपतिं प्रेक्ष्य नातिदूरे समुदञ्चितोद्यानतरवस्तडागगतपद्मवृन्दानि च पम्फुल्यन्ते ।

श्रीकल्याणरूप परमार्थ श्रीपरमशिवः करीव करेणुभिः श्रुतिस्वरूपिणीभि श्रीनागरीमुख्याभिः सकलाभिः शक्तिभिः सार्द्धं श्रीपुरान्तर्वर्तिषु नानासरस्सु विहृत्य श्रीसुधासमुद्रं सादरमाश्रयति ।

तत्रामृतसागरे शक्तिभिः समं प्रविश्य श्रीरङ्गनाथः सर्वास्ताः शक्तीर्युगपदेव संसेचते ताश्चापि विह्वलन्त्यो वेल्लद्वलयावलयः क्वणत्कङ्कणमेखला मधुरामोदेनारक्तवर्णेन करपल्लवाभ्यामुत्फालितेनामृतेन श्रीरङ्गं शीकन्ते ।

किञ्च स्वपृष्ठमारूढां काञ्चिद्दृष्ट्वा स्वयं श्रीवरोऽगाधजलाभ्यन्तरे बुडन् दूर उदकोपरि समायाति ।

कापि च कान्तकरकमलं लात्वा तरति ।

इतरा तु रे कान्त ! त्वद्गलवल्गनेन ममामृतसागरे तितीर्षाऽस्तीति श्रीगोपालस्य गलमवलम्ब्यैककरेण तरति ।

क्वचित्परस्परं परिष्वजेते तद्वदितरेतर चुम्बतः ।

एवमेवान्योन्यं चूचुकमाचोटयतः ।

इत्थङ्कारं श्रीरासेश्वरः स्वामिनीप्रभृतिभिः सर्वाभिः सह वसन्तग्रीष्मयोः श्रीरासशालादिषु नानास्थलेषु चामृतार्णवादिषु विविधजलेषु कुमारयतीति दिक् ।

इति ग्रीष्मलीला ।

अथ प्रावृट्क्रीडा ।

तत्र तावत् श्रीरासशालायां सुकोमलकार्पासपूरितारुणशललवस्त्रास्तृतायां श्रीनगरा च्छक्तिसन्दोहः समागत्य श्रीरासेश्वरमुपास्ते तत्रानन्दलोललोचनोत्पलः परिधत्तरक्ताम्बरः कौसुम्भरङ्गभरकञ्चुकोत्तरीयोत्तमाङ्गपट्टिकोज्ज्वलो ज्वलन्मुकुटकुण्डलाङ्गदकटकोर्मिकामालाशृङ्खलघुंघुरुनूपुरः सकलचन्द्रिकोज्ज्वलचन्द्रोज्ज्वल. कन्दर्पकलाकेलिलम्पटः श्रीगोपिकाप्राणप्रियः श्रीपरमशिवः शतसहस्रशक्तिपरिवेष्टितः परिक्रीडते ।

अथ सौवर्णसिंहासनोपरि सम्मुखमुपविष्टया श्रीमहाराज्ञ्या सह श्रीगोपालो रत्नोल्लसत्प्रवालपाशैश्चतुष्पटं द्यूतं वितनोति ।

तत्राष्टसु काष्ठासु कर्पूरपूरागरुकस्तुरीश्रीखण्डादिसमुत्थरजसा धूपः, मेघमण्डले विद्युदावलयः प्रदीप्यन्ते, मृदङ्गदुन्दुभिध्वनिभिः समञ्जीभूतेऽपि मन्दं मन्दं स्तनयति, स्फूर्जन्ति चाशनयः, शनैः कूजन्ति च कीरकेकिकोकिलादयः, वाणी वाग्वादिनी मातङ्गी चोपवीणयन्ति मल्लाररागम् । इत्थं नानारङ्गकौतुककल्लोलोल्लसिता श्रीगोपाली श्रीवल्लभाङ्काङ्काश्रिता प्रावृषि ललति, सेवकाश्च श्रीशक्तिशिवसमुदायसमुदञ्चितौ श्रीरासेश्वरौ निषेवन्ते ।

इति श्रीवर्षाऋतुलीला ।

अथ शरल्लीला ।

तत्र तु प्रफुल्लं नन्दनवनमवबुध्य श्रीनन्दया शक्त्या गोस्वामी प्रार्थ्यते ।

भो भो नन्दन ! साम्प्रतं शरदि तु नन्दनवनं सुशोभते तद्गन्तव्यं तत्र रन्तुमित्यभ्यर्थित श्रीनागरीनन्दन सकलसुन्दरीपरिवृतः श्रीनन्दनवनं प्रविशति ।

तत्र फलपुष्पदलपल्लवाद्युल्लसत्पादपपुञ्जं मल्लिकामालतीप्रभृतिलक्षकोटिलतिकोल्लासिनानानिकुञ्जगुञ्जन्मधुव्रतादिविविधखगनिकरं यत्र तत्र तटाकान्तर्गतफुल्लाम्बुजवृन्दं श्रीनन्दनवनं निरीक्ष्य श्रीनागरीनाथो नानानिकुञ्जभवनेषु भामिनीभिः सह भक्तजनोद्गीयमानभैरवाद्यनेकमाङ्गल्यरागेषु चान्तर्धानादिलक्षणैरनेकविहरणैर्विहरति वनस्थलयोरभेदात् स्थलक्रीडावद्वनक्रीडा ।

तत्रापि मण्डलार्चनवचनादिविविधविहारविधिवैदग्ध्येन श्रीरमणो रमते ।

किञ्च ।

अनन्तरत्नखचितजातरूपरचितायां समास्तृतसौमनस्यतूलिकायां सोपधानायां श्रीविलासदोलायां श्रीमहाराज्ञीसहितं श्रीमहाराजराजेश्वरं समुपवेश्य श्रीललितादिमाः शक्तयः प्रेङ्खोलयन्ति गायन्ति च गीतकानि, काचित् पीयूषं पाययति ।

एका तु वल्लीवृक्षाद्याहृतफुल्लपुष्पग्रथितां वैजयन्ती च मालाममलकनककमलनिर्मितां मिथुनकण्ठे सहर्षमारोपयति ।

एवं-प्रायाभिर्विविधाभिः खेलाभिः श्रीगोपालौ विलसतः शरदृताविति ।

किमधिकं निरन्तरं श्रीनगरे रासातिरिक्तं न किञ्चित् ।

तत्र या याः शक्तयो ये ये शिवा या याः सख्यो दूत्यश्च ये ये भक्ताः पक्षिणः पशवश्च यत्किञ्चित्तत्सर्वं श्रीरासमेवानुभूय सुहितीभवति ।

नटति हसति गायति क्रीडतीत्यादिका: क्रिया आचरंतीति दिक् ।

इति शरल्लीला ॥

हेमन्तशिशिरयोस्तु विशेषाभावात् सामान्यत: क्रीडा ।

इति षड्ऋतुलीलालक्षणम् ।

इति श्रीहंसमिट्ठप्रकाशिते श्रीहंसविलासे बाह्यरासवर्णनं नामाष्टचत्वारिंशोल्लासः ॥ ४८ ॥

अथ हंसी-भो भो राजहंस! श्रीकृष्णद्वैपायनाद्यैः प्रदर्शितः केवलं प्रोक्तलक्षण एव रासः।

श्रीमद्भिः स्वामिभिस्तु प्रागान्तरो रास: सूचितस्तत्कृपया किङ्कर्यां मयि स प्रकाश्यताम् । किमेतेन बाह्यरासेनापरिपूर्णेनेति ।

श्रीहंस:-सम्यक् सम्यक्, अवाच्य एवान्यत्र **रहस्यरासः ।**

किन्तु भवत्या अग्रे किमप्यवाच्यं नेत्यथापि सामान्यत: श्रीरहस्यरास: प्रकाश्यते। श्रीमन्महामणिसमुल्लसिते श्रीमहाराज्ञ्या महामन्दिरे स रास: प्रसिद्धः ।

स्वयमेव श्रीपरमशिव: श्रीपराशक्तर्भक्त: श्रीपट्टराज्ञी यक्षकर्दमेनोद्वर्तनपुर:सरं सुगन्धिवासितसुखोष्णजलेन शनै: शनै: सर्वाङ्गमर्दनपूर्वकं संस्नाप्य अङ्गोच्छनवस्त्रेण तच्छरीरं सम्माज्य चण्डातककञ्चुकोत्तरीयादीनि विचित्राणि वस्त्राणि परिधाप्य सिंहासनोपरि समुपवेश्य श्रीभक्तियोगोक्तालङ्कारैरलङ्कृत्य सौरभधूपैर्धूपयित्वा प्रदीपपङ्क्तीरुद्दीप्य कनकासने रत्नस्थालं दिव्यपक्वान्नपूर्णमासाद्य निर्मलामृतं पानपात्रेण स्वयं पाययित्वा स्वहस्तेनैव नानान्नमादयित्वा चूषापयित्वा च रसालफलादीनि मुखप्रक्षालनपूर्वकं ताम्बूलं चर्वयित्वा नीराज्य तत: श्रीस्वामिनीनिदेशेन स्वशरीरं गन्धपुष्पादिभिर्भूषयित्वा प्रेम्णाऽर्पितं श्रीपट्टराज्ञ्याऽमृतं तदुच्छिष्टश्लिष्टं प्रणतिपूर्वकं निपीय तदुच्छिष्टलक्षणं महाप्रसादं च स्वीकृत्य मुखशोधनपूर्वकं तद्दत्तताम्बूलमास्वाद्य रासाय शय्यां विरचयति ।

कनकक्लृप्ता पीतनीलरक्तश्वेतरत्नव्रातखचिताश्चत्वारश्चरणा: ब्रह्मविष्णुरुद्रेश्वरमूर्त्तिमन्त: सद्रत्नसमूहोल्लसितं सौवर्णमीषाद्वयं च फलकयुग्मम् । मालतीमल्लिकाचम्पकादिविविधकोमलपुष्पनिष्पादिता पट्टिका सदाशिवस्वरूपा एतल्लक्षणाङ्गैर्विनिर्मित श्रीरासतल्पमासाद्य तदुपरि वितस्त्युन्नतां सुकुमारकुसुमरचितां तूलिकामास्तीर्य पुष्पोच्छीर्षाणि च निधाय श्रीरासेश्वरी समर्चिते तस्मिन्नुपवेश्य तदनुज्ञया तु सप्रणयं श्रीपरमशिवोऽप्युपविशति ।

अथ तत्र श्रीरासशय्यायां श्रीस्वामिन्याज्ञया परमशिव: साधारणविशेषचन्द्रकलोद्दीपन विलासवचन-परस्परामृतपान-ताम्बूलचर्वण-निष्प्रावरणकरण-क्रोडीकरण-स्तनमण्डलामर्दनाऽधरादिसञ्चुम्बनासनादिभिः श्रीस्वामिन्या सार्द्धं दीव्यतीति दिक् । क्रीडनप्राचुर्यात् ।

अत्र हंसी-भो: केलिकुशल! चन्द्रकलोद्दीपनालिङ्गनस्तनमर्दनचुम्बनासननानां लक्षणानि विशेषेण प्रोच्यताम् ।

तत्र तु ममानुभवो न भवतीति ।

अथ श्रीहंस्या: सद्भावमालोक्य श्रीशिवदर्शितं **वात्स्यायन**शास्त्रं श्रावयामास स हंसस्ताम् ।

श्रीहंसः-शृणु सुन्दरि' स्त्रीजातिश्चतुर्द्धा। तत्र पद्मिनी चित्रिणी हस्तिनी शङ्खिनी चेति चतुर्विधाः स्त्रियः।

तासां वामाङ्गेषु कृष्णप्रतिपदादितः अमापर्यन्तं शुक्लप्रतिपदादितः पूर्णिमापर्यन्तं चानुक्रमेण मस्तकादि पादाङ्गुष्ठान्तं कृष्णे, अङ्गुष्ठादि मूर्द्धावधि शुक्ले चन्द्रकलास्तिष्ठन्ति :

**उक्तं चानङ्गरङ्गे।**

सीमन्ताक्ष्यधरे कपोलगलके कक्षौ कुचोरःस्थले
नाभिश्रोणिवराङ्गजानुविषये गुल्फे पदेङ्गुष्ठके।
कृष्णाकृष्णविभागतो मनसिजस्तिष्ठेत् क्रमाद्योषितां-
वामाङ्गादधऊर्ध्वतोऽभिगमनान्मासस्य पक्षद्वये ॥ १ ॥

**इति स्थानानि चन्द्रकलानाम्।**

कामः प्रोक्तस्थानेषु तिष्ठति तदुद्दीपनमन्तरेण तरुणीषु सन्तोषो न स्यात् अतोऽवश्यमेवादौ कन्दर्पोद्दीपनं विधातव्यम्।

सीमन्ते करजान् ददीत नयने गण्डेऽपि सञ्चुम्बनं
दन्तेनाधरखण्डनं च नखरैः कक्षा च कण्ठं लिखेत्।
श्रोणिं चाथ कुचं करेण सुदृढं गृह्णीत नाभौ पुनः
सन्दद्याच्च चपेटकं स्मरगृहे मातङ्गलीलायितम् ॥ १ ॥
कुर्याद्वक्षसि ताडनं तु शनकैर्मुष्ट्या सकृद्बुद्धिमान्
जान्वङ्गुष्ठपदेषु गुल्फविषये तैरात्मनो घातनम्।
इत्थं चन्द्रकलाप्रदीपनविदो रागान्विता भोगिनो-
नीत्वा स्वीयवशं कुरङ्गनयनां विन्दन्ति सौख्यं परमिति ॥ २ ॥

सीमन्तस्थाने मस्तकमिति वा तत्र तु कचाकर्षणम्। इति सामान्येन चन्द्रकलाप्रदीपनं तासाम्।

ग्रन्थबाहुल्यभिया विशेषतः पद्मिन्यादीनां तदुद्दीपनं नोच्यते।

## अथ तासां समयः।

रात्रेश्चतुर्थचरणे नलिनी द्रवत्वं
संयाति चित्रदयिता प्रथमेऽथ यामे।
प्रीत्यै तृतीयचरण. खलु शङ्खिनीनां
नक्तं दिनार्द्धमपि हस्तिवधूजनानाम् ॥

### अथ पद्मिन्यादीनां लक्षणानि।

प्रान्तारक्तकुरङ्गशावनयना पूर्णेन्दुतुल्यानना
पीनोत्तुङ्गकुचा शिरीषमृदुला स्वल्पाशना दक्षिणा।
फुल्लाम्भोजसुगन्धिकामसलिला लज्जावती मानिनी
श्यामा काऽपि सुवर्णपङ्कजनिभा देवादिपूजारता ॥ १ ॥

उन्निद्राम्बुजकोशतुल्यमदनछत्रा मरालस्वना
तन्वी हंसवधूगतिः सुललितं वेषं सदा बिभ्रती ।
मध्यं चापि वलित्रयाङ्कितमथो शुक्लाम्बराकाङ्क्षिणी-
सुग्रीवा शुभनासिकेति गदिता नार्युत्तमा **पद्मिनी** ॥ २ ॥

## इति पद्मिनी ।

तन्वङ्गी गजगामिनी चपलदृक् सङ्गीतशिल्पान्विता-
नो ह्रस्वा न बृहत्तराऽथ सुकृशा मध्य मयूरस्वरा ।
पीनश्रोणिपयोधरा सुललिते जङ्घे वहन्ती कृशे
कामाम्भो मधुगन्ध्यथाऽण्णमपि सा तुच्छोन्नतं वत्सला ॥ १ ॥
कामागारमसान्द्रलोमसहितं मध्ये मृदु प्रायशो-
बिभ्रत्युल्लसितं च वर्त्तुलमथो रत्यम्बुनाढ्यं सदा ।
भृङ्गीश्यामलकुन्तला च जलजग्रीवोरुभोगे रता
चित्रासक्तिमती रतेऽल्परुचिरा ज्ञेयाङ्गना **चित्रिणी** ॥ २ ॥

## । इति चित्रिणी ।

स्थूला पिङ्गलकुन्तला च बहुभुक् क्रूरा त्रपावर्जिता-
गौराङ्गी कुटिलाङ्गुलीकचरणा ह्रस्वा नमत्कन्धरा ।
बिभ्रत्येभमदाम्बुगन्धि रतिजं तोयं भृशं मन्दगा
दुःसाध्या सुरतेतिगद्गदरवा स्थूलोष्ठिका **हस्तिनी** ॥ ३ ॥

## । इति हस्तिनी ।

दीर्घं बाहुशिरः कृशं पृथुमथो देहं वहन्ती तथा ।
पादौ दीर्घतरौ कटिं च बृहतीं स्वल्पस्तनी कोपिनी ।
गुह्यं क्षारविगन्धिना स्मरजलेनाल्पेन सान्द्रैः कचै-
रानीतं कुटिलेक्षणा द्रुतगतिः सन्ततगात्रा भृशम् ॥ १ ॥
सम्भोगे करजक्षतानि बहुशो यच्छत्यनङ्गाकुला-
न स्तोकं न च भूरि भक्षति सदा प्रायो भवेत्पित्तला ।
स्रग्वस्त्राण्यरुणानि वाञ्छति दयाहीना च पैशुन्यभृत्-
पिङ्गा दुष्टमनाश्च घर्घरमहारूक्षस्वरा **शङ्खिनी** ॥ २ ॥

## । इति शङ्खिनी ।

किञ्च हरिणी तुरगी हस्तिनी चेत्यपि त्रिधा ।
तल्लक्षणानि तु ॥

सान्द्राकुञ्चितकुन्तला समशिरास्तन्वी सुतुङ्गस्तनी-
फुल्लेन्दीवरलोचनाऽल्पविवरघ्राणा च तुच्छोदरी ।
आरक्ताधरपाणिपादयुगला पीनोरुकामालया-
प्रायः कोमलचञ्चलाञ्जुभुजका विस्तीर्णगण्डश्रुतिः ॥ १ ॥

ईर्ष्यालुः सुकुमारिका पिकरवाऽत्यन्तं रते लम्पटा
बिभ्रत्यम्बुजमञ्जुगन्धि मदनस्पन्दं तथाऽल्पाशना।
सुश्रोणी सरलाङ्गुलिर्गजगतिश्चश्चन्मना रागिणी-
ज्ञेया निम्नषडङ्गुलैः परिमितं गुह्यं वहन्ती **मृगी** ॥ १ ॥

॥ इति हरिणी ॥

मौलिं निम्नसमुन्नतं विदधती स्थूलर्जुसान्द्रैः कच-
र्नीलाम्भोजदलेक्षणाऽतिगलकश्रोत्रानना कोमला।
पीनश्रोणिपयोधरा शुभगतिर्गम्भीरनाभिह्रदा-
किञ्चित् पृथ्वधरा च मांसलभुजा क्षामोदरी कोपिनी ॥ १ ॥
शोणाम्भोरुहचारुपाणिचरणा निद्रालु भोज्यप्रिया
विस्तीर्णान्दधती कटिं चलमनाः कान्तेऽनुरागान्विता।
कामाम्भः पलपूतिगन्धि सुचिरात्सम्भोगकाले द्रवेत्-
विज्ञेया **वडवा** नवाङ्गुलमितं गुह्यं वहन्ती बुधैः ॥ २ ॥

॥ इति तुरगी ॥

पीनघ्राणकपोलकर्णगलका प्रस्फारलम्बोष्ठिका-
पिङ्गाक्षी दरवक्रपर्वनिवहा पृथ्व्यल्पनीलालका।
ह्रस्वस्थूलकराङ्घ्रिबाहुयुगला गम्भीररूक्षस्वरा-
कामार्त्ता सततं सुतीक्ष्णदशना दुष्टा च वीतत्रपा ॥ १ ॥
दुःशीला शबलाङ्घ्रिका पृथुकुचा कष्टैकसाध्या रता-
वत्यन्तं बहुभोजना च नितरां पापेषु बद्धस्पृहा।
बिभ्रत्येभमदोग्रगन्धमपि सा कन्दर्पनीरं सदा-
ज्ञेया भानुमिताङ्गुलैकमदनावासा बुधैर्**हस्तिनी** ॥ २ ॥

॥ इति हस्तिनी ॥

किञ्च।
शशो वृषोऽश्वश्चेति पुमानपि त्रिधा।
यथा!

प्रायः कोमलकुन्तलाः पृथुदृशः शान्ताश्च तुच्छाशना -
सूक्ष्माङ्गाः शुचयः सुवर्त्तुलमुखाः स्थूलाल्पदन्तास्तथा।
बिभ्रन्तः करजानुपादजघनग्रीवोरुषु श्यामतां-
धन्याः स्वल्परताः सुगन्धिमदनाः स्पष्टा विनीताः **शशाः** ॥ १ ॥
षडङ्गुललिङ्गाश्चेति।

इति शशलक्षणम्।

क्रूराः प्रोन्नतमौलयो दृढभुजाः सुप्रौढवक्षःस्थला
रूक्षाः कूर्मनिभोदराश्च कठिना रोमान्विताः पीवरा. ।
शोणान्तास्थिरदीर्घलोचनभृतश्चारक्तहस्तोदरा-
व्यालोला **वृषभा** नवाङ्गुलमितं कामाङ्कुशं बिभ्रति ॥ १ ॥

## इति वृषलक्षणम् ।

दीर्घस्थूलशिरोरुहाश्चलदतिस्फारेक्षणा क्रोधना-
अत्यन्तं कृशदीर्घकन्धररदश्रोत्रानना लोभिताः ।
पीनोरःस्थलदीर्घबाहुयुगला निद्रालव. सालसाः
प्रौढा वक्रनखाङ्घ्रिजानुयुगला गम्भीरसम्भाषिण ॥ १ ॥
धृष्टाः खण्डरते रताश्च नितरां दीर्घाङ्गुलिश्रेणयः
स्थूलस्त्रीरतिलालसा बहुभुजो गत्या तु पृथ्व्यन्विताः ।
भूरिक्षारविगन्धिमन्मथजलप्रायास्तथा व्याकुला
आदित्याङ्गुलसम्मितं च **तुरगा** लिङ्गं सदा बिभ्रति ।

## इत्यश्वलक्षणम् ।

अथ सममुच्चं नीचमत्युच्चमतिनीचमिति एतद्योगतः पञ्चविधं **सुरत**लक्षणम् ।
हरिणीशशयोर्वृषाश्वयोः **समयोगः** करिणीतुरङ्गयोः ।
भवतीह परस्परं द्वयोर्नितरां प्रीतिरनङ्गसङ्गरे ॥ १ ॥
हरिणीवृषभं तथाश्विकातुरगं **चोच्च**मिति द्वयं रतम् ।
तुरगीशशक द्विपीवृषं स्मृतमेतद् द्वितयं तु **नीच**कम् ॥ २ ॥
कुरङ्गीहययोर्योगे रतमत्युच्चकं विदुः ।
हस्तिनीशशयोर्योगे रतं स्यादति **नीचकम्** ॥ ३ ॥
तत्र प्रशस्यं सुरतं समं स्यादुच्चद्वयं मध्यममेव विन्द्यात् ।
नीचेऽधमेऽत्युच्चमथातिनीचमत्यन्तनिन्द्यं कविभिः प्रदिष्टम् ॥ १ ॥
क्रिमयो रुधिरोद्भवास्त्रिधा लघुमध्योरुबलाः स्मरालये ।
जनयन्ति बलानुसारतो बहुकण्डूं वनिताजनस्य ते ॥ २ ॥
प्रमाणहीनलिङ्गेन सा कण्डूर्नोपशाम्यति ।
अतो न नीचसम्भोगे तुष्टिं गच्छन्ति योषितः ॥ ३ ॥
वराङ्गमध्यं नारीणामत्यन्तं कोमलं स्मृतम् ।
अतिप्रमाणलिङ्गेन नातस्तासां सुखं भवेत् ॥ ४ ॥
समप्रमाणलिङ्गेन स्थूलेन सुदृढेन च ।
शमयेन्मूलकण्डूतिं स्पन्दयंश्च मुहुर्मुहुः ॥ ५ ॥

हंसी-स्वामिन् ! योनिप्रमाणं कथं कलयितुं शक्यम् ।

श्रीहंसः-कौशेयस्य सूत्रस्य सूक्ष्मं सुकोमलं दोरकं नवनीतलिप्तं योनौ शनैः सञ्चारयेत्। यदा दुःखायते तदैव त दोरकं निःकाश्य अङ्गुलैर्मिमीय तावत्प्रमाणा योनिर्ज्ञेया।

हंसी-द्रावस्वरूप कथ्यताम्।

हंसः।

नारी विसृष्टकुसुमेषुजला रतान्ते नृत्य करोति बहुवल्गनरोदने च।
वैकल्यमेति मुकुलीकृतचारुनेत्रा शक्नोति नो किमपि सोढुमतिप्रयासेति॥

श्रूयते हंस्या? अन्यदपि कामशास्त्रं ब्रूमः।

स्त्रीषु वयोवस्थाविशेषेण बालादिभेदोऽपि।

यावत् षोडशसङ्ख्यमब्दमुदिता **बाला** ततस्त्रिशतं-
यावत्स्यात्**तरुणीति** बाणविशिखप्रख्यं तु यावद्भवेत्।
सा **प्रौढे**त्यभिधीयते कविवरै**र्वृद्धा** तदूर्ध्वं स्मृता
निन्द्या कामकलाकलापविधिषु त्याज्या सदा कामिभिः॥ १॥

बाला नवीनसुरते मुदिता तमिस्रे
सञ्जायतेऽथ तरुणी महति प्रकाशे।
प्रौढा प्रकाशतमसोः समुपैति सौख्यं
वृद्धा तु न क्वचन जीवितहारिणी स्यात्॥ २॥

बाला ताम्बूलमालाद्यै-स्तरुणी भूरिभूषणैः।
सुप्रेम्णा रज्यते प्रौढा वृद्धा स्वालापगौरवैः॥ ३॥

किञ्च।

कृशतनुरतिदीर्घा निम्नकक्षा च कृष्णा
सुचिरपतिवियुक्ता कामिनी स्यात् श्लथाङ्गी।
पृथुलतरशरीरा गौरवर्णा च खर्वा-
सततसुरतयोग्या व्यूढकक्षा दृढा स्यात्॥ ४॥

रोगादिश्रान्तदेहा चिरविरहवती मासमात्रप्रसूता
गर्भालस्या च नव्यज्वरयुततनुका त्यक्तमानप्रसन्ना।
स्नाता पुष्पावसाने नवरतिसमये मेघकाले वसन्ते
प्रायः सम्पन्नरागा मृगशिशुनयना **स्वल्पसाध्या** रते स्यात्॥ १॥

कन्दर्पयुद्धे प्रथमेऽल्पभावाश्चिरेण तृप्तिं वनिता लभन्ते।
शीघ्रं द्वितीये धृतभूरिभावाः पुंसः क्रमोऽयं विपरीत उक्त॥ २॥

## । अथ रताभिलाषचेष्टा।

सङ्गृह्णात्यलकान्मुहुः स्तनयुगं वस्त्रेण नाच्छादयेत्-
दन्तेनाप्यधरं दशेच्च विरमेत्सञ्जातलज्जा क्षणम्।
प्रायश्चुम्बति बालकं निजवपुः कृत्स्नं समुज्जृम्भयेत्-
रथ्यां चापि रुणद्धि पश्यति च दोर्मूलं हसत्यादरात्॥ १॥

आलिङ्गेत्स्वसखीं प्रियं प्रलपति प्रत्युत्तरं याचते-
प्रव्यक्तं न च भाषते स्मितमुखी व्रीडां वृथा धारयेत् ।
व्याजेनैव विलम्बते प्रकुरुते मौलौ च कण्डूयनं
नारीणां सुरतस्पृहा बुधजनैर्ज्ञेयेति भावैः सदा ॥ २ ॥

अथानुरागिणी ।

लज्जां न धत्तेऽभिमुखं च पश्येत्
पादेन भूमिं विलिखेत्तथा च ।
व्यनक्ति गात्रं कुरुते च हास्यं
दृष्ट्वा कटाक्षं नयने विदध्यात् ॥ १ ॥
पृष्टाऽस्फुटं सस्मितमेव वाक्यं-
शनैर्वदेच्चानुसरेद्व्रजन्तम् ।
विलोक्य तं व्याजकथाप्रसङ्गा-
दुच्चैर्वदेत्स्वं परिदर्शयन्ती ॥ २ ॥
तन्मित्रवर्गे प्रणयं विदध्या-
दित्यादिवार्तामसकृच्च पृच्छेत् ।
कति स्त्रियोऽस्यालयगाः सुरूपाः
कस्यामयं प्रेम भृशं विधत्ते ॥ ३ ॥
मृद्नाति दृष्ट्वा स्वकुचं करेण
सस्फोटयेदङ्गुलिकाः सजृम्भम् ।
भूषाविहीना न ददाति तस्मै-
स्वदर्शनं याचितमप्यजस्रम् ॥ ४ ॥
पुष्पादिना हन्ति तथातिवारं-
संकाशयेन्मार्ष्टि भुजं करेण ।
व्याजेन गच्छेत्सदनं कराङ्घ्रि-
वक्त्रेषु घर्माम्बु वहेद्विलोक्य ॥ ५ ॥
इत्यादिचिह्नैरनुरागयुक्तां-
ज्ञात्वा विदग्धां मृगशावकाक्षीम् ।
सम्प्रेषयेत्तां प्रति निर्विशङ्कं
दूतीन्त्वराकामकलाप्रवीणः ॥ ६ ॥

## । अथ सुखसाध्याः ।

निर्लज्जा विधवा कलासु कुशला गोष्ठीपरा दुर्भगा
क्लीबस्थूलकठोरवामनजरद्वैरूपभार्यास्तु याः ।
द्वारावस्थितशीलिकाऽतिचपला वन्ध्या महामानिनी
प्रत्यग्रा तरुणी महाविरहिणी साध्याः सुखेनाङ्गनाः ॥ १ ॥

हं

### । विहितप्रदेशः ।

विस्तीर्णे ललिते सुधाधवलिते चित्रादिनाऽलङ्कृते
रम्ये प्रोन्नतचत्वरेऽगरुमहाधूपादिपुष्पान्विते ।
सङ्गीताङ्गविराजिते स्वभवने दीपप्रभाभासुरे-
निःशङ्कं सुरतं यथाभिलषितं कुर्यात्समं कान्तया ॥ २ ॥

### । अथ प्रीतिः ।

नैसर्गिकी विषयजा समा चाभ्यासिकी तथा ।
चतुर्विधा तु विद्वद्भिर्दम्पत्योः **प्रीति**रुच्यते ॥ १ ॥
अभ्यासविषयासाध्या दम्पत्योः सहजा तु या ।
सान्द्रा निगडभूता च प्रीतिर्**नैसर्गिकी** मता ॥ २ ॥
मालाचन्दनभोज्याद्यैर्विषयैर्वर्द्धिता तु या ।
प्रीतिर्**विषयजा** प्रोक्ता, समयोगे **समा** स्मृता ॥ ३ ॥
आखेटदेवपूजादि-केलिसङ्गीत-कर्मसु ।
अभ्यासयोगाद्या वृद्धा प्रीतिः **साऽभ्यासिकी** मता ॥ ४ ॥

### । अथ दर्शनम् ।

प्रत्यक्षं चापि चित्रं च स्वप्नं च श्रवणं तथा ।
दम्पत्योर्दर्शनं प्रोक्तं बुधैरेतच्चतुर्विधम् ॥ १ ॥

### । स्त्रीस्वभावः ।

भोजनं द्विगुणं स्त्रीणां बुद्धिः कृत्ये चतुर्गुणा ।
निश्चयः षड्गुणः पुंभ्यः कामवेगस्तथाष्टधा ॥ १ ॥

### । समागमस्थानम् ।

धात्रीसखीशून्यगृहेषु रात्रौ-
स्त्रीपुंसयोः स्यान्मिलनं पुरस्तात् ।
भयोत्सवव्याधिनिमन्त्रणादि-
व्याजेन वाट्यादिषु सौरताय ॥ १ ॥

### । अथ सङ्केतः ।

आद्ये यामे तु **शङ्खः** स्यान्**महाशङ्खो** द्वितीयके ।
**पद्म**स्तृतीयके यामे **महापद्म**श्चतुर्थके ॥ १ ॥
**रामस्तु** पञ्चमे यामे **विरामः** षष्ठसंज्ञके
**प्रवरः** सप्तमो यामः **प्रत्यूष**श्चाष्टमः स्मृतः ॥ २ ॥
**दाडिमं** तु द्विजे ज्ञेयं **पनसं** क्षत्रिये स्मृतम् ।
**कदलीफलकं** वैश्ये शूद्रे **चाम्रफलं** स्मृतम् ॥ ३ ॥

राजपुत्रे **द्वितीयेन्दुः सम्पूर्णेन्दुश्च** भूपतौ ।
मध्येहि **शून्यऽपक्कं** तु बाले **पक्कं** च वृद्धके ॥ ४ ॥
ब्राह्मण्यां **कुन्दपुष्पं** स्याद्राजपुत्र्यां च **मालती**
**मल्लिका** वैश्यपुत्र्यां तु शूद्रपुत्र्या तु **कैरवी** ॥ ५ ॥
कामुके **भ्रमरः** प्रोक्तः कामिन्यां **चूतमञ्जरी** ।
तथाऽऽह्वानेऽ**ङ्कुशः** प्रोक्तः प्राकारो **वारणे** स्मृतः ॥ ६ ॥
देहार्पणे **रक्तसूत्रं जीरं** जीवसमर्पणे ।
**भल्लातकफलं** भीतौ भयाभावे **हरीतकी** ॥ ७ ॥
**छिन्नवस्त्रं** तु विच्छेदे **सदशाग्रन्थि** सङ्गमे ।
एकस्नेहे तथा **चैकं** द्वयोः स्नेहे तु **तद् द्वयम्** ॥ ८ ॥

**। अथ कामावस्था ।**

दृष्टिःप्रेम पुरा भ्रमोऽथ मनसि प्रोक्तोऽथ सङ्कल्पको-
निद्रोच्छित्तिरतः शरीरतनुता लज्जाविनाशस्ततः ।
वैराग्यं विषयेष्वथो निगदिते ह्युन्मादमूर्च्छे ततो-
मृत्युः स्यादिति पण्डितैः **स्मरदशा** उक्ता दशैव क्रमात् ॥ १ ॥

**। अथ दूत्यः ।**

मालाकारवधूः सखी च विधवा धात्री नटी शिल्पिनी-
सैरन्ध्री प्रतिगेहिका च रजकी दासी च सम्बन्धिनी ।
बाला प्रव्रजिता च भिक्षुवनिता तक्रस्य विक्रेयिका-
मान्या कारुवधूर्विदग्धपुरुषैः प्रेष्या इमा **दूतिकाः** ॥ १ ॥

**। अथ दूतीलक्षणम् ।**

सुवेषता[1] दुःखसहिष्णुता[2] च सुशीलता[3] कोमलवाक्यता[4] च ।
सन्मित्रता[5] च्छादितमन्त्रता[6] च च्छन्दानुवर्त्तित्व[7]मलक्षिता[8] च ॥
प्रोत्साहनं[9] गुणकथाकथन[10] बलानां[11]
विश्रम्भणं[12] बहुलता[13] घनदर्शनं[14] च ।
गाढानुसङ्गरचनं[15] वचनस्य सिद्धिः[16]-
कर्मेति षोडश मुने प्रवदन्ति दूत्याः ॥ २ ॥

**इति वृन्दावनमाहात्म्ये ।**

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे चन्द्रकलोद्दीपनादि-कामकलावर्णने एकोनपञ्चाशत्तमोल्लासः ॥ ४९ ॥**

श्रीहंसः-प्रिये ! इत्थं कामदर्शनदर्शितविचित्रचेष्टादिसमुल्लासितनानानायिकास्वरूपकला-लक्षणकोविदः सर्वदा निस्पृहः स्वनायिकाभि. सार्कं कारणवशात् परकीयाभिरपि स्वच्छन्दं श्रीरसिकोऽपि रासक्रीडां करोति नात्मरूपक्षतिः ।

श्रूयतामिदानीमालिङ्गनाद्यबाह्योपभोगलक्षणम् ।

तत्रादावालिङ्गनभेदाः ।

वृक्षाधिरूढं तिलतन्दुलाख्य
लालाटिकं जाघनविद्धके च
ऊरूपगूढाह्वयदुग्धनीरे
तत्राष्टमं वल्लरिवेष्टितं स्यात् ॥ १ ॥

**इत्यष्टौ भेदा आलिङ्गनस्य ।**

लक्षणानि तु ।

चरणकमलमेकेनाङ्घ्रिणाक्रम्य भर्त्तु-
रपरपदसरोजेनाश्रयन्ती तदूरुम् ।
तरुमिव भुजवल्ल्यापीडय चुम्बेन्नताङ्गी
कथितमिह मुनीन्द्रैस्तद्धि **वृक्षाधिरूढम्** ॥ १ ॥

भुजगुह्यविपर्ययं मिथो घटयेच्चेन्मिथुनं सुनिश्चलम् ।
**तिलतन्दुलसंज्ञकं** तदा परिरम्भं कथयन्ति सूरयः ॥ २ ॥

मिथो ललाटाक्षिकपोलवक्त्रहृदाहुवल्ली मिथुनं घटेत ।
रसातिरेकाद्यदि निस्तरङ्गं **लालाटिकं** तत्प्रवदन्ति सन्तः ॥ ३ ॥

जघनपरिसरस्थं श्रोणिदेशं स्वभर्त्तु-
र्निजभुजलतिकाभ्यां गाढमालिङ्ग्य रागात् ।
लुलितवसनकेशा चुम्बनं यत्र कुर्यात्-
स्फुटमिह परिरम्भं **जाघनं** तं वदन्ति ॥ ४ ॥

स्थितं पतिं मीलितनेत्रयुग्मं
पश्चात् प्रविध्येद्वनिता कुचाभ्याम् ।
गृह्णात्यसौ तामपि **विद्धकाख्य**
मालिङ्गनं तन्मुनिभिः प्रदिष्टम् ॥ ५ ॥

उद्दामकामोन्मथिताङ्गनाया
ऊर्वोर्युगं स्वोरुयुगेन यत्र
आपीडयेत्कान्त उदीरितं त-
**दूरूपगूढं** परिरम्भणं हि ॥ ६ ॥

अङ्केऽथ तल्पे पतिसम्मुखस्था
कान्ता समालिङ्गति यत्र गाढम् ।
मिथः प्रवेशं कुरुते निजाङ्गैः
स्यात् **क्षीरनीरं** परिरम्भणं तत् ॥ ७ ॥

वल्लीव वृक्षं सरलाङ्गयष्टिः
पतिं समालिङ्गति यत्र कान्ता ।
चुम्बेच्च रागात् कृतमन्दसीत्का
प्रोक्तं बुधैर्वल्लरिवेष्टितं तत् ॥ ८ ॥

। इत्यष्टविधमालिङ्गनम् ।

**अथ चुम्बनभेदाः ।**

तत्रादौ तत्स्थानानि ।
अधराक्षिकपोलमस्तकं ।
वदनान्तः स्तनयुग्मकन्धरे ।
विहितानि पदानि पण्डितैः
परिरम्भादनु चुम्बनस्य हि ॥ १ ॥

**नवविधं चुम्बनं यथा ।**

नारीमुखान्ते वदनं स्वकीय-
समानयेद्यत्र बलेन कान्तः ।
सा नैव चुम्बेदतिकोपयुक्ता-
स्याच्चुम्बनं **तन्मिलिता**भिधानम् ॥ १ ॥
दयितस्य निवेश्य वक्त्रके-
निजवक्त्रं परिचुम्बिताधरम् ।
न पिबेदबला तदाननं-
**स्फुरिता**ख्यं किल चुम्बनं तदा ॥ २ ॥
करेण कान्तस्य निमील्य नेत्रे-
जिह्वा मुखान्तर्विनिधाय यत्र ।
चुम्बेद्विलोला परिमीलिताक्षी-
तद्**घट्टिता**ख्यं कवयो वदन्ति ॥ ३ ॥
करेण कान्ताचिबुकं गृहीत्वा-
दशेत्पतिः पश्चिमभागवर्त्ती ।
प्रियाधरं यत्र तु **तिर्यगा**ख्यं
प्रोक्तं कवीन्द्रैः खलु चुम्बनं तत् ॥ ४ ॥
दन्तैर्गृहीत्वा मदनार्त्तिलोला-
ऽधरं विचुम्ब्याशु दशेत् स्वभर्त्तुः ।
कान्तस्तदीयं कथितं मुनीन्द्रै-
रित्युत्**तरौष्ठं** परिचुम्बनं तत् ॥ ५ ॥
आदाय दन्तच्छदमाशु पत्युः-
कराङ्गुलीसम्पुटकेन नारी ।
जिह्वाग्रदेशेन घटेद्दशेच्च-
तच्चुम्बन **पिण्डित**संज्ञक स्यात् ॥ ६ ॥

प्रियाधरं स्वाधरसम्पुटेन-
पिबेत् पतिः साऽपि तथैव भर्त्तुः ।
तत्सम्पुटाख्यं हनुवक्त्रसंज्ञं-
स्यात्केलिजिह्वाननतस्तदेव ॥ ७ ॥
सम्प्राप्तनिद्रां रहसि स्वकान्तां ।
चिरागतश्चुम्बति यत्र भर्त्ता ।
प्रोक्तं कवीन्द्रैः प्रतिबोधसञ्ज्ञं
तच्चुम्बनं सर्वरसातिरेकम् ॥ ८ ॥
अधरौष्ठयुगेन कामिना-
पतिवक्त्रौष्ठयुगं स्वजिह्वया ।
परिपीडय विचुम्ब्य नृत्यति-
कथितं तद्धि सम्पौष्ठसञ्ज्ञकम् ॥ ९ ॥

इति चुम्बनभेदाः ।

## अथ नखदानविधानम् ।

ग्रीवाकरोरुजघनस्तनपृष्ठकक्षा-
हृत्पार्श्वगण्डविषये नखराः खराः स्युः ।
माने नवीनसुरते विरहे प्रवासे-
द्रव्यक्षयेऽथ विरतौ च मदे प्रयोज्याः ॥ १ ॥

। इति तत्स्थानम् ।

नीरेखता निर्मलतोज्ज्वलत्वं-
वर्द्धिष्णुताऽप्यस्फुटितत्वमेव ।
अमार्द्दवं चेति गुणा नखानां-
बुधैः षडुक्ताः किल कामशास्त्रे ॥ २ ॥

यथा ।

अव्यक्तरेखं कृतरोमहर्षं-
समर्पितं गण्डकुचाधरेषु ।
यत् कर्म सम्पूर्णनखप्रभूतं-
विज्ञास्तदेव च्छुरितं वदन्ति ॥ ३ ॥
ग्रीवाकुचे वक्रनखप्रहारो-
दत्तोऽर्द्धचन्द्राख्य उदीरितोऽसौ ।
इत्येव चेदाभिमुखे प्रयुञ्ज्या-
त्तदा बुधा मण्डलकं वदन्ति ॥ ४ ॥

द्विग्यङ्गुलादधिक एव नखप्रहारो-
मूर्धोरुगुह्यकुचदेशसमर्पितो यः ।
रेखाह्वयं मदनकेलिकलाविदग्धाः
प्राहुस्तमेव तरुणस्य हि तत्र भावः ॥ ५ ॥

रेखा कृता सर्वनखैरधस्ता-
दङ्गुष्ठमाधाय तु चूचुके या
मयूरपादं किल तं वदन्ति-
शशप्लुतं सर्वनखैः कुचाग्रे ॥ ६ ॥

रेखात्रयं पृष्ठिकुचेऽथ गुह्ये
कृतं भवेदुत्पलपत्रवद्यत् ।
अन्वर्थसंज्ञं प्रवदन्ति तद्धि
स्मर्त्तु प्रवासावसरे दिशन्ति ॥ ७ ॥

नखं प्रयुक्तं प्रणयाद्रसज्ञै
र्यदेतदेवास्ति मनोभवस्य ।
सर्वस्वमत्यन्तसुखैकहेतु
र्नातोऽस्ति किञ्चिद्वरकामिनीनाम् ॥ ८ ॥

। इति नखक्षतभेदाः ।

## अथ दन्तक्षतविधानोद्देशः ।

नखप्रदेशेषु रदाः प्रयोज्या
ओष्ठाननान्तर्नयनं विहाय ।
हिङ्कारसीत्कारविशेष उक्तो
दन्तार्पणे कामकलाविदग्धैः ॥ १ ॥

रागस्पृशः स्निग्धतराः समाना
घनाश्च सूक्ष्माः सशिखाः सभासः ।
दन्ताः प्रशस्ता अथ खर्वरूक्षाः
करालबाह्या मलिनाश्च निन्द्याः ॥ २ ॥

यथा ।
अधरस्थितरागमात्रगं
रदलेख्यं किल गूढकं विदुः ।
दशनच्छदगण्डपीडना-
दिदमुच्छूनकमुच्यते बुधैः ॥ ३ ॥

दन्तौष्ठयोर्योगविशेषसाध्यः
प्रवालपूर्णो **मणिरेष** उक्तः ।
अभ्यासयोगेन च दम्पतीभ्यां
संसाध्यते नान्यविनोदतस्तु ॥ ४ ॥
अधरे तिलके च कामिना-
रदयुग्मेन विखण्डने कृते ।
इति **बिन्दु**रुदीरितोऽखिलै-
र्दशनैः स्यात् किल **बिन्दुमालिका** ॥ ५ ॥
कपोलवक्षोगलभालदेशे
**खण्डाभ्रकं** स्याद्दशनाग्रलेख्यम् ।
तन्मण्डलाकारकमङ्गनाना-
मङ्गेषु शोभां लभते नितान्तम् ॥ ६ ॥
अखर्वसान्द्रा दशनावली या
कान्ता शरीरे क्रियते स्वभर्त्रा ।
प्रस्थानकाले स्मृतिहेतुभूता
तत् **कौलचर्चं** प्रवदन्ति विज्ञाः ॥ ७ ॥

## । अथ केशग्रहणोद्देशः ।

स्निग्धा घनाः कुञ्चितनीलवर्णाः
केशाः प्रशस्तास्तरुणीजनानाम् ।
प्रेमप्रवृद्धयै विधिनैव मन्दं
ग्राह्या नरैश्चुम्बनदानकाले ॥ १ ॥
चिकुरान् परिकृष्य चुम्बति-
करयुग्मेन पतिः प्रियां यदि ।
**समहस्तक**मित्यथैकतो-
यदि हस्तेन **तरङ्गरङ्गकम्** ॥ २ ॥
परिवेष्ट्य करेण कुन्तलान्-
मदनार्त्तो यदि धारयेत्प्रियाम् ॥
रतिकेलिकलापकोविदाः
कथयन्तीति **भुजङ्गवेल्लिकम्** ॥ ३ ॥
कर्णप्रदेशस्थकचान् विगृह्य-
परस्परं चुम्बति यत्र नारी ।
पतिश्च रागात् सुरतावतारे
**कामावतंसः** स **कचग्रहः** स्यात् ॥ ४ ॥

## । इति केशग्रहणभेदाः ।

| | | | | |
|---|---|---|---|---|
| आलिङ्गन ८ | चुम्बन ९ | नखक्षत ७ | दन्तक्षत ७ | केशग्रह ४ |
| वृक्षाधिरूढ १ | मिलित १ | छुरित १ | गूढक १ | समहस्तक १ |
| तिलतन्दुल २ | स्फुरित २ | अर्धचन्द्र २ | उच्छूनक २ | |
| ललाटिक ३ | घण्टिक ३ | मण्डलक ३ | प्रवालमणि ३ | तरङ्गरङ्ग २ |
| जाघन ४ | तिर्यक् ४ | रेखाह्व ४ | बिन्दु ४ | |
| विद्धक ५ | उत्तरोष्ठ ५ | मयूरपाद ५ | बिन्दुमाल ५ | भुजङ्गवेल्लिक ३ |
| ऊरूपगूढ ६ | पिण्डित ६ | शशप्लुत ६ | खण्डाभ्र ६ | |
| क्षीरनीर ७ | सम्पुट ७ | अन्वर्थ ७ | कोलचर्च ७ | कामावतंस |
| वल्लरिवेष्टित ८ | प्रतिबोध ८ | | | |
| | समौष्ठ ९ | | | |

**इति बाह्योपभोगलक्षणम् ।**

**फलं चागमान्तरे**

अकरणे प्रत्यवायश्च ।

आलिङ्गने हरेद्रोगान् धनधान्यादि चुम्बने ।
नखदन्तक्षताद्यैश्च मोक्षश्चायुष्यवर्धनम् ॥ १ ॥
सम्भोगे च सुख यद्यत्तद्विष्णोः परमं पदम् ।
सायुज्यं सङ्गमेन स्यात् सत्यमेव न संशय ॥ २ ॥
आलिङ्गनं विना देवि ! कुष्ठी भवति पार्वति ।
विना नखक्षतं देवि ! लोके भवति निन्दितः ॥ ३ ॥
न दद्याच्चुम्बनं यस्तु दरिद्रो जायते ध्रुवम् इति ।

**इति कुलचूडामणौ ।**

## । अथ योनिलक्षणम् ।

योनिरभ्यन्तरे काऽपि पद्मकिञ्जल्ककोमला ।
काऽपि स्याद्गुटिकाकीर्णा काचिद्वलिचयाकुला ॥ १ ॥
गोजिह्वावत् खरस्पर्शेत्युक्तं भेदचतुष्टयम् ।
पूर्वपूर्वतरा तासु श्रेष्ठा ज्ञेया विचक्षणैः ॥ २ ॥

योनिमध्येऽस्ति नाड्येका कामाङ्कुशसमा हि सा ।
लिङ्गेन क्षोभिता सैव मदवारि निरन्तरम् ॥ ३ ॥
कामातपत्रात्सृजति स **स्पन्द** इति कीर्त्यते ।
वराङ्गरन्ध्रादूर्ध्वं तु नासिकाभं यदस्ति तत् ॥ ४ ॥
**मन्मथछत्र**मित्याहुराढ्यं मदशिराचयैः ।
योनिरन्ध्रे नातिदूरात् **पूर्णचन्द्राऽस्ति** नाडिका ॥ ५ ॥
मनोजवारिसम्पूर्णा स्त्रीणां तिष्ठति सर्वदा ।
तद्विसृष्टया द्रुता नारी प्रोच्यते पूर्वसूरिभिरिति ॥ ६ ॥

**। आगमेऽपि ।**

भगे तदीये विद्यन्ते नाड्यस्तिस्रः प्रधानिकाः ।
एका तु नाडिका चान्द्री सौरी चान्या तु नाडिका ॥ १ ॥
आग्नेयी चापरा ज्ञेया पूजयेत्तास्तु साधकः ॥ १ ॥
अम्बु स्रवति चान्द्री सा पुष्प स्रवति भानवी ।
बीजं स्रवति चाग्नेयी तास्तु नामभिरर्चयेत् इत्यादि ॥ १ ॥

**। अथ सुरतप्रभेदाः ।**

साम्यानुरूपान् प्रविधाय पूर्व-
विज्ञः पुमान् बाह्यरतोपचारान् ।
विधिश्लथीभूतवराङ्गदेशां
भजेत कान्तां स्मरकेलिरङ्गैः ॥ १ ॥
दृढाऽपि नारी श्लथतामुपैति
प्रसारणादूरुयुगस्य सद्यः ।
अपि श्लथा संयमितोरुयुग्मा-
गच्छेद् दृढत्वं सुरतप्रसङ्गैः ॥ २ ॥
उत्तानकं तिर्यगथोत्थिताख्यं
स्थितं तथा व्यानतकं रतज्ञैः ।
पञ्चप्रकार सुरत प्रदिष्ट
तस्य प्रभेदान् क्रमतो ब्रवीमि ॥ ३ ॥
तत्र तावत् **उत्तानकबन्धाः** ।
निधाय पादौ रमणांसयोश्चे-
दुत्तानसुप्ता रमते पुरन्ध्री ।
रतिप्रबन्धं **समपादसंज्ञं**
प्रोचुस्तदा भोगविधानदक्षाः ॥ १ ॥

उत्तानितायाः स्मरमन्दिरोप-
स्थितस्तदूरुद्वयमुद्गृहीत्वा ।
संस्थाप्य बाह्वं कटितो रमेत
कान्तस्तदा स्यात् किल **नागराख्यः** ॥ २ ॥

स्त्रियोऽङ्घ्रिमेकं विनिधाय भूमा-
वन्यं स्वमौलौ निजपादयुग्मम् ।
पृथ्व्यां समाधाय रमेत भर्त्ता-
**त्रैविक्रमाख्यं** करणं तदा स्यात् ॥ ३ ॥

उत्तानसुप्ता निजपादयुग्म-
मूर्ध्वं विधत्ते रमणी कराभ्याम् ।
स्तनौ गृहीत्वाऽथ भजेत कान्तो-
बन्धस्तदा **व्योमपदाख्य** उक्तः ॥ ४ ॥

कान्तोरुयुग्मान्तरगः स्वहस्तौ
निधाय भूमौ रमते पतिश्चेत् ।
बन्धस्तदोक्तः **स्मरचक्रनामा**-
प्रेष्ठः सदा कामिजनस्य लोके ॥ ५ ॥

नारी स्वपादौ दयितस्य वक्षः-
स्थितौ समालिङ्ग्य करद्वयेन ।
किञ्चिन्नतोरू रमते तदाऽसौ
प्रोक्तो मुनीन्द्रैर**विदारिताख्यः** ॥ ६ ॥

उत्तानितोरुद्वयमध्यगामी
दृढं समालिङ्ग्य भजेत यत्र ।
कान्तो विलासिप्रिय एष बन्धः
**सौम्याख्य** उक्तः कविभिः पुराणैः ॥ ७ ॥

ऊर्वोर्युगं वक्रमुदञ्चितं च
कृत्वाम्बुजाक्षी भजते पतिं चेत् ।
आनन्दकर्ता तरुणीजनानां
बन्धोऽयमुक्तः किल **जृम्भिताख्यः** ॥ ८ ॥

कान्तोरुयुग्म परिवर्त्तितं चे-
न्निष्पीडय कामाकुलचित्तवृत्तिः ।
रमेत भर्त्ता यदि **वेष्टिताख्यं**
तमेव बन्धं मुनयो वदन्ति ॥ ९ ॥

स्कन्धप्रदेशे विनिधाय जङ्घा-
मेकां स्त्रियोऽन्यामथ सविदार्य ।
अधो विनीय प्रबलं रमेत
भर्त्ता तदा **वेणुविदारितं** स्यात् ॥ १० ॥
यदा स्त्रियः सन्ततमूरुयुग्मं
कृत्वोर्ध्वमालिङ्ग्य भजेत भर्त्ता ।
उज्जृम्भकं स्यात्प्रमदाङ्घ्रियुग्मे
कान्तोरसि स्थे स्फुटमाप्रदिष्टम् ॥ ११ ॥

## । अथ तिर्यग्बन्धाः ।

कान्ताङ्घ्रिमेकं हृदये स्वकीये
निधाय भर्त्ता शयने द्वितीयम् ।
कुर्याद्रतिं चेदिति **वीणिका**ख्यः
प्रौढाङ्गनायामिति कल्पनीयः ॥ १ ॥
पार्श्वप्रसुप्तप्रमदापरिस्थः
कान्तः समालिङ्ग्य रतिं करोति ।
यत्र प्रदिष्टो मुनिभि पुराणै-
र्बन्धस्तदा **सम्पुट**नामधेयः ॥ २ ॥
यद्यङ्गना कुञ्चितपादयुग्मं
स्वनाभिदेशे परिकल्प्य भर्त्रा ।
रतिं प्रकुर्यादिति **कर्कटाख्यं**
तदा कवीन्द्रैः करणं प्रदिष्टम् ॥ ३ ॥

## । अथोपविष्टबन्धाः ।

प्रेङ्खाविलासं प्रसभं वहन्त्या-
विपर्ययाज्जङ्घयुगस्य नार्याः ।
**पद्मासनं** स्यादथ चैकजङ्घा-
विपर्ययात् **कृप्तपदं** प्रदिष्टम् ॥ १ ॥
स्वजानुयुग्मान्तरनिर्गतौ चे-
द्भुजौ स्वकण्ठे विनयेन्मृगाक्षी ।
कान्तोऽपि कृत्वेति विधि प्रगच्छे-
त्तदा बुधैर्**बन्धुरिताख्य**मुक्तम् ॥ २ ॥
उक्तप्रकारैर्यदि दम्पती स्वौ-
भुजौ तु कृत्वा मणिकूर्परस्थौ ।
स्वैरं रमेते करणं प्रदिष्टं
तदा कवीन्द्रैः **फणिपाशसंज्ञम्** ॥ ३ ॥

निधाय जङ्घायुगलं युवत्याः
स्वकीययोः कूर्परयोरथास्याः ।
कण्ठे स्वबाहू परिणीय गच्छे-
त्पतिस्तदा **संयमनाख्यमेतत्** ॥ ४ ॥

मुखे मुखं बाहुयुगे स्वबाहू-
जङ्घाद्वये जङ्घयुगं निवेश्य ।
गच्छेत्पतिश्चेदिति **कौर्मकं** स्या-
दूर्ध्वोरुयुग्मा**त्परिवर्त्तिका**ख्यम् ॥ ५ ॥

स्त्रियं समाकुञ्चितपादयुग्मां
तथैव भर्त्ता कृततिर्यगङ्गः ।
भजेत चेत् कामकलाविदग्धो
बन्धं तदा **युग्मपदं** वदन्ति ॥ ६ ॥

विलासिनीकूर्परमध्यवर्त्ती-
कटिं स्वकीयां भ्रमयेन्मुहुश्चेत् ।
भजेत भर्त्तेति **विनर्दितं** स्या-
न्मार्कटं संमुखसङ्गमेन ॥ ७ ॥

## । अथोत्थितबन्धाः ।

सवेष्टयित्वा निजकूर्परेण-
जान्वङ्गनाया अवलम्ब्य कण्ठम् ।
रतिं प्रकुर्यादिति **कूर्पराख्यो**-
बन्ध प्रदिष्टः स च जानुपूर्वः ॥ १ ॥

उक्तप्रकारे करणे यदैकः
पादो भवेदूर्ध्वगतोऽङ्गनायाः ।
तदा प्रदिष्टो **हरिविक्रमाख्यो**-
बन्धः प्रियोऽय तरुणीजनानाम् ॥ २ ॥

कण्ठे भुजाभ्यामवलम्ब्य भर्त्तुः
श्रोणिं निजोर्वोर्युगलेन गाढम् ।
सम्वेष्ट्य कुर्याद्रतमङ्गनाना-
मुक्तः कवीन्द्रै**रिति कीर्त्ति**बन्धः ॥ ३ ॥

## । अथ व्यानतबन्धाः ।

विन्यस्तपाण्यङ्घ्रियुगं धरिण्या-
मधोमुखी धेनुवदग्रसंस्था ।
स्त्रीः स्यादथास्याः कटिदेशवर्त्ती
भर्त्ता भजे**द्धेनुक**मेतदुक्तम् ॥ १ ॥

अधोमुखी मस्तकदोःकुचास्यै-
र्भुवङ्गतां क्रामति यत्र नारीम् ।
करीव भर्त्ता रतिलोलचित्त-
**स्तदेभसंज्ञं** करण प्रदिष्टम् ॥ २ ॥

**। अथ पुरुषायितबन्धाः ।**

जातश्रम वीक्ष्य पति पुरन्ध्री-
स्वेच्छात एवाथ रतेष्वतृप्ता ।
कन्दर्पवेगाकुलिता नितान्तं
कुर्वीत तुष्ट्यै **पुरुषायितं** सा ॥ १ ॥

उत्तानसुप्तं दयितं भुजाभ्या-
मालिङ्ग्य लिङ्ग विनिवेश्य योनौ ।
भजेन्नितम्बं परिचालयन्ती-
नारी तदा स्या**द्विपरीतबन्धः** ॥ २ ॥

सुप्तस्य पुंसो जघनोपरि स्थिता-
सम्भ्रामयत्यङ्घ्रियुगं विकुञ्चितम् ।
चक्राकृतिः स्त्री नरवद्विचेष्टते-
**तद्भ्रामराख्यं** करणं समीरितम् ॥ ३ ॥

प्रेङ्खविभ्रमवती स्मरयन्त्रे-
भर्तृलिङ्गमुपधाय पुरन्ध्री ।
भ्रामयेत्कटिमनङ्गविलोला-
स्यात्तदा करण-**मुत्कलिका**ख्यम् ॥ ४ ॥

विपरीतरते ससीत्कृता-
दरहासाऽतिमनोरमानना ।
कितवाद्य वशं गतोऽसि मे-
स्मरयुद्धे विजितोऽसि चाप्यलम् ॥ ५ ॥

इति मञ्जुरटत्यथाकुला
सकचाकर्षणचुम्बिताधरा ।
श्रममीलितचारुलोचना-
द्रवतां याति तदा विलासिनी ॥ ६ ॥

श्लथदेहलतां समूर्छनां-
दरसम्मीलितलोचनोत्पलाम् ।
समवेक्ष्य नितान्तनिःसहा-
मवगच्छेदबलां द्रुतामिति ॥ ७ ॥

करिणी हरिणी च गर्भिणी-
नवसूतामृतुयोगिनी कृशाम् ।
ज्वरितां च कुमारिकां रते-
विपरीते तु विवर्जयेत्सुधीः ॥ ८ ॥

## । अथ करताडनसीत्कृतोद्देशः ।

कामयुद्धेऽङ्गयुग्मं स्यात् करताडनसीत्कृते ।
तत्ताडनं चतुर्धा स्यात् सीत्कृतं पञ्चधा स्मृतम् ॥ १ ॥
प्रसृतेनापहस्तेन मुष्टिना समपाणिना-
ताडनं स्याच्चतुर्द्धैव तस्य स्थानानि सम्ब्रुवे ॥ २ ॥
पार्श्वे गुह्ये **समतलं मुष्टिं** पृष्ठेऽथ मूर्द्धनि ।
**फणाकारं प्रसृतिकं** योज्यं हृद्यपहस्तकम् ॥ ३ ॥

## । अथ ताडनभेदाः ।

विपरीतरते यदाङ्गना-
हृदि मुष्टया परिताडयेत्पतिम् ।
करघातनक तदा बुधै-
रिति **सन्तानिकसंज्ञ**मुच्यते ॥ १ ॥
विस्तीर्णहस्तेन रतौ यदा स्त्री-
हन्यात्पतिं स्यात्**सपता**कसंज्ञः ।
अङ्गुष्ठकेनैव कृतप्रहारो-
विज्ञैः स उक्तः खलु **बिन्दुमालः** ॥ २ ॥
साङ्गुष्ठमध्याङ्गुलिकाप्रहारं-
शनैः पुरन्ध्री कुरुतेऽतिरागात् ।
यद्येष उक्तः कविभिः पुराणै-
रानन्दकृत् **कुन्तल**-नामधेयः ॥ ३ ॥

## । अथ सीत्कृतभेदाः ।

हिङ्कृतं स्तनितं सूत्कृत् ऊत्कृतं फूत्कृतं तथा ।
उच्चारो मुखनासाभ्यां **हिङ्कृतस्या**भिजायते ॥ १ ॥
**स्तनितं** मेघगम्भीर-घोषवत् तदिदं स्मृतम् ।
**सूत्कृतं** तत्तु भुजगाच्छ्वासवत्स्यादथोत्**कृतम्** ॥ २ ॥
वेणुविस्फोटनारावतुल्यं स्यादथ **फूत्कृतम्** ।
मेघबिन्दुर्यथा तोये निपतेत्तद्भवाकृतिः ॥ ३ ॥

सीत्कृतस्येति पञ्चव क्रमाद्भेदाः समीरिताः ॥ ४ ॥

लावकोकिलकपोतहंसिका-
नीलकण्ठरुतसन्निभान् क्रमात् ।
सन्दधाति किल हिङ्कनादिकां
श्चित्रभोगसमये विलासिनी ॥ ५ ॥

सुरते दशनच्छदो यदा
प्रमदायाः परिखण्ड्यते भृशम् ।
दयितेन तदाऽतिरागकृत-
क्रियते सीत्कृतमञ्जसा तया ॥ ६ ॥

**। इति सीत्कृतभेदाः ।**

भोः कामकले ! श्रीसामरस्यशयनीये श्रीरासेश्वरीरासेश्वरौ रहसि सुरतरीत्युल्लसितं **श्रीरासविलासं** रसयत. । श्रीविलासतल्पे प्रविलसतोः श्रीशक्तिशिवयोः सतोः काश्चिद् वशिनीप्रमुखा अणिमादयश्च सख्यः सुरतसाहित्यसहृत्या सहर्ष सेवोन्मुकास्तिष्ठन्ति तत्र तु ।

श्रीअमृतेश्वरी परमामृतपूर्णपात्रेण पान कारयति ।

चित्रा च चमत्कारितं चर्वणं चर्वयति ।

श्रीललिता तु ताम्बूलं ।

पद्मा च पतद्ग्रहहस्ता तरसा थूत्कृत गृह्णाति ।

वशिनी तु बालव्यजनेन प्रस्वेदमपसारयति ।

प्रोञ्छति च त्रिपुरा वस्त्रेण तद्वपुः ।

अणिमा तु श्रीस्वामिन्या वेण्यां मल्लिकामालतीकमलकेतकीपत्रपुष्पप्रचय विरचयति । इत्थं कति कति सख्यः सुखशयने सुषुप्तस्य श्रीमदर्द्धनारीश्वरस्य सामरस्यमास्वादयतश्चरण-कमलं शुश्रूषन्ते सहर्ष च सम्वाहयन्ति ।

केचिन्मिष्टमुख्याः सखायः भूतिप्रभृतयो दास्यश्च ससम्भ्रमं पूर्णानन्दब्रह्मानुभवान्तराः श्रीसामरस्यचमत्कृतिमवगत्य निःशङ्कं च निस्त्रपं नृत्यन्ति हसन्ति च हासयन्ति श्रीहंससन्दोहं सरोमाञ्चं हर्षाश्रूणि मुञ्चन्ति वल्गन्ति चेतरेतर कीर्त्तयन्ति गायन्ति च यथा-ज्ञानमिति दिक् ॥

प्रिये ! पूर्णानन्दोल्लसितः श्रीरहस्यरासः शिवोऽपि न ज्ञायते ।

तत् केन विजानीयादिति **श्रुतेः ।**

श्रीरहस्यरासज्ञानतो नो किमप्यन्यत् ।

कैवल्यमिदमेव ।

'तत्र को मोहः कः शोक एकत्वमनुपश्यत' इति **श्रुतेः**

धन्योऽहं श्रीरहस्यरासेन श्रीहंसः ।

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे श्रीराजयोगे रहस्यरास-कथनं नाम पञ्चाशत्तमोल्लासः ॥**

श्रीहंसः-कान्ते ! किं वक्तव्यं ? यद्यपि निगमादिभिरोपस्थ्यं दूषितम् ।

'श्येतमदत्कमदत्कं श्येतं लिन्दु माभिगाम्' इति श्रुतेः ।

अदत्कं दन्तरहितं लिन्दु पिच्छिलं श्येतं स्त्रीचिह्नमित्यर्थः ।

। भागवतेऽपि ।

स्वजनसुतात्मदारधनधामधरासुरतै-
स्त्वयि सति किं नृणां श्रयत आत्मनि सर्वरसे ।
इति सदजानतां मिथुनतो रतये चरतां-
सुखयति कोन्विह स्वविहते स्वनिरस्तभगे ॥ १ ॥

इति मिथुनीभूतान् भक्तानपि निन्दन्ति वेदाः ।

तर्हि श्रीभगवति मैथुनावकाशः क्वेत्यतः श्रीपरागमरहस्य-वचनमेव मन्तव्यं नो दुष्टं किमपि ।

सुन्दरि ! वेदादिषु सुरतस्य या जुगुप्साऽस्ति सात्वीश्वरेणैव विज्ञायते न पामरैः ।

यद्यपि मैथुनं निन्द्यं तदपि श्रीरसिकानां तु वन्द्यमेव ।

शिवरहस्ये विहितत्वाद्यथा ।

भगस्य स्मरणे पुण्यं भगस्य दर्शने तथा ।
भगस्य पूजने पुण्य भगस्य मैथुने तथा ॥ १ ॥
भगस्य मैथुने देवि ! यत् सुखं मम जायते ।
न तत्सुखं जपैर्होमै-र्न्दानैस्तपसाऽपि वा ॥ २ ॥
मैथुने तु कृते देवि ! यत् पुण्यं जायते भुवि ।
न तत् पुण्यसमं देवि ! कोटितीर्थेषु मज्जनात् ॥ ३ ॥
जपो होमस्तथा दानं दीक्षायागादिकल्पनम् ।
कृतं मैथुनभक्तस्य कलां नार्हन्ति षोडशीम् ॥ ४ ॥
त्रयोदशाब्दादूर्ध्वं हि पञ्चविंशतिवार्षिकी ।
अप्रसूता विशेषेण मैथुनार्हा भवेत्प्रिये ! ॥ ५ ॥
अप्रसूता विशेषेण प्रसूतात्वल्पसूतिका ।
अवश्यं मैथुनं कुर्याच्छक्तिमात्रं महेश्वरि ! ॥ ६ ॥

इत्यादीनि समयाचारादिषु रहस्यशास्त्रेषु सहस्रशो मैथुनप्रशंसापराणि वचनानि किमसच्छास्त्रैर्धिक्कृतमेतावतेति ।

यदीश्वरः स्वभक्तान् सुरतकृत्ये प्रेरयति तर्हि पारमैश्वर्यविलासे किं शङ्क्यम् । स तु सकलसुखमूलं पूर्णमैथुनसुखमनुभवत्येव न काचित्तात्विकी शङ्का कर्त्तव्या ।

वैकुण्ठे हि लक्ष्मीनारायणयोः सुरतम् ।

कैलासे तु गौरीरुद्रयोर्विहारः ।

ब्रह्मसदनेऽपि वाणीविरञ्च्योः ।

इन्द्रसदने शचीन्द्रयोः सुरतम् ।

सूर्येणापि कतिभिः स्त्रीभिः सह सुरत न क्रियते ?

चन्द्रस्य तु रोहिणीप्रभृतिभिः सह मैथुनम् । स्वायम्भुवस्य शतरूपया साकम् ।

वसिष्ठस्यारुन्धत्या सह रासः ।

अगस्तेर्लोपामुद्रया समं मैथुनम् ।

श्रीरामचन्द्रस्य सीतया साकं सुरतम् ।

कृष्णेन तु राधिकाया ।

कति कति कामिन्यः कृष्णेन न सम्भुक्ताः ? ।

यदि मैथुने दूषणं तदेते कर्त्तुमकर्त्तुमन्यथा कर्त्तुं समर्था अपि किं कान्ताभिः सार्द्धं मिथुनधर्मे स्थिताः ।

किन्तु ।

बहिर्मुखानां तिरस्कारार्थमन्तर्मुखीकरणत्वाय सुरतं निन्द्यते ।

तत्त्वतः सौरतसुखमेव पारमार्थिकमिति ।

कान्ते ! इत्थं श्रीनगरे नानानामरूपाभि शतसहस्रशक्तिभिः समं श्रीशक्तिस्वरूप एव परमशिवः एकान्ते प्रकाशे च दिवानिशं श्रीरासलीलयोल्लसति ।

एष श्रीमत्याः पराशक्तेर्महिमा केन कथयितु शक्य. ।

कदाचिद्रासश्रान्तं श्रीनगरस्य महासम्राजं श्रीपरशिवं शश्वत्सौभाग्यवत्या श्रीमहाराज्या पराशक्त्या सार्द्धं विलासपल्यङ्के सुषुप्तं श्रीनागर्यः श्रुतिमूर्त्तयः श्रीपूर्णधामाधः स्थित्वा वेणु-वीणादिसमुत्थसुमधुरस्वरेण श्रीभैरवादिनानारागाञ्चितेन श्रुतितत्त्वस्तुतिगर्भितेन प्रबोधयन्ति ।

तत्रादौ श्रीपट्टराज्ञी जागर्त्ति ततः परमेश्वर. प्रबुध्यते ।

अथ प्रबुद्धौ श्रीरासनायकौ विज्ञाय कति कति नागर्यः आल्यश्च सेवकाश्च सेवार्थं तत्र गन्तुं त्वरन्तइति दिक् ।

## इत्यधिदैवतरासवर्णनम् ।

## अथाधिभौतिक उच्यते ।

तत्रापि ऋतुषु यद्यदुचितं तत् समीचीनम् । मर्यादायां स्थित्वा श्रीरसिकै रन्तव्यम् ।

भूतानि चतुर्विधानि तानि सर्वाण्येव रासक्रीडातत्पराणि ।

किन्तु, पारवश्यान्नावबुध्यते तत्तेषां जन्ममरणादि दुःखजालम् ।

अत एवादौ श्रीहंसरूपगुरुशुश्रूषया हंसो भूत्वा मनुष्यः पश्चाच्छ्रीरासशास्त्रमाश्रित्य श्रीहंसमण्डलन सह गायनवादनोद्यतश्छित्वाष्टौ पाशान् सुखेनैव रासविलासमनुतिष्ठेत् ।

हंस्या सहैव सुरतं न तु वायस्या ।

तत्रापि स्वजातिः श्रेष्ठा ।

यद्यपि विजातिर्हंसी तथापि तया समं न सुरतम् ।

हंस्याऽपि वायसेन साकं सम्भोगो न कार्यः ।

मर्यादामङ्गीकृत्य वर्त्तितव्यम्।

एकमपि द्वन्द्वं नोचेन्न स रासोत्सवः।

केवलं हंसा हंस्यश्चापि नो रासे शुभाः।

अधिदैवते तु एक एव शिवः, अनन्तशक्तिभिः सविहारः।

अत्र तु, क्षणभङ्गुरत्वात् मलमूत्रश्लेष्मप्रचुरशरीरत्वाच्चाशक्ततयापि स्वस्त्रियैव सह विहरणम्।

स्त्रियाऽपि स्वशिवेन सदा रन्तव्यम्।

परस्परनिर्देशेन तु परसम्बन्धोऽपि न निन्द्यः। बलात्कामपि कामेन द्रव्यवार्त्तादिभिश्च प्रलोभ्य न मैथुनमाचरणीयम्। ऐहिकामुष्मिकभयापत्तेः। सर्वमन्यत्समानम्। केवलमर्चन-क्रीडैव भारतवर्षे शुभा। इतरक्रीडानामनवकाशादनधिकाराच्चेत्यधिभौतिकरासभेदः॥२॥

## । अथाध्यात्मरासः।

श्रीसद्गुरुकृपया स्वात्मरूपमासाद्य विशुद्धं प्रबुद्धबुद्ध्या सार्द्धं तत्सखीभूताभिः श्रद्धामेधा-स्मृतिधृतिभक्तिप्रभृतिभिः कतिकतिशक्तिभिः साकं क्रीडितव्यं भावनामयत्वात्। एषा रास-क्रीडा नीरसा।

पूर्वोक्तात्त्वार्द्रा।

केवलं स्त्रिया वा पुरुषेण वियोगे एषाथवाऽधिदैवतक्रीडा प्रगातव्या संश्लिष्टाभ्यां स्त्रीपुंसाभ्या तु सर्वदैवाधिदैवतदृष्ट्याऽऽध्यात्मदृशाऽऽधिभौतिकरासक्रीडा कार्या।

'क्रियासिद्धिः सत्त्वे वसति महतां नोपकरणे' इति वचनात्।

अन्नोदकवार्त्तया किं क्षुत्तृषानिवृत्तिः?

अत आत्मना हंसोऽहमित्यनुभूय सन्ततं संसारमनुसरताऽपि प्राणिनाऽधिभौतिकरास-दशाऽऽश्रयणीया।

तदभावेऽधिदैवतरासः कीर्त्तनीयः।

अध्यात्मदृष्ट्याऽपि रासस्त्ववश्यमेव स्मरणीयः।

पशुक्रीडया पुनर्जन्मापत्तिः।

श्रीपारमहस्यरासे तु न जातुचिदापच्छङ्का।

## । आगमरहस्येऽपि।

योगिनो मदमत्ताश्च पतन्ति प्रमदोरसि।
मदाकुलाश्च योगिन्य, पतन्ति पुरुषोरसि॥ १॥
मनोरथं हि सम्पूर्णं कुर्वन्त्यपि परस्परम्।
विकृतिं मनसो हित्वा यथोल्लासः प्रवर्त्तते॥ २॥

इत्याद्यनेकवाक्यैराधिभौतिकरासस्त्वागमे प्रसिद्धः।

अधिदैवतं तु लक्ष्यार्थत्वेन विज्ञातव्यम्।

अध्यात्ममपि विज्ञानं चमत्कृतये ज्ञेयम्।

वस्तुतः सामरस्ये तात्पर्यम्।

लोकमर्यादा महतीत्यतस्तामीषत् संरक्ष्य सर्वदा श्रीसामरस्यविलासे स्थेयम्।

निन्द्यं तु नाचरणीयम् ।

श्रीरासे नो किमपि निन्द्यम् ।

सर्वे श्रीरासे एव वर्तन्ते ।

पशुत्वान्न ज्ञायते अतः शाठ्यान्निन्द्यते ।

किं किं निन्द्यमित्याशङ्कसे चेच्छृणुष्व-

श्रीरासे याऽस्माभिः सुधा भण्यते सा सुरेत्यनुमित्या ज्ञात्वा दुर्जनैर्निन्द्यते सुरापानं कुर्वन्तीति । अस्तु सुरैव सुधा तस्या दौर्लभ्यात् सुराऽपि सर्वैः स्वीक्रियते सर्वं सुरामयं भोज्यम् **आगमे रुद्रयाम**लादावुक्तत्वात् ।

यथा ।

अधुना देवि ! वक्ष्यामि सुरोत्पत्तिं सुरेश्वरि ! ।
यस्याः स्मरणमात्रेण दीक्षाफलमवाप्नुयात् ॥ १ ॥
समुद्रे मथ्यमाने तु क्षीराब्धौ सागरोत्तमे ।
तत्रोत्पन्ना सुरादेवी कुमारीरूपधारिणी ॥ २ ॥
नग्ना कालाग्निसदृशी कृतहासोल्लसन्मुखी ।
अष्टादशभुजा दिव्या नवकुम्भधरा तथा ॥ ३ ॥
नवपात्रधरा तद्वन्मदिरारुणलोचना ।
नानाकुसुमभूषाढ्या मुक्तकेशी त्रिलोचना ॥ ४ ॥
नानारत्नाङ्गदयुता मुक्ताहारलताञ्चिता ।
रत्नाङ्गुलीयशोभाढ्या तुङ्गपीनस्तनाञ्चिता ॥ ५ ॥
विचित्ररत्नखचितकाञ्चीगुणनितम्बिनी ।
रत्नसिंहासनगता परमानन्ददायिनी ॥ ६ ॥
तां दृष्ट्वा तुष्टुवुर्देवि ! ब्रह्मविष्णुमहेश्वराः ।
ससुरासुरगन्धर्वाः सेश्वराः ससदाशिवाः ॥ ७ ॥
तदा प्रसन्नवदना वरदानोद्यता सुरा ।
आदौ पात्रं ददौ दिव्यमानन्दरसपूरितम् ॥ ८ ॥
सदाशिवाय देवेशि ! स नत्वा पात्रमग्रहीत् ।
पात्राद् बिन्दुः पपातोर्व्यां जाता गुडलता ततः ॥ ९ ॥
बिन्दुपातात्कणा जाता-स्तेभ्यो जाताः सहस्रशः ।
इक्षुभेदाश्च खदिरा-स्त्र्यूषणाद्याः सितादयः ॥ १० ॥
क्रमुका नागवल्ली च स्रवन्ती च महेश्वरि ! ।
गौडी चेतद्युता प्रोक्ता सर्वार्थफलदायिनी ॥ ११ ॥
ततो ददौ परं पात्रमीश्वराय सुरा शिवे ! ।
पात्राद्बिन्दुः पपातोर्व्यां जाता गोधूमजातयः ॥ १२ ॥

तत्कणेभ्यस्तदन्ते च जाता वै धान्यजातयः ।
पैष्टी प्रोक्ता सुरा देवि ! परमानन्ददायिनी ॥ १३ ॥
ततो ददौ परं पात्रं विष्णवे प्रभविष्णवे ।
पात्राद्बिन्दुः पपातोर्व्या सम्बिज्जाता ततः प्रिये' ॥ १४ ॥
तत्कणेभ्योऽपि देवेशि ! तद्भेदाः कनकादयः ।
अन्ये च बहवो जाता भेदा मदनवर्द्धनाः ॥ १५ ॥
विजयेति मया प्रोक्ता वैष्णवी परमार्थदा ।
ततो ददौ परं पात्रं श्रीसुरा परमेष्ठिने ॥ १६ ॥
पात्राद्बिन्दुः पपातोर्व्या जातः शीघ्रं परूषकः ।
तत्कणेभ्योऽपि सञ्जाता भेदाः क्षौद्ररसादयः ॥ १७ ॥
पानकं प्रोक्तमीशानि ! सर्वसाधारणं परम् ।
ततो ददौ परं पात्र-मिन्द्रायामृतपूरितम् ॥ १८ ॥
पात्राद्बिन्दुः पपातोर्व्या जातं जातीफलं ततः ।
तत्कणेभ्योऽपि सञ्जाता भेदाश्चामलकादयः ॥ १९ ॥
पानकं नाम तद्दिव्यं रसायनमुदाहृतम् ।
ततौ ददौ परं पात्रं गुरवे गिरिजे सुरा ॥ २० ॥
पात्राद्बिन्दु. पपातोर्व्या गुडपुष्पं ततः शिवे ! ।
जातास्तत्कणजा भेदा नालिकेरफलादयः ॥ २१ ॥
पानकं नाम देवेशि ! रसायनमिदं परम् ।
ततो ददौ पर पात्रं शुक्रायामृतपूरितम् ॥ २२ ॥
पात्राद्बिन्दु. पपातोर्व्यां जाताः खर्जूरपादपाः ।
तत्कणेभ्योऽपि सञ्जाता भेदा वादामकादयः ॥ २३ ॥
पानकं तदपि प्रोक्तं दिव्यं सन्तोषकारकम् ।
ततो ददौ परं पात्रं सूर्याचन्द्रमसोः सकृत् ॥ २४ ॥
पात्राद्बिन्दुः पपातोर्व्यां जाता सञ्जीवनौषधिः ।
तत्कणेभ्योऽपि सञ्जाता विविधौषधयः शिवे ! ॥ २५ ॥
पानकं तदपि प्रोक्तं सर्वसारस्वतप्रदम् ।
दत्वा दिव्यं रसं देवि ! सुरा तत्र तिरोदधे ॥ २६ ॥
ते सर्वे परमेशानि ! सुरानन्दैकनिर्भराः ।
सदाशिवादयो देवाः सुरायै च वरं ददुः ॥ २७ ॥
ये पिबन्ति परं पानं परमानन्दकारकम् ।
ते सर्वे यान्ति परमं पदं शाश्वतमव्ययम् ॥ २८ ॥
विना गौडी विना माध्वी सुरां यः पूजयेच्छिवाम् ।
शिवं नारायणं रुद्रं स भवेन्निरयास्पदम् ॥ २९ ॥

अदीक्षितः पशुर्देवि ! दीक्षितोऽप्यसुरः पशुः ।
तस्मात् सुरां शिवेऽभ्यर्च्य पूजायां वैष्णवोत्तमः ॥ ३० ॥
पिबेद्गौडी तथा माध्वी पैष्टीमासवमुत्तमम् ।
पानकं च शुभं सर्वं पूर्वाभावे परं परम् ॥ ३१ ॥
इतीदं परमं तत्त्वं कौलिकानां रहस्यकम् ।
आनन्देश्वरसर्वस्वं गोपनीयं स्वयोनिवत् ॥ ३२ ॥
इत्यादि ।

**श्रीवाल्मीकिरामायणे बालकाण्डे च ।**

वरुणस्य ततः कन्या वारुणी रघुनन्दन ! ।
उत्पपात महावीर्या वाञ्छयमाना परिग्रहम् ॥ २७ ॥
दितेः पुत्रा न ता राम ! जगृहुर्वरुणात्मजाम् ।
अदितेस्तु सुता वीर ! जगृहुस्तामनिन्दिताम् ॥ २८ ॥
तेनाभवन् सुरा देवा दैतेयाश्चासुराः स्मृताः ।
हृष्टाः प्रमुदिताश्चासन् वारुणीग्रहणात्सुराः ॥ २९ ॥

इत्यादि सुरैरेवामृतं पीतं नान्यैः ।
सुरया देव्या यद्दत्तं तद् अमृतं सुरेत्यपि ।
किञ्च ।

सर्वम् अन्नाद्यं सुरारसलेशेभ्यः उत्पन्नम् उल्लासमयत्वात् अक्षयत्वात् अमृतमित्याचक्ष्महे ।

सुराया **शास्त्रान्तरे** तु ब्रह्महत्यादिकं पातकं श्रूयतेऽत. शास्त्रविद्भिर्निन्द्यते सुरा ।

तद्विकारा गुडगोधूमादयस्तु गृह्यन्ते ते निर्दुष्टाः पितृपुत्रादिवत् । म्लेच्छादुत्पन्ना म्लेच्छा इवेति यद्यपि जारधर्मेण म्लेच्छाज्जातो ब्राह्मणकुले न म्लेच्छः तद्वत् सुरैव शप्तास्ति न तद्विकाराः तथाऽपि म्लेच्छाज्जातमात्रस्तु म्लेच्छतुल्यः पश्चात्संस्कारैर्ब्राह्मणः सम्पाद्यते तद्वत् संस्कृता विकाराः शुध्यन्ति । नैवमेव । साक्षात्सुरा तु न शप्ता तद्विकाररूपो रसः शप्तः अतो विकारजातं सर्वं दूषितं, तन्न ज्ञायतेऽतज्ज्ञैः 'सुरापानं न कर्त्तव्यम्' इति जल्पन्ति, तद्विकारा गोधूमशर्करादयस्तु भक्ष्यन्ते अतो धिगज्ञान् यन्न विचार्यते । को विचारः । सुरासमुद्रमवमत्य दुग्धाब्धौ निर्मथ्यमाने सुरासमुद्रवर्त्तिनी श्रीसुराख्यानिका शक्तिः तद्रसपूर्णकलशकरा दुग्धसिन्धोराविर्भूता तया प्रेम्णा समर्पितोऽमृतरसः सदाशिवेश्वररुद्रविष्णुब्रह्मेन्द्रबृहस्पतिशुक्रसूर्यचन्द्रैः पीतः पश्चात् तदुत्पन्नद्रव्यविशेषैः रुद्रविष्णुब्रह्माद्यैर्विनिर्मितः सुरारसस्तच्छायाभूतः सर्वैर्देवैरास्वादितः तत्प्रभावतस्त ईज्या, सेव्याश्च समर्थाः । अथ कदाचिद्दैत्या अपि देवानां तद्रहस्यं ज्ञात्वा श्रीभार्गवाचार्यमुपास्य तद्रसमलिहन् तद्विदित्वा रुद्रविष्ण्वादिभिः स रसः शप्तः पश्चात् तद्रसमन्तरानुतप्ताः सर्वे सुराः ।

असुरास्तु निरङ्कुशास्तच्छापमवगणय्य तद्रसं पपुः अतो निन्द्याः क्रूराश्च निरयिणः निर्वीर्यत्वापत्तेः सुरैस्त्वेकीभूय चिन्तितम् । अहह किं कर्तव्यमिति । ततो ब्रह्मविष्णुरुद्रान् ससुरान् इन्द्र इयाज । तत्रेश्वरसदाशिवावप्यागतौ यज्ञावसाने वरं वृण्विति श्रीसदाशिवेन इन्द्रं

प्रत्युक्तम् । तर्हि इन्द्रशुक्राद्यैः सुरैः सुरायां वाञ्छाऽस्ति सा तु कलहेन कलुषीकृता इति सदाशिवोऽभिष्टुतः ततः परमेश्वरोदीरितया ऽऽकाशवाण्या भोः सदाशिव ! स्वशिवां प्रत्यागमशास्त्रं प्रकाशयेत्युदितम् ततः सदाशिवेन तत्तन्मन्त्रैस्तत्तच्छापेभ्यः सुरां मोचयित्वा शोधनविधानेन संशोधिता सा सुरेभ्यः समर्पिता तज्जातं सर्वमप्यभिमन्त्र्य शोधितमेवेत्यागमे प्रसिद्धम् ॥

उक्तञ्च रुद्रयामले देवीरहस्ये ॥

यदा प्रभृति लोकेऽस्मिन् सुरा ख्यातिमुपागता ।
तदा सर्वे सुरा देवि ! ब्रह्मविष्णुहरादयः ॥ १ ॥
तत्संसर्गोद्भवानन्दनिर्भरान्तरमानसाः ।
असुरा राक्षसा यक्षा गन्धर्वा मानवादयः ॥ २ ॥
कालेन कलशास्थाऽभूत् सुरादेवी सुरेश्वरि ! ।
कलिना कालरूपेण बाधिते जगति प्रिये ! ॥ ३ ॥
भजन्ति च सुरां दिव्या मन्त्रसंस्कारसंस्कृताम् ।
शप्ता शुक्रेण देवेशि ! कचचर्वणहत्यया ॥ ४ ॥
शुक्रशापवशाद्देवा ब्रह्मविष्णुशिवादयः ।
ब्रह्मर्षयः सुरायै तु ददुः शापं यथाक्रमम् ॥ ५ ॥
ब्रह्महत्या सुरापानं समं ज्ञेयं महेश्वरि ! ।
सुरा शप्ता यदा देवैस्तदा दैत्या मुदं ययुः ॥ ६ ॥
सुरां पीत्वा तु दितिजैर्देवा बलविवर्जिताः ।
स्वर्गान्निराकृता देवि ! पुरन्दरपुरःसराः ॥ ७ ॥
तदा जिष्णुं पुरस्कृत्य देवा यज्ञमतन्वत ।
सदाशिवादयो देवि ! प्रादुर्भूता मखोत्तमे ॥ ८ ॥
वरं वृणु यथाभीष्टं देवनायक ! सांप्रतम् ।
तं तु चाशु प्रयच्छामो गच्छामो निलयं स्वकम् ॥ ९ ॥
तदा शुक्रोऽब्रवीद्देवि ! पुरस्कृत्य गुरुं शिवे ! ।
तृणाग्रबिन्दुमात्रेण सुरायाः प्राशितेन च ॥ १० ॥
या तृप्तिर्जायतेऽस्माकं न सा घृतघटीशतैः ।
सा शप्ता ब्रह्मणा देवि ! विष्णुना शङ्करेण च ॥ ११ ॥
ता विना निर्बला जाताः शक्राद्याश्च पराजिताः ।
तदा सर्वे सुरा देवं शिवमीश्वरमव्ययम् ॥ १२ ॥
तुष्टुवु परया भक्त्या प्रणिपत्य पुनः पुनः ।
ॐमेकाक्षराय रुद्राय त्वकारायात्मरूपिणे ॥ १३ ॥
उकारायादिदेवाय विद्यादेहाय वै नमः ।
तृतीयाय मकाराय शिवाय परमात्मने ॥ १४ ॥

सूर्याग्निसोमवर्णाय यजमानाय वै नमः ।
नमस्ते भगवन् रुद्र ! भास्करामिततेजसे ॥ १५ ॥
भीमाय व्योमरूपाय शब्दमात्राय वै नमः ।
महादेवाय सोमाय ह्यमृताय नमो नमः ॥ १६ ॥
इति स्तुत्वा परं देवं भैरवं शिवमीश्वरम् ।
प्रणेमुः सकला देवा ब्रह्मविष्णुहरादयः ॥ १७ ॥
तदा वागुदभूद्व्योम्नः पञ्चव्योमशरीरिणाम् ।
सुरेयं सर्वदा सेव्या सकलैस्तु मुमुक्षुभि ॥ १८ ॥
युक्त्याऽनया प्रसङ्गेन यथावदनुपूर्वशः ।
चतुर्थवेदरूपोऽहं ऋग्यजुःसामरूपवान् ॥ १९ ॥
अथवाऽहं च मन्त्रात्मा परमात्मा शिवोऽव्ययः ।
वेदानालोड्य वेदार्थं मन्त्ररूपं विधाय च ॥ २० ॥
कुरुकुल्लां महाविद्यां सदाशिव प्रकाशय ।
आगमं नाम शास्त्रं तु चतुःषष्ट्यात्मकं परम् ॥ २१ ॥
तस्मिन् सुराविशुद्धिं तु प्रकाशय मनूत्तमै ।
इति वाणी शिवोद्भूता विरराम यदा परा ॥ २२ ॥
तदा सदाशिव देवं तुष्टुवुः प्रणताः सुराः ।
ॐकाररूपिणे देव नमस्ते विश्वरूपिणे ॥ २३ ॥
नमो देवादिदेवाय महादेवाय वै नमः ।
अर्द्धनारीशरीराय साङ्ख्ययोगप्रवर्त्तिने ॥ २४ ॥
वेदशास्त्रार्थगम्याय शाश्वताय नमो नमः ।
दीनार्त्तत्राणकर्त्रे च नमस्ते दिव्यचक्षुषे ॥ २५ ॥
नमः सहस्रशीर्षाय नमः साहस्रिकाङ्घ्रये ।
नमो मन्त्राय चिद्व्योमवासिने परमात्मने ॥ २६ ॥
इति स्तुतो महादेवो महात्मा श्रीसदाशिवः ।
प्रोवाचागमशास्त्र तु मोक्षमार्गं महात्मनाम् ॥ २७ ॥

इत्यादिकं च ।

पूजायां यद्यदानीतं भोज्यं भक्ष्यं च लेह्यकम् ।
पेयं चोष्यं फलं पुष्पं सर्वं मन्त्रेण मन्त्रयेत् ॥ १ ॥
विनाऽभिमन्त्रणेनैतद्यो मोहाद्भक्षयेच्छिवे ! ।
स मान्त्रिकोऽपि देवेशि ! सहसा निरयी भवेत् ॥ २ ॥

इत्यादि

अथ शास्त्रोक्तवर्त्मना स्वहस्तेन निष्पादिता सन्मन्त्रसंस्कृता सुरा कथं जुगुप्सिता यद्यपि मद्यकारागारादाहृता तथापि शोधिता सा नो दुष्टा वक्तव्या ।

सा जलमयी न भवति किन्तु तेजोमयीति तैलवद्दीपके ज्वलति । सा न पानीयं यद्यपि पानीयं तदपि ताम्बूलचूर्णैलादिषु नानावस्तुषु तज्जलं घृते तक्रं तज्जलं च अन्यत् । हिङ्गु-शर्करागुडाद्यं सर्वं सङ्करं भवति परन्तु तत्तच्छुद्धिमन्त्रशोधितं शुद्धमेव, न निन्द्यमित्यूह्यं तत्त्व-विद्भिः । सच्छास्त्रमन्त्रैः संशोधितमपि चेदग्राह्यं तर्हि प्रायश्चित्तशास्त्रस्य वैयर्थ्यम् । वृत्रहा इन्द्रः ऋषिभिः श्रौतमन्त्रैः शुद्धः कृतः । पुराणादिषु त्वनेके शापादिपातकेभ्य. मोचिताः । आशौचा-दिदूषिताः केचिद्दशमेऽहनि क्षौरपूर्वकस्नानादिना शुचीभूय देवपितृप्रमुखान् सर्वान् पूजयन्ति एवं यदि प्रायश्चित्तशास्त्रस्य प्रामाण्यं तर्हि त्वदूष्यैव सुरा, नो चेत् पातकशास्त्रस्यापि किं प्रमाणम् । एवं तु नास्तिकत्वापत्तिः ।

अतः आगमदर्शिता सुरा ऽमृतमयीत्यागमप्रधानाः केचनामृतप्रतिनिधिरूपां सुरां स्वीकु-र्वन्ति अपरे च भङ्गां भक्षयन्ति । सा विष्णुना पिबत्सुराबिन्दुतः समुत्पन्नास्तीत्यतो वैष्णवीति वैष्णवा विज्ञाय गृह्णन्ति । वैष्णवी तुलसी तुङ्गेति तस्या वैष्णवीति नामापि भवति ।

अतस्तन्मन्त्रमन्त्रिता सा भक्षिता न कश्चिन्निन्द्या सा रुद्रेण नारदाय दत्ता नारदेन च सनत्कुमाराय सनत्कुमारेणान्यस्मै ।

एवं पद्मपुराणादिषु भङ्गायाः प्राशस्त्यम् ।

## इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे सुरादिकथनं नामैक-पञ्चाशदुल्लासः ॥ ५१ ॥

श्रीहंसः-प्रिये ! भङ्गामाहात्म्यमपीषदुच्यते ।

**पद्मपुराणे ।**

सनत्कुमार उवाच ।

देवर्षे ! भो ! द्विजश्रेष्ठ ! ब्रह्मपुत्र महामते ! ।
प्रष्टुमिच्छामि किञ्चित्त्वां तन्मे शंसितुमर्हसि ॥ १ ॥

मुने ! कस्य प्रभावेन मनस्ते निश्चलं सदा ।
एकनिष्ठं सदा हृष्टं नेत्रे चातिविलोहिते ॥ २ ॥

मुनीनां मुनिवर्योऽसि ब्राह्मणानां द्विजोत्तमः ।
ज्ञानिना ज्ञानवाँश्चासि स्मार्त्तानां स्मृतिवित्तर ॥ ३ ॥

तस्मात्त्वं दृश्यसे कस्य वीर्येण घूर्णितेक्षणः ।
एतन्मम समाचक्ष्व शापितोऽसि मुरद्विषा ॥ ४ ॥

। सूत उवाच ।

इति पृष्ठस्तदा विप्रः कुमारेण विनीतवत् ।
एकान्ते समुपाविश्य वचनं चेदमब्रवीत् ॥ ५ ॥

॥ नारद उवाच ॥

गोपनीयमिदं ब्रह्मन्न वक्तुमहमुत्सहे ।
आज्ञया देवदेवस्य पुरारातेर्महौजसः ॥ ६ ॥

एतदत्यन्तगोप्य मे किं करोमि वदामि ते ।
इदं तु परमं गुह्यं गुह्याद्गुह्यतरं मम ॥ ७ ॥
यो वदिष्यति सर्वत्र न स सिद्धिमवाप्स्यति ।
एकदा पर्यटन् लोकान् कैलासमगमं द्विज ! ॥ ८ ॥
तत्रापश्यं विरूपाक्षं कर्पूराद्भुतविग्रहम् ।
त्रिनेत्रं कृत्तिवसन मुण्डमालविभूषितम् ॥ ९ ॥
नन्दिकेश्वरमुख्यैश्च गणैः सुपरिवेष्टितम् ।
शेषस्योपरिपार्वत्या सूपविष्टं जगत्प्रभुम् ॥ १० ॥
तत्समीपमथो गत्वा नत्वा दण्डवदानतः ।
स्वागतं तेन सपृष्ट पर्यवोचि मया त्विदम् ॥ ११ ॥
भगवन् देवदेवेश लोकनाथ जगत्प्रभो ।
प्रष्टुमिच्छाम्यहं किञ्चि-त्तन्मे व्याख्यातुमर्हसि ॥ १२ ॥
भगवं ! स्त्वं पर धाम तेजस्तेजस्विनामसि ।
वेदानामादिकर्त्ताऽसि योगानां प्रभवस्तथा ॥ १३ ॥
भगवन् ! येन मनसः स्थैर्य हर्षश्च जायते ।
तन्मे वद महाबाहो ! येन श्रेयोऽहमाप्नुयाम् ॥ १४ ॥

। ईश्वर उवाच ।

शृणु नारद ! वक्ष्यामि तवानुग्रहकारणात् ।
या मे गोप्यतरा वार्त्ता तां तुभ्यं कथयाम्यहम् ॥ १५ ॥
नेयं प्रकाश्या सर्वस्य प्राणान्तेऽपि कदाचन ।
तुभ्यं तु शिष्यभूताय प्रवक्ष्याम्यनसूयवे ॥ १६ ॥
महौषधिर्ममत्वेषा तां विधानेन साधय ।
साधिता ज्ञानफलदा भविष्यति न संशयः ॥ १७ ॥
यन्नाम्ना विजया देवी ब्रह्मपुत्री जयावहा ।
भङ्गा भर्गप्रिया ब्राह्मी ज्ञानमार्गप्रदर्शिनी ॥ १८ ॥
तस्या विधानं वक्ष्यामि शृणु तत्त्वेन सक्रमम् ।
ॐकारत्रययुक्तेन कामबीजेन मन्त्रिता ॥ १९ ॥
समानीता गृहे पश्चाज्जयायै ते नमो नमः ।
ह्रींकारपूर्वमन्त्रेण चूर्णयेद्विधिवत् पुनः ॥ २० ॥
सूक्ष्मवस्त्रेण सञ्चाल्य भर्जयेन्मृदुवह्निना ।
ॐकाराख्येन मन्त्रेण निर्जने यत्नमास्थितः ॥ २१ ॥
ॐक्लीं श्रींह्रींच हुंकार ब्लूं क्ष्म्रौंस्फ्रैंहुं फडितियमुम् ।
मनुमुच्चार्य विधिवन्निर्भयो मामनुस्मरन् ॥ २२ ॥

विजये ! त्वं महादेवी महादेवेन सेविता ।
नानासिद्धिप्रदा सिद्धा समाधिफलदा भव ॥ २३ ॥
ब्रह्मपुत्रि ! सुरश्रेष्ठसेविते विजयप्रदे ।
भुक्तिमुक्तिप्रदे तुभ्यं नमोस्तु ज्ञानदा भव ॥ २४ ॥
भर्गप्रिये ! ज्ञानमार्ग-प्रदर्शिनि नमोस्तु ते ।
ज्ञानमार्गं प्रयच्छस्व विजये त्वां नमाम्यहम् ॥ २५ ॥
इमान् मन्त्रान् समुच्चार्य त्रिराचम्य पुनर्जपेत् ।
वाग्भवं पूर्वमुच्चार्य वदशब्दं ततो द्विधा ॥ २६ ॥
वाग्वादिनि वदेद्वह्निजायान्तो मनुरीरितः ।
जपेदष्टोत्तरशतं सर्वसिद्धिप्रदं मुने ! ॥ २७ ॥
अनेन क्रमयोगेन भक्षयित्वा महौषधम् ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ २८ ॥
अस्याः प्रसादाद्देवर्षे ! योगवानस्मि निर्वृतः ।
एतत्ते सर्वमाख्यातं यत्पृष्टोहमिह त्वया ॥ २९ ॥
गोपनीयं प्रयत्नेन ह्यनाख्येयमिदं वचः ।
शृणु भूयः प्रवक्ष्यामि वीर्यमस्याः समासतः ॥ ३० ॥
त्रिविधेयं च लोकेऽस्मिन् प्रख्याता हि महौषधिः ।
राक्षसी मानुषी दैवी तासां लक्षणमीरयेत् ॥ ३१ ॥
यस्या भक्षणमात्रेण विवशः पुरुष. पशुः ।
तमोगुणगतज्ञानः समुध्धूतविलोचनः ॥ ३२ ॥
जायते तस्य मर्त्यस्य सा तु राक्षसिका मता ।
या तु भक्षितमात्रेण कामसम्भोगलालसम् ॥ ३३ ॥
कुर्यात्पुमासमस्येयं मानुषी परिकीर्त्तिता ।
या तु भक्षितमात्रेण सम्यग् ज्ञानं प्रयच्छति ॥ ३४ ॥
न विवर्णं मुखं कुर्यात् न चोध्धृतविलोचनम् ।
सा तस्य दैवी विज्ञेया यथावदनुपूर्वशः ॥ ३५ ॥
प्रकाशिता तु हास्याय गोपिता सिद्धिदायिनी ।
यो वा मूढमतिः सम्यग् इमां प्रकटयिष्यति ॥ ३६ ॥
असूयकेभ्यो मूढेभ्यो रौरवे स पतिष्यति ।

। नारद उवाच ।

एतावदुक्त्वा वचनं समाश्वास्य च मां द्विज ! ।
सगण. पश्यतो मेऽसौ तत्रैवान्तरधीयत ॥ ३७ ॥
ततोऽहं तस्य देवस्योपदेशेन महौषधिम् ।
भक्षयन् रममाणश्च सञ्चरामि जगत्त्रयम् ॥ ३८ ॥

। सूत उवाच ।

श्रुत्वैतद्वचनं विप्र ! कुमारो हृष्टमानसः ।
नमश्चकार देवेशं वाक्यं चेदमुवाच ह ॥ ३९ ॥
धन्योऽसि कृतकृत्योऽसि मुक्तोऽसि मुनिसत्तम ! ।
यस्य ते सिद्धिदा धन्या मान्या चेयं महौषधिः ॥ ४० ॥
यस्या अनाशयादेव वयं दस्युवदास्थिताः ।
संशीलनेन तु पुनर्भवतानुग्रहः कृतः ॥ ४१ ॥
एतावन्तमहो कालं विधिना वञ्चिता वयम् ।
यदियं न श्रुता देवी न चैव परिशीलिता ॥ ४२ ॥
यस्याः शीलनमात्रेणाज्ञानं नाशमितं मम ।
निशायां निचितं प्रातस्तमः सूर्योदये यथा ॥ ४३ ॥

प्रिये ! इत्यादीनि **समयाचारतन्त्र-विजयाकल्पपुराणा**दिषु नानावाक्यानि भङ्गापानपरत्वानि सन्ति सादुष्टेति वक्तुं सद्भिः कथं शक्या ।

**किञ्च ।**

**श्रौतेऽपि ।**

ज्योतिष्टोमादौ कर्मणि होतृद्गात्रादयः परस्परानुज्ञापूर्वकं द्रोणकलशे निवेशितं सोमवल्लीरसं चमसपात्रेणोध्धृत्य पिबन्ति च शस्त्रस्तोत्रादि गायन्ति ददति चेन्द्रादिभ्यः । 'स्वादिष्ठया मदिष्ठया पवस्व सोमधारया इन्द्राय पातवे सुतः' ।

विभ्राड् बृहत्पिबतु सोम्यं मधु ।

पिबा सोममिन्द्रेत्यादिषु नानावैदिकमन्त्रेषु सुरेन्द्रादीनां सोमरसपान प्रसिद्धम् ।

भगवति ! भङ्गारसवत् सोमरसोप्युल्लासजनकः तात्पर्यमुल्लास एव ।

सर्वमन्नाद्यमपि हर्षवर्द्धनमाप्यायनकरं च तथापि यथारुच्यधिकोल्लासाय सेवकाः सुरासमयासोमादिरसमास्वादयन्ति । न तत्र काचन दोषाशङ्का शास्त्रदर्शितत्वात् स्वैरमन्नाद्यमप्यास्वादयितरि तु दोषः प्रसज्यते ।

अङ्गने ! अस्मदादिषु तु प्रेमपूरगायनैरानन्दः समेधते निरन्तरं प्रेमप्राचुर्येण य आनन्दः स एव शोभनः किमन्योत्पादितानन्देन क्षणावस्थायिना सहजानन्द एवास्मदादीनां तु सम्मतः, नो कृत्रिमानन्दः ।

किञ्च ।

उल्लासाय प्राणाप्यायनार्थं च शर्करादिमिश्रं क्षीरं शीतलं सुवासित च नीरम् ।

खण्डायुक्तदधिमन्थनोत्थितो रस एलादिवासितः श्रीखण्ड इति ख्यातः ।

रामठादिवासितनूतनमृद्भाण्डे निक्षिप्तं तैलादिपक्ववटकयुक्तं तक्रं काञ्जीति काश्यां प्रसिद्धम् । चणकादिपिष्टकथितं बाह्लीकराजिकारजनिमरीचादियुतमपि च तक्रं कढीति ख्यातम् ।

इत्यादीनि नानापेयानि मधुरोल्लासजनकान्यस्मत्प्रभृतिभिस्तु निपीयन्ते उत्कटमदोत्पादकैर्विभ्रमकरैः किं सुरासम्वित्सोमाद्यैः।

किञ्च।

ये सुरादि सेवन्ते ते तत्पानानन्तरं पक्वमांसमप्यभ्यवहरन्ति।

याज्ञिकास्तु पुरोडाशसंज्ञकम्।

निगमागमोदितत्वान्न तन्निन्द्यम्।

किञ्च।

घृतशर्करादिसम्मिश्रा दुग्धपिण्डाः।

गोधूमोत्थसूक्ष्मतरपिष्टतन्तुजनितं सेव्यमिति ख्यातम्।

अन्यानि नानाविधानि पक्वान्नानि लोकप्रसिद्धानि पुष्टिसम्पादकानि प्राणाप्यायनकराणि च वयं त्वद्मः।

न पिशितानि।

यैः सुरादि निषेव्यते तैरेव पिशितादि नेतरैः।

मैथुनं तु न केषामप्यप्रियम्। ब्रह्मविष्णुरुद्रादिभिः सर्वैः शरीरिभिरौपस्थ्यसुखं त्वास्वाद्यते।

तत्र किं शङ्कामहे।

उपस्थं ह्यानन्दार्थमेवोत्थितम्, आनन्द एव तद्विषयः न मूत्रादिः। 'आनन्दो ब्रह्मणो रूपं' स तूपस्थ एवानुभवितुं शक्यः। सामरस्यात्।

हंसि! शृणोषि? मैथुनसमय एव सकलपाशादिभिर्मुच्यते। नान्यत्र तादृशी मुक्तिः। ननु गवादीनां सर्वदैव पाशाद्यभावः। कथं तेषां पशुत्वम्?

'पाशबद्धः पशुः प्रोक्तः पाशमुक्त. सदाशिव'।

इत्युक्तेः।

सत्यम्।

यद्यपि गवादिषु पशुषु घृणादयः पाशाः मैथुनसमयं विनाऽपि क्वचिन्न दृश्यन्ते तथापि स्वात्मानन्दापरोक्षानुभूतिराहित्यात् तेषाम्। मनुष्याणामपि मैथुनतोऽन्यत्र च नापशुत्वम्।

हंसा अपि संसारे सपाशा इव प्रवर्त्तन्ते मर्यादानिष्ठा मातङ्गाः कमलतन्तुबद्धा इव।

किमेतावता पाशबद्धत्वम्? मैथुनवेलायामन्यदापि केचन स्वैरमुन्मत्ताः पाशमुक्ता इवावलोक्यन्ते किं तेषामपशुत्वम्?

किन्तु।

अपरोक्षानुभूतात्मानन्दरूपाः सपाशा निःपाशा अपि त एव मुक्ताः नेतरे।

सुरतसमये तु पाशैः सर्वेऽपि मुच्यन्ते परन्तु तदानन्दानुभूतिचमत्कृतिस्तु श्रीरसिकेष्वेवोल्लसति नो तदनुभवरहितेषु।

ननु।

अननुभूतयाऽपि भुक्तया भङ्गया किं तस्मिन्नोल्लासः? तद्वदविदितात्मानन्दरूपैरपि सर्वैः प्राणिभि सुरतसुखचमत्कारस्त्वनुभूयते किं रसिकैरेव। नो चेत्प्रवृत्तिरेव कथम्?

बाढम्।

यद्यपि सर्वशरीरिभिः सुरतसुखमनुभूयते तथापि काकहंसयोर्विशेषः। वायसस्तु स्वरूपं न जानाति न च स्त्रीरूपं न चौपस्थ्यतत्त्वं नागमदर्शितार्द्धनारीश्वरविलासं, न मुक्तिं न च पाशान् न रासं, केवलं कण्डूयनादिना रेतःपातमात्र सुखमनुभवति।

श्रीहंसः खलु स्वरूपादिसर्वं विज्ञाय सम्प्रयुङ्क्ते।

किं बहुना।

हंसवायसयोः सुरतेऽपि महदन्तरं तत्तदनुपानानि विदित्वा भङ्गाफुकविषसुरादीनि भक्ष्यन्ते तेषां यादृक् सुखं न तादृशं तदज्ञानाम्।

प्रयोजनमुल्लासमात्रम्। परन्तु तत्र तत्त्वविदोऽन्तरं निरीक्षतः किमसत्तमैरूहापोहैः।

तत्त्वज्ञानां तु शैवशास्त्रप्रदर्शित सुरतमेव सत्तत्वं तदाशङ्कितदर्शितानि तद्यतिरिक्तानि सर्वाण्यसन्ति तत्त्वानि न चास्मद्रासिकैर्मन्तव्यानि।

न यत्र सङ्गो मृगलोचनानां तत्तद्दिनं दुर्दिनमेव मन्ये।

दिने दिने पञ्चमसङ्गमोऽस्तु।

इत्यादि **कौलरहस्योक्तेः।**

पञ्चमशब्देन मैथुनम्।

नवीनकान्तारततत्परेभ्यो।

नमो नमः सेवकनायकेभ्यः।

इत्यादीनि बहूनि वाक्यानि **शैवरहस्ये** सुरतपराणि सन्ति का शङ्का?

सुविविक्तः सम्यगनुभूत उपनिषदर्थभूतः **श्रीशैवरहस्य**प्रदर्शितश्चेन्निन्द्यः पदार्थः तर्हि तद्व्यतिरेऽपि वेदान्तादिदर्शिताः सकलाः पदार्थाः।

एतदेव नास्तिक्यम्।

श्रूयते सीमन्तिन्या?।

किमुक्तम्।

श्रीपरमेश्वरप्रदर्शितेऽ**धिदैवतविलासे**ऽनिर्वचनीयममृतं पेयम्।

स्वेच्छासम्पादितानि पक्वान्नानि भक्ष्याणि।

स्वायत्तरेतःपातलक्षणं सुरतमित्यवेहि।

**किञ्चाधिभौतिके रासे** त्वहमादीनां प्रागुदीरितं दुग्धाद्यं पीयूषद्रव्या पेयम्।

पायसापूपलड्डुरोटिकाद्यं भक्ष्यम्।

शास्त्रदर्शितया स्त्रिया सह सुरतम्।

तत्तल्लक्षणगायनाद्यम्।

**आध्यात्मिके रासे**ऽपि अप्रयत्नप्राप्तं जलादि पेयम्।

तादृग् भक्ष्यमपि।

गायनमात्रमेव सुरतम्।

किञ्च।

इतरेषां तु नानासिद्धिलुब्धमानसानां सुरादिकं पेयम्।

पिशिताद्यम्। यत्र कुत्राऽप्यासन्नासुखार्थं वा कुण्डगोलार्थं मैथुनम्।
जपपूजापाठादिकं चेति।

इतरेऽपि सङ्गा यथेच्छं पिबन्ति मद्यायम्। खादन्ति च मांसादि। यथारुचि सजातीयां वर्णा विवर्णा च स्वीयां परकीयामपि स्त्रियं निषेवन्ते ते तु निरयिणः। शास्त्रगर्हितत्वात्पशुत्वाच्च जन्ममरणादिमहादुःखभाजः।

कार्चत्तु कातराः षण्ढाश्च हीनवीर्या आतुरा वृद्धा दरिद्राः कुत्सिताश्च सर्वसारस्यं सुरतं शास्त्रान्तरैः कुत्सयन्ते। न तत्रैतावता शङ्का चेदशक्तः स्यात्तदप्यामरणं क्षणं क्षणं तत्कीर्त्तनं न विस्मरणीयम्।

किञ्च।

हंसि! श्रीरासे सुरतं ये जुगुप्सन्ते त एव जुगुप्सिताः। पौर्वापर्येण श्रीश्रुत्युत्तमाङ्गभूतागमरहस्यं सद्गुरुसम्प्रदायतः प्रविज्ञाय तदनु निन्द्यं वन्द्यमिति वा वाच्यम्। एवमेव निन्दया तु दुरितापत्तिः।

चित्रमेतत् सुरतं कुर्वाणा अपि विगर्हन्ते। किन्न ते लज्जन्ते? एष श्रीतिरस्करिणीप्रभावः पिबन्तः खादन्तः सम्विशन्तश्चापि यन्निन्दन्ति किं तद्वक्तव्यम्।

विलासिनि! विलोक्यतां लोकः। लोकोक्तौ किं प्रमाणं? कामलोपहतनेत्रवद्विशुद्धमप्यशुद्धं पश्यति अदुष्टं जानन्नपि पण्डितम्मन्यो द्वेषवशाद्दुष्टमित्यपवदति। तन्मूर्खस्य का कथा भवत्वेतत् किमसद्वाग्वादैः।

भूरीणि शास्त्राणि महर्षिभणितानि। तेषु विवादा अपि बहवः। कस्य मतं समञ्जसं कस्य नेत्यत शैवशास्त्रमेवास्मदादीनां श्रीहंसानां तु सर्वतः सम्यग् यस्य यादृशी रुचिः तेन तादृशी शास्त्रवृत्तिराश्रयितव्या।

प्रारब्धाधीनत्वं सर्वेषां, न कश्चन स्वतन्त्रः येन सर्वैं किल साम्येन प्रवर्तितव्यम्। पारवश्यात् सर्वत्र वैषम्यम्।

किन्तु।

सद्गुरुसम्प्रदायं विदित्वा यथेच्छं प्रवर्तितव्यम्। न तदपि किञ्चिन्निन्द्यम्।

येषां दृढा भक्तिरिहास्ति शास्त्रे-
प्रवर्तन्तां ते स्वशुभाय नूनम्।
यस्यास्ति सा नैव स भिन्नशास्त्रे-
प्रवर्तता निन्दकता तु नार्हा॥ १॥

## इति कुलप्रकाशोक्तेः।

हंसी-भोः स्वामिन् 'यद्यपि शुद्धं लोकविरुद्धं नाचरणीयमि'ति लोकशुद्धाचरणे नो जुगुप्सा।

श्रीहंसः-सम्यक् सम्यक् सुन्दरि! चेल्लोकशुद्धं तर्कि तेन लोकाचारेण यदि शास्त्रशुद्धं लोकविरुद्धं भवेत्तदपि तदाचरणादैहिकमामुष्मिकमपि फलं केन निवारयितुं शक्यं केवलं लोकशुद्धाचरणं लोके एव स्तुत्य न परत्र। देहान्ते तु निरयापत्ति। लोकशास्त्रयोरपि परस्परं

विरोधः। यल्लोक आचरति तच्छास्त्रेण निन्द्यते, यच्छास्त्राचरणं तल्लोके 'उदरं पूर्यते येन तत् सम्यक्' इत्युक्त्वा शास्त्रोक्तं केन पालयितुं शक्यमित्यसत्कुरुते, उभयोरपि शुद्धाचरणमिति तु दुर्लभतमम्। यथा शास्त्राचारः शास्त्रान्तरीयाचारैर्निन्द्यते तद्वल्लोकेऽपि लोकान्तराचारैर्लोकाचारोऽप्याक्षिप्यते। यदि लोके शुद्धं विरुद्धं वा शास्त्रे तु शुद्धाचरणं स्यात् न तदाचरितेऽत्र परत्र च काचिदापत्। तदाचारवन्तं लोकः किं कर्तुं निर्भर्त्सनया शक्तः? सावधानात्। निबिडलगुडकरं नरं बुक्कयन्तोऽपि कुक्कुराः किं दष्टुं शक्ताः? आशीविषगारुडिवत् लोकः किं भक्तस्य कर्तुं शक्तः?

प्रिये! तथापि **शैवरहस्ये** विहितत्वात् लोकविरुद्धं यत्तत् समक्षं नो विधेयम्।

'गोपनीयं स्वयोनिवदि'त्युक्तेः।

यथासुखमेकान्ते विधातव्यम्।

तच्छुद्धं तु तदध्यक्षमनुष्ठेयम्। वस्तुतो यद्रहस्य तत्र सारस्यम्, यत्प्रकटं तन्नीरसं लोके शास्त्रेऽपि यद्यद्दुर्लभतरं सुन्दरं सरसं दृङ्मनसरञ्जनं वस्तु तत्प्रयत्नेन सर्वैर्यत्र तत्र गोप्यते स्त्री कुचोपस्थादिकं गोपायति सारस्यात्, धनवन्तः स्वर्णरत्नादि। तद्वत् सर्वतः परमरहस्यं सुरतं तत्तु गुप्ततरं कृतं चेच्छुभम्।

यद्यपि लोकस्तदाचरणं जानाति तदप्यलक्ष्यं केन शक्यं कथयितुं लज्जाबाहुल्यात्। पुमांसः पुरन्ध्र्यश्च परस्परसमक्षं नो सुरतस्य नाममात्रमप्युच्चैरुच्चरन्ति न च तत्साधनभूतयोर्भगलिङ्गयोरपि, रहस्यतमत्वात्।

सुवर्णमुक्ताफलहीरकादि नानारत्नं चापि समर्प्य मैथुनमनुष्ठीयते मनुजाद्यैः। अतः सर्वस्माद्रत्नव्रातात् सुरते सुखमधिकं मन्यामहे।

ननु बुभुक्षितस्य किं तद्रोचते? अतोऽन्नमेव ततोऽधिकमिति चेच्छ्रूयताम्।

मैथुनार्थं धृतमेवेदं पुरा शरीरं प्राणिना।

तत्र रेतसः प्राधान्यं, वीर्यं विना न सुरतस्य सिद्धिः।

अन्नाद्रेत उत्पद्यते अतोऽन्नस्यापि सुरते पारम्पर्येण कारणता।

विनाऽप्यन्नं देवा वीर्यवन्तः।

नानान्नमदन्तोऽपि केचिदिह निर्वीर्याः।

किन्तु–

अन्नाद्वाऽन्यस्माद्वाऽपि स्वतः समुल्लसितं वीर्यमेव प्रधानं मैथुने। अत्र तु परमान्नरसादिना मनुष्यशरीरेषु शुक्रोत्पत्तिः जीवनमपि चान्नाद्यम्। अतस्तदपि साधनभूतमेव।

किञ्च

अखिलं खाद्यं पेयं परिधेयं चान्यदुपभोगादिकं मैथुनाङ्गभूतमेव, मैथुनं तु मुख्यम्।

कृतार्थोऽहं श्रीसुरतकीर्तने श्रीमैथुनमित्युच्यमाने

दग्धीभवन्ति दुर्भगाः विदग्धास्तु वर्द्धन्ते।

न गृहं न धनं न भूषणं वसनं नो न हि भक्ष्यमुत्तमम्।

न यशो न च सन्ततिर्न वाक् सुरतं वै शरणं सदाऽस्तु मे॥ १॥

इत्यादीनि **रहस्यगायनानि** श्रीरसिकैस्तु सर्वदैवकीर्त्यन्ताम्।

इत्थं परिकीर्तयत्सु श्रीरसिकेषु यावज्जीवमत्र सुखं परत्र च श्रीशिवयोः सामरस्यावाप्तिः इत्यतः सादरं स्मर्त्तव्यम् ।

श्रुतं वरवर्णिन्या ? अस्मद्दर्शिने श्रीरासे पेयं भक्ष्यमित्येतद्द्वयं तु लोकोत्कृष्टं शास्त्रशुद्धमपि । न तत्र किञ्चिच्छङ्क्यं येन जुगुप्सा स्यात् । मैथुनं तु केन न क्रियते यन्निन्द्यमित्याशङ्क्यम् । तदपि पण्डितपशवो निन्दन्ति चेत्तदाऽधिक्येन निन्दन्तु नाऽस्माकं क्षतिः ॥

भो हंसि ! किमभीक्ष्णं भणेयम् । मम बुद्धिरप्रबुद्धा द्विक्षणावस्थायिनी, मर्त्यं शरीरं केवलं मलीमसं क्षणमप्यन्नोदकाद्यं विना न निर्वृणोति, मम प्राणः द्युनिशं रुजोऽपि पीडयन्ति, भिल्ल-भूपा अपि प्रतिदिनं भाययन्ति, प्लुष्यते वपुरसच्चिन्तासंहतिभिः ।

दुःखमप्यावृतं मामभितः ।

दुःखजालं किलेदं जगत् तत्र सुखमहं किं लिप्सेयेत्यतः श्रीनाथसद्गुरुपदपङ्कज प्रसादतस्त्वया सार्द्धमखण्डदण्डायमानं श्रीनगरोल्लसितं श्रीशक्तिशिवयोः सामरस्यं शरणं प्रपन्नोऽस्मि ।

यथा ।

न स्नानं न च सन्ध्यादि ध्यानं नो दानपूजने ।
नो तर्पणब्रह्मयज्ञौ श्रीरासः शरणं मम ॥ १ ॥
नावसथ्यं वैश्वदेवं नाग्निहोत्रं न च व्रतम् ।
न श्राद्धं सूतकाद्यं च श्रीरासः शरणं मम ॥ २ ॥
नोपोषणं च नोपास्तिः श्रीपञ्चायतनस्य तु ।
न सिद्धयो यन्त्रमन्त्राः श्रीरासः शरणं मम ॥ ३ ॥
न शङ्का न च भीर्न ह्रीर्न श्रीर्नो धीर्न गीरपि ।
नो कुटुम्बज्ञातिवर्गः श्रीरासः शरणं मम ॥ ४ ॥
न शत्रवो न मित्राणि न च सम्बन्धिबन्धवः ।
न दुःखं न च संसारः श्रीरासः शरणं मम ॥ ५ ॥
न विप्रः क्षत्रियो नाहं न वैश्यो नान्त्यजः खलु ।
न वर्णोऽहं न च ज्ञातिः श्रीरासरसिकोऽस्म्यहम् ॥ ६ ॥
नोपाध्यायो न शिष्योऽहं साग्निको न निरग्निकः ।
न होता यजमानश्च श्रीरासरसिकोऽस्म्यहम् ॥ ७ ॥
न व्रती न यतिर्नूनं न गृही ब्रह्मचर्यभाक् ।
न जापको नार्चकोऽपि श्रीरासरसिकोऽस्म्यहम् ॥ ८ ॥

स्वामिन्या श्रूयताम् । इत्थं यत्र तत्राहोरात्रं तन्त्री रणयन् केवलं रसनयैव स्वयं गायन् भक्तांश्च भृशं गापयन् श्रीरासरसिकः पारमहंस्यरासमण्डले निस्त्रपं नरीनृत्यते ।

प्रिये ! एवं पारमहंस्यविहरणेन स्वकर्मोत्थितदेहे यावज्जीवमुषित्वा परमानन्दमनुभवन् । तदन्ते भवति ! श्रीरसिकः आयुषोऽवसाने तेजोमयं निरतिशयसुखं चिच्छक्तिस्वरूपं प्राप्य नानारत्ननिकुरबोद्योतितं विमानमारुह्य श्रीनगरं गच्छति ।

न स पुनरायाति मर्त्यलोके सर्पकञ्चुकवदुज्झति तत्कलेवरम्। श्रुतिरपि ' अहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेत इति ' सदसत्कर्मापि न तं बाधते।

' अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशत ' इति **श्रुतेः**। इह विहरणं तु श्रीपारमहंस्य-धर्मेण नो चेज्जीवत्वापत्तिः। **श्रीवसिष्ठेन** रामायोपदिष्टशिखिध्वजविलसितवत् **श्रीपरागमो**पदिष्टवच्च।

अथवा पूर्णश्रेयथेच्छमपि विलसनम्।

यावद्देहात्मविज्ञान बाध्यते न प्रमाणतः।
प्रामाण्यं कर्मशास्त्राणां तावदेवोपपद्यते ॥ १ ॥
वर्णाश्रमाभिमानेन श्रुतेर्दासो भवेन्नरः।
वर्णाश्रमविहीनस्तु वर्तत्ते श्रुतिमूर्द्धनि ॥ २ ॥

इत्युक्तेः

कार्याऽकार्यं किमपि सततं नैव कर्तृत्वमस्ति
जीवन्मुक्तस्थितिमिह गतो दग्धवस्त्रावभासः।
एवं देहे प्रविशति गते तिष्ठमाने विमुक्तो-
निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः ॥ ३ ॥

**इति श्रीहंसमिट्ठुप्रकाशिते श्रीहंसविलासे रासयोगकथनं नाम द्विपञ्चाशत्तमोल्लासः ॥ २ ॥**

**समासोऽयं श्रीहंसविलासः। श्रीपराशक्तिरुल्लसति ॥**

# श्रीहंसविलासे वाक्योद्धारग्रन्थाः ।

१ अथर्ववेद ।
२ अनङ्गरङ्ग ।
३ अपरोक्षानुभूति ।
४ आगमरहस्यम् ।
५ ऋग्वेद ( आश्वलायन )
६ ऋतुवर्णनम् ।
७ ऐतरेयोपनिषद् ।
८ कपिलगीता ।
९ काठकोपनिषद् ।
१० काणादसूत्रम् ।
११ काव्यदर्पणम् ।
१२ काव्यादर्श ।
१३ कुब्जिकातन्त्रम् ।
१४ कुलचूडामणि ।
१५ कुलप्रकाश ।
१६ कुलागम ।
१७ कुलार्णवतन्त्रम् ।
१८ कौलरहस्यम् ।
१९ गणेशविमर्षिणी ।
२० गौतमसूत्रम् ।
२१ छन्दोमञ्जरी ।
२२ छान्दोग्योपनिषद् ।
२३ जैमिनिसूत्रम् ।
२४ डामरतन्त्रम् ।
२५ तन्त्रराज ।
२६ देवीभागवतम् ।
२७ देवीरहस्यम् ।
२८ निरुक्तम् ।
२९ पद्मपुराणम् ।
३० परमहंसोपनिषद् ।
३१ पातञ्जलसूत्रम् ।
३२ परागमरहस्यम् ।
३३ पारस्करगृह्यसूत्रम् ।
३४ पञ्चीकरणम् ।
३५ प्राकृतच्छन्दोविचिति ।
३६ बृहद्योगवासिष्ठम् ।
३७ बृहदारण्यकोपनिषद् ।
३८ भगवद्गीता ।
३९ भागवतम् ।
४० महानिर्वाणतन्त्रम् ।
४१ महाभारतम् ।
४२ मनुस्मृति ।
४३ माण्डूक्योपनिषद् ।
४४ मार्कण्डेयपुराणम् ।
४५ यजुर्वेद ( माध्यन्दिन. )
४६ याज्ञवल्क्यस्मृति ।
४७ योगवासिष्ठम् ।
४८ योगरसायनम् ।
४९ योगशास्त्रम् ।
५० योगिनीतन्त्रम् ।
५१ रसकौमुदी ।
५२ रसमञ्जरी ।
५३ रहस्यागम ।
५४ रागकल्पद्रुम ।
५५ रागार्णव ।
५६ रामायणम् ।
५७ रुद्रयामलम् ।
५८ ललितात्रिशती ।
५९ ललितासहस्रनाम ।
६० लिङ्गपुराणम् ।
६१ वात्स्यायनसूत्रम् ।
६२ विज्ञाननौका ।
६३ विजयाकल्प. ।
६४ वृन्दावनमाहात्म्यम् ।
६५ वेदस्तुति ।
६६ वेदान्तसूत्रम् ।
६७ शारदातिलकम् ।
६८ शिवरहस्यम् ।
६९ शिवमहिम्नस्तोत्रम् ।
७० शिवागम ।
७१ शिवागमरहस्यम् ।

७२ श्रीनरारम् ।
७३ श्रीपरागम ।
७४ समयाचारतन्त्रम् ।
७५ सामवेद ( कौथुमी )
७६ सामगानम् ।
७७ सङ्गीतकौमुदी ।
७८ सिद्धान्तसार ।
७९ साङ्ख्यसूत्रम् ।
८० सुभगोदय ।
८१ सौदर्यलहरी ।
८२ स्कन्दपुराणम् ।
८३ हठयोगप्रदीपिका ।

# शुद्धिपत्रम् ।

| पृष्ठम् । | पङ्क्ति । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| १ | १६ | तत का० | तत्का० |
| ,, | ,, | स्वय ज्यो० | स्वयज्यो० |
| ,, | ३१ | पराशक्ति | पराशक्ति |
| २ | २ | कश्चिद् | किञ्चिद् |
| ,, | ३ | ०स्थित | ०स्थित |
| ,, | ६ | तदैव | तदेव |
| ,, | ८ | कश्चिद् | किञ्चिद |
| ,, | ९ | तत्व० | तत्त्व० |
| ३ | ३ | ०स्मैशि० | ०स्मै शि० |
| ,, | ९ | ०निष्ठा । | ०निष्ठा |
| ,, | १० | धृत्वा । | वृत्वा |
| ,, | १६ | अस्मत् प्र० | अस्मत्प्र० |
| ,, | २० | ०प्येक० | प्येत० |
| ,, | २१ | मिठेति | मिठुरिति |
| ,, | २३ | मिठ | मिठु |
| ,, | २६ | मिठशु० | मिठुशु० |
| ,, | २७ | मिठो वृत | मिठुर्वृत |
| ,, | १३ | ०स्मत् प्रे० | ०स्मत्प्र० |
| ,, | २८ | ०वर्षवा० | ०वर्ष वा |
| ,, | ,, | त्तस्मि० | तस्मि० |
| ,, | ३३ | मिठ | मिठु |
| ४ | ८ | गर्भौ | गर्भो |
| ,, | १६ | एवं प्राया | एवम्प्राया |
| ,, | ,, | विविघ्न | विघ्ना |
| ,, | २५ | षोडशमे वर्षे | षोडशवर्षीया |
| ,, | ,, | पलित० | गलित० |
| ,, | २६ | द्वादशमे वर्षे | द्वादशवर्षीया |
| ,, | ,, | धारयन्ति | बिभ्रति |
| ५ | १३ | प्रजावन्ते० | प्रजावन्त० |
| ६ | १४ | ०लोभान्त० | ०लोभान्न० |
| ,, | २२ | धम | धर्मा |
| ८ | ३ | कि ल० | किल० |
| ,, | ,, | कान्ता – | कान्ता– |
| ,, | १० | देह य | देहस्य |
| ८ | १७ | मन्यत ॥ | मन्यते ॥ |
| ९ | २ | गृह | गृहे |
| ,, | ४ | आमथा० | आमया० |
| १० | १५ | प्रेयसी । | प्रेयसी– |
| ,, | १८ | त्रिजगत्त्या० | त्रिजगत्या० |
| ,, | ,, | भूमेरू० | भूमेरु० |
| ,, | २९ | तव | तत्र |
| ,, | २२ | ०मन्घ० | ०मन्ध० |
| ,, | २७ | सूचीमुख ८ | सूचीमुख ७ |
| ११ | १६ | ययैहै० | ययेहै० |
| ,, | ३१ | ०रुह्यमाना | ०रूह्यमाना |
| ,, | ,, | स्वाधेन | स्वाधेन |
| ,, | ३४ | वैश्वगई० | वै श्वगई० |
| १२ | ९ | ०रोपिता | ०रोपितो |
| ,, | ११ | ०कम्य | ०कम्या |
| १३ | २ | लिङ्ग छि० | लिङ्गच्छि० |
| ,, | ६ | ०योर्गत्ते | ०योर्गर्त्ते |
| ,, | १२ | ०शिरोऽवर | ०शिरोधर |
| ,, | १८ | ऋषि० | ऋषि० |
| ,, | २२ | येनेद्दशी | येनेदृशी |
| ,, | ,, | गतिरद्द० | गतिरद० |
| १४ | १ | येनेद्दशी | येनेदृशी |
| १५ | १० | पर्वा० | पूर्वा० |
| ,, | ११ | ०मदीया दी० | ०मदीयादी० |
| ,, | १६ | अमू | अमी |
| ,, | १९ | ०त्युद्वदतो | ०त्युद्वदनो |
| ,, | २० | ०पाज्य | ०पार्ज्य |
| ,, | २२ | ०मौह्व० | ०मौर्व० |
| ,, | २३ | ०द्दिष्टे | ०दिष्टे |
| ,, | ३७ | चेतस्त० | चेत स्त० |
| १६ | २ | वयस्थे० | वय स्थे० |
| ,, | ८ | विषयी । | विषयी । |
| ,, | १५ | ०द्रियन्ते ! | द्रियन्ते । |
| ,, | १९ | ०मवर० | ०मवट० |

| पृष्ठम् । | पङ्क्ति । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ३७ | २ | ०न्मय | ०न्मयम् |
| ,, | ७ | उषर० | ऊषर० |
| ,, | ,, | ०वद्दष० | ०वद् दष० |
| ,, | २४ | कश्चिद्द० | कश्चिद् द० |
| ,, | २८ | ०भेद | ०भेद ? |
| ३८ | ६ | सकलाभि० | सकलाभी० |
| ,, | ९ | ०वारिघे | ०वारिधे |
| ,, | १७ | ०रूध्यात | ०रुध्यात् |
| ३९ | १० | फलमत् | फलवत् |
| ,, | १५ | ईषद् | ईषच् |
| ,, | १६ | तावत् | तावच् |
| ,, | ,, | ०पेयोक्य० | पेयोक्य० |
| ,, | १७ | ०हवि सं० | ०हवि स० |
| ,, | ,, | ०होत्र्यु० | होत्रु० |
| ,, | ,, | ०र्येजू ऋ० | ०र्येजुर्ऋ० |
| ,, | २१ | ०मन सौ० | ०मन सौ० |
| ,, | २९ | ०सत्रम् | ०सूत्रम् |
| ४० | ८ | ०थर्वण | ०थर्वणे |
| ,, | १० | ०ष्टत्वं | ०ष्टत्त्वम् |
| ,, | १३ | ०गृह्वति | ०गृह्णन्ति |
| ,, | १५ | ०क्षत । | ०क्षतम् । |
| ,, | ,, | सिञ्चता । | सिञ्चनम् । |
| ,, | ,, | दोग्ध्रा | दोग्ध्री |
| ,, | २४ | ह | हे |
| ,, | ,, | यता | यतो |
| ,, | २७ | ०त्विज । | ०त्विजम् । |
| ,, | २९ | कदि शा | कीदृशम् । |
| ,, | ३२ | च श्रयते | च श्रूयते |
| ,, | ३३ | कीदृश । | कीदृशम् । |
| ,, | ,, | रत्नाना अ० | रत्नानाम० |
| ४१ | १ | ०भीष्टये | ०भिष्टय |
| ,, | ४ | किमर्थ अभी० | किमर्थमभि० |
| ,, | ,, | सयो | शयो |
| ,, | ५ | ०थर्वदो० | ०थर्ववेदो० |
| ,, | ३१ | ०ङ्काना | ०ह्वाना |
| ,, | ३२ | एकं अ० | एकम० |
| ४१ | ३२ | ऊर्मि० | ओमि० |
| ,, | ३३ | बहुप्रकाश । | बहुप्रकारा । |
| ४२ | ६ | ०दर । | ०दरम् । |
| ,, | १७ | किभूता | किम्भूता |
| ,, | २९ | त्वद्द० | त्वद्ध० |
| ,, | ३१ | मदर्थं | मदर्थे |
| ४३ | ६ | षष्टयर्थे | षष्ठयर्थे |
| ,, | १८ | कर्मजितो | कर्मचितो |
| ,, | ,, | पुण्यजितो | पुण्यचितो |
| ,, | २८ | तत्व० | तत्त्व० |
| ४४ | १४ | ०ज्ञतात्या० | ०ज्ञता त्या० |
| ,, | १८ | ०चापित | ०चायित |
| ,, | १९ | ०गोमघ० | ०गोमय० |
| ,, | ,, | ०बाधो० | बाधा० |
| ४५ | ६ | मारूतो | मारुतो |
| ,, | १३ | नाडी० | नाडि० |
| ,, | २१ | दृषयत्प्र० | दृषत्प्र० |
| ,, | २२ | स्थेयं | स्थेयम् । |
| ,, | २० | तथा सीत्कार शीतली | संत्कारी शीतली तथा |
| ४६ | १ | वायो कु० | बपु कु० |
| ,, | १० | रुद्धन्ती (?) | रुधन्त्री |
| ,, | ३० | सम्भूता वह्नि गो० | सम्भूतवह्निगो० |
| ,, | ३१ | चन्द्रात्त्व० | चन्द्रात्म० |
| ,, | ,, | यत्सार | य मार |
| ४७ | ४ | ०यिनीं । | ०यिनीम् । |
| ,, | ५ | एवमाघ० | एवमाद्य० |
| ,, | १३ | स्वसकाश० | स्वसकाशं० |
| ,, | १४ | तूर्य० | तुर्य० |
| ,, | १८ | तूर्य | तुर्य |
| ,, | २० | तूर्या० | तुर्या० |
| ,, | २५ | ०च्छुन्य | ०च्छून्य |
| ४८ | ११ | ०लेचने | ०लोचन |
| ,, | २७ | ०कुणके | ०कुणपे |
| ४९ | ८ | नादको हि स० | नादकोटिस० |

| पृष्ठम् । | पङ्क्ति । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ४९ | १२ | काष्ट० | काष्ठ० |
| ,, | १६ | वायु | वायु |
| ,, | ,, | प्रयत्नत । | प्रयत्नात् । |
| ,, | २३ | ०बर्जिता । | ०वर्जितान् । |
| ,, | २४ | ०रुद्धं क्रिय० | ०रुद्धक्रिय० |
| ,, | ३१ | श्रूयता । | श्रूयताम् । |
| ,, | ,, | १ लघिमा २ | १ महिमा २ |
| ,, | ,, | महिमा ३ | लघिमा ३ |
| ,, | ,, | प्राप्ति ४ | गरिमा ४ |
| ,, | ३२ | प्राकाम्य ५ | प्राप्ति ५ |
| ,, | ,, | ईशिता ६ | प्राकाम्य ६ |
| ,, | ,, | वशिता ७ | ईशिता ७ वशिता ८ |
| ५० | २६ | शुक्कानि | शुक्तानि |
| ५१ | १ | ०सशाता | ०सशान्ता |
| ,, | २१ | ०पीदक् ल० | ०पीदृग्ल० |
| ,, | २३ | ०त्स्रार्थ शा० | ०त्स्वाध्यायशा० |
| ,, | २६ | पति । | पति । |
| ५२ | ३ | ०रुपलब्धि० | ०रुपलब्ध्यनुपलब्ध्य० |
| ,, | १९ | ०स्थाना ? | ०स्थानानि |
| ,, | २० | ०रुक्तमनुभा० | ०रुक्तमननुभा० |
| ,, | २१ | ०ज्यापेक्षणं | ०ज्योपेक्षणं |
| ,, | ,, | ०योज्यायोगो० | ०योज्यानुयोगो० |
| ५३ | १६ | ०दुस्थो | ०दु स्थो |
| ,, | २२ | श्रीमतान्मु० | ०श्रीमताम्मु० |
| ५४ | २३ | भोक्री | भोक्त्री |
| ,, | २६ | विद्ययाऽ | विद्यया |
| ,, | २७ | सोऽ | सो |
| ,, | २९ | अथा | यथा |
| ,, | ३१ | बध्यत | बध्यते |
| ५५ | १ | ०विष्टाया० | ०धिष्ठाया० |
| ,, | २८ | ०मणिका चन्द्रा० | ०मणिकाचन्द्रा० |
| ,, | २९ | मूली० | मूली० |
| ,, | ३० | स्त्री पुल्लि० | ०स्त्रीपुंल्लि० |
| ५६ | ६ | ०कुड वश० | ०कुडवश० |
| ,, | १७ | अमू | अमी |
| ५६ | १८ | ऽर्पितवन्त | ऽर्पितवन्त |
| ,, | २३ | ०त्र्याद्दृशु० | ०त्र्यादृशु० |
| ,, | २७ | कश्चि० | किञ्चि० |
| ,, | २८ | निरु० | निरू० |
| ,, | २९ | ०मुत्थित | ०मुत्थित |
| ,, | ३० | आवरणं शक्त्या | आवरणशक्त्या |
| ,, | ३१ | ०स्वरुप० | ०स्वरूप० |
| ,, | ३२ | समायेति | सा मायेति |
| ,, | ,, | ०माणेन | ०माणे न |
| ५७ | ३ | ०मत्पन्तालिक्तम् । | ०मत्यन्तालीकम् । |
| ,, | ५ | ०विष्टितो | ०विष्ठितो |
| ,, | ६ | प्रवि० | प्रावि० |
| ,, | २० | अत्र स्त्री | अत्र स्त्री- |
| ,, | ,, | यत तो । | यदतो |
| ,, | ,, | ज्ञानवने | ज्ञानघने |
| , | २४ | ०धिष्टित० | ०धिष्ठित० |
| ,, | २५ | ह या० | ह्या० |
| ,, | २८ | प्रियो | प्रिये |
| ,, | ३२ | भूयिष्टो० | भूयिष्ठो० |
| ,, | ३४ | क्वचिद्विष्ट० | क्वचिद् द्राघिष्ठ० |
| ५८ | २ | पृष्टव्यम् | प्रष्टव्यम् |
| ,, | ६ | ०ध्यात्ता० | ०द्धयात्ता० |
| ,, | ,, | ०रुहा० | ०रूहा० |
| ,, | ७ | ०ज्ञसं । | ०ज्ञसम्० |
| ,, | ८ | प्रिय | ०प्रिय - |
| ,, | ९ | ०वै महा० | ०यैर्महा० |
| ,, | १५ | विघना० | विविधना० |
| ,, | २३ | स्वेतो(?) त्प० | स्वेनोत्प० |
| ,, | ३० | हसी | हंसी- |
| ,, | ३१ | श्रीहंस | श्रीहस'- |
| ,, | ,, | ०गत्येत० | ०गत्यैत० |
| ५९ | २ | ०परिक्षा० | ०परीक्षा० |
| ,, | ३ | वलाने० | वल्गने० |
| ,, | ५ | समूत (?) | समेत |
| ,, | ७ | ०प्यना लौ० | ०प्यनालो० |

| पृष्ठम्। | पङ्क्ति। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ५९ | ९ | ०वार्षिकी | ०वार्षिकी |
| ,, | १२ | ०मयेक्ष० | ०मपेक्ष० |
| ,, | ,, | कृत्रिम | कृत्रिम |
| ,, | १३ | ०वहलि० | ०वहेलि० |
| ,, | १४ | नेदिष्ट० | नेदिष्ठ० |
| ,, | १५ | ०नुदन्पति | ०नुदन्यति |
| ,, | १७ | तस्यै | तस्मै |
| ,, | २० | न्युष्प | न्युष्य |
| ,, | २७ | ०दशनाऽपि तेन | ०दशनायितेन |
| ,, | २८ | आकृष्ट | आकुष्ट |
| ,, | २९ | त्वद | त्वदङ्ग |
| ,, | ३४ | ०लद्शा | ०लद्दशा |
| ६० | १ | कयाचित् | कयाचिन् |
| ,, | ,, | त्वदृष्टि | त्वद्दृष्टि |
| ,, | ५ | ०श्चैतद्वय | ०श्चैतद् द्वय |
| ,, | ,, | क्षुतृडा० | क्षुत्तृडा० |
| , | ६ | या चिद् | कयाचिद् |
| ,, | ,, | ०ऽसद्रुपोऽ० | ऽसद्रूपोऽ० |
| ,, | ७ | ०वत्त्वायि | ०वत्त्वयि |
| ,, | १३ | ०यविघा० | ०प्यविद्या० |
| ,, | २३ | श्रीहस | श्रीहंस – |
| ,, | ३२ | ०त्यबला पान्त्यै० | ०त्यपलापान्तै० |
| ,, | ,, | ०कल्पिते | ०कल्पितै |
| ,, | ३३ | आरो | भारो |
| ,, | ,, | शास्रा | शास्त्र |
| ,, | ,, | आरो | भारो |
| ,, | ३४ | ०त्मन्चिदो | ०त्मविदो |
| ६१ | १ | ०रस्थिरे० | ०र स्थिरे० |
| ,, | ३ | ०रूपे | ०रूप |
| ,, | ४ | दुर्दष्टि | दुर्दृष्टि |
| ,, | १४ | शान्तहं | शान्तेह |
| ,, | १५ | ०विनी | ०विनी |
| ,, | ३१ | कि | कि |
| ,, | ३५ | जगत्रये | जगत्त्रये |
| ६२ | ६ | ०रसद० | ०रस्तृ० |
| ,, | ९ | सूक्ष्मा० | सूक्ष्म० |
| ,, | १४ | तद्धि द्वि | तद्विद्धि |
| ,, | १८ | वह्ले ऋ० | वह्न्यर्क |

| पृष्ठम्। | पङ्क्ति। | अशुद्धम्। | शुद्धम्। |
|---|---|---|---|
| ६२ | १९ | ०वरै० | ०वैरे० |
| ,, | २१ | यस्मात्व० | यस्मात्त्व० |
| ,, | ,, | ०दविघे० | ०दविद्ये० |
| ,, | २२ | व्हेत | दहेत् |
| ,, | २३ | घर्षा द्व० | घर्षाद् द्व० |
| ,, | ३१ | हिते विद्या तत्व० | हि ते विद्यात्तत्त्व० |
| ,, | ३४ | ०न्मदव च० | ०न्मद्वच० |
| ६३ | ३० | विद्यतम् | विद्यताम् |
| ६४ | ३ | ०न्मौना नृ० | ०न्मौनाद्द० |
| ,, | ८ | ०ष्यभानु० | ०ष्यन्नानु० |

अस्मिन् ६४ तमे पृष्ठे प्रथमपङ्क्तौ 'मन'। इत्यत परं '५८' अङ्को निवेशनीय । तत परं 'पद्मम्' इत्यत पर '५९' अङ्को निवेश्य । एव ७६ पर्यन्ता सर्वेऽङ्का श्लोकार्द्धस्थाने निवेश्या येन वाक्यभङ्गपरिहार स्यादिति ॥

| | | | |
|---|---|---|---|
| ७८ | २५ | प | पञ्च |
| ११० | २९ | ०वाद्य प० | ०वायुप० |
| ११२ | ११ | शद्ध० | शब्द० |
| १२५ | ३८ | अमताब्धौ | अमृताब्धौ |
| १३८ | १७ | अश्रत्वा | अश्रुत्वा |
| १६२ | ३१ | द्वय | द्वयं |
| १७६ | ३ | ०ववश्या० | ०वैवश्या० |
| १८८ | ६ | वसुत्ह० ष्टत्का० | वसुह० ष्टका० |
| १९८ | ३२ | श्रयते | श्रूयते |
| १९९ | ३ | वष्णवा० | वैष्णवा० |
| २०२ | ३१ | ०तिष्टन्। | ०तिष्ठत्। |
| २१५ | ९ | भीट्रा० | भीद्रा० |
| २२५ | २ | प्रतीसीरा | प्रतिसीरा |
| २२७ | २० | सन्निवश्थ | सन्निवेश्य |
| २२९ | २ | श्री हस्य० | श्रीरहस्य० |
| २३१ | २१ | छन्दाल० | छन्दोल० |
| २३७ | ३२ | ०ग कारदश। | ०गकारैर्दश। |
| २४१ | २१ | श्रीहंस– | श्रीहस – |
| २६८ | २० | प्राशत्यात् | प्राशस्त्यात् |
| ,, | ,, | ०रनकरा० | ०रनेकैरा० |
| २७६ | ३२ | बभ्रमीति | बम्भ्रमीति |
| ३२० | ६ | काचत्तु | केचित्तु |
| ३१७ | २९ | शर्कशा० | सर्करा० |